वाचाम्भ राजसगुणलक्षणम् ॥ आरम्भरुचिताफलार्थमसमीनुष्ठानशीलता ॥ अपिच ॥ येनास्मिन् कर्मणालोकेख्यातिमिच्छति पुष्कलाम् । नचशोचत्यसम्पत्तौतद्विज्ञेयन्तुराजसमिति ॥ रजसोयम् । अण् ॥

राजसदनम् । न॰ राजगृहे । सौधे ॥ राज्ञः सदनम् । योग्यत्वात् ॥ यथा । सदनानांराज्ञा । राजदन्तादिः ॥ तद्दृष्टान्तयथा । सौधोऽस्त्री राजसदनमुपकार्योपकारिका । स्वस्तिकः सर्वतोभद्रोनन्द्यावर्त्तादयोपिच । विच्छन्दकः प्रभेदाहि भवन्तीश्वरसद्मनाम् ॥

राजसधनम् । न॰ धनविशेषे ॥ यथा । कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः । कृतोपकारादाप्तञ्च राजसं समुदाहृतम् ॥ चतुर्व्यासीय ॥

राजसभा । स्त्री॰ नृपतिसमाजे ॥ राज्ञः सभा । सभाराजेत्यपराज पर्यायस्यैवपक्षणाद्रक्लीवत्वम् ॥

राजसयक्षः । पुं॰ सकामानामयज्ञे ॥ अभिसन्धायतुफलं दम्भार्थमपिचैव यत् । इज्यतेभरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥

राजसर्प्पः । पुं॰ सर्पविशेषे । भुजङ्गभोजिनि ॥

राजसर्षपः । पुं॰ राजिकायाम् । आसुर्याम् ॥ तिस्रभिर्लिक्षाभिः परिमिते ॥

राजसायुज्यम् । न॰ राजत्वे । राज्ञः सायुज्यम् ॥

राजसारसः । पुं॰ मयूरे ॥

राजसाहङ्कारः । पुं॰ राजसाहङ्कारे । इन्द्रियाणांकारणे ॥

राजसाहारः । पुं॰ रजोगुणिनामभोजने ॥ यथा । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥

राजसी । स्त्री॰ दुर्गायाम् । रजोगुणसम्बन्धिन्याम् ॥

राजसूयः । पुं॰ राज्ञाकर्त्तव्ये यज्ञविशेषे । नृपाध्वरे । क्रतुराजे । क्रतूत्तमे । राज्ञासोतव्योऽभिषवद्वारानिष्पादयितव्यः । षुञ् अभिषवे । यद्वा । लतात्मकः सोमोराजासूयते कण्डतेऽत्र अधिकरणेक्यप् । राजसूयसूर्य्येत्यादिना निपातनाद्दीर्घः ॥

राजसूयकी । स्त्री॰ राजसूयस्य दक्षिणायाम् ॥

राजस्कन्धः । पुं॰ घोटके ॥

राजस्वम् । न॰ करे । राजग्राह्यभागे ॥

राजस्वर्णः । पुं॰ राजधुस्तूरके ।

रात्रौजागरणकर्त्तरि ॥

रात्रिजागरदः। पुं॰ मशके ॥

रात्रिञ्चरः। पुं॰ यातुधाने। राक्षसे ॥ रात्रौचरति। चरेटः। रात्रेः कृतिविभाषेतिममुम्। त्रि॰ रात्रौगमनकर्त्तरि ॥

रात्रिञ्चरी। स्त्री॰ राक्षसाम् ॥

रात्रिन्दिवम्। अ॰ अहोरात्रयोः ॥ रात्रौचदिवाच। अचतुरेत्यादिना ऽधिकरणार्थयोर्द्वन्द्वसमासान्तो निपातितः। अव्ययात्मत्वादव्ययम् ॥

रात्रिपुष्पम्। न॰ उत्पले ॥

रात्रिमटः। पुं॰ राक्षसे ॥ अटति। अटगतौ। पचाद्यच्। सप्तमीतियोगविभागात्समासः ॥ रात्रौअटतिवा। रात्रेःकृतिविभाषेतिमुम् ॥

रात्रिमणिः। पुं॰ चन्द्रे ॥ रात्रेर्मणिरिव ॥

रात्रिवासः। पुं॰ अन्धकारे ॥ रात्रौवासोऽस्य ॥

रात्रिवासः। न॰ रात्रौशयनकाली नपरिधेयवस्त्रे ॥ यथाशयनस्थान्यकारेणुरात्रिवासोदिमेतथा। नाना स्वरकुवेशश्च यज्ञेवैकुष्कमोचनम् ॥

रात्रिविगमः। पुं॰ प्रभाते ॥ रात्रेर्विगमोऽत्र

रात्रिविश्लेषगामी। पुं॰ चक्रवाके ॥

रात्रिवेदः। पुं॰ कुक्कुटे ॥

रात्रिवेदी। पुं॰ कुक्कुटे ॥

रात्रिहासः। पुं॰ श्वेतोत्पले ॥

रात्रिहिण्डकः। पुं॰ अन्तःपुररक्षके ॥

रात्री। स्त्री॰ निशायाम्। रात्री ॥ कृदिकारादक्तिनःविभाषेतिङीष् ॥

रात्री। अ॰ निशि ॥

रात्र्यन्धः। त्रि॰ रात्रौदृष्टिहीनेनरे। रक्तस्रा॰ द्र॰ भा॰॥ तन्नामकौषधयथा। देवदारीसर्वैचूर्णमनामूत्रेण भावयेत्। एकविंशतिवारमथितौ तैनचाञ्जयेत्। रात्र्यन्धरामपटलानश्चेदितिविनिश्चयः ॥ कृतिगारुडे ॥ १८८ ॥ अध्यायः ॥ काकादौ ॥

राद्धः। त्रि॰ पक्के। सिद्धे ॥ लब्धे ॥ राध्यति। राध॰ ॥ राधेरनिटःक्तः ॥

राद्धान्तः। पुं॰ सिद्धान्ते ॥ राद्धः सिद्धोन्तोनिश्चयोयत्रसिन् ॥

राधः। पुं॰ वैशाखमासे। माधवे ॥ राधा॰विशाखा॰तद्वतीपौर्णमासी॰ राधी। साऽस्मिन्नस्ति। साऽस्मिन्पौर्णमासीत्यण् ॥

राधनम्। न॰ साधने ॥ प्राप्तौ ॥ तोषे ॥

राधना। स्त्री॰ भाषणे ॥

राधरङ्क : । पुं॰ सुनासीरे । सीर-
के । घनोपले । शीकरे । इ॰
मेदिनी ॥

राधरङ्कु : । पुं॰ राधरङ्कार्थे । इति
हेमचन्द्र : ॥

राध : । न॰ ऐश्वर्ये ॥

राधा स्त्री॰ गोपीविशेषे । तस्याना
मानियथा । राधारासेश्वरीरासवा
सिनीरसिकेश्वरी । कृष्णप्राणाधि
काकृष्णप्रियाकृष्णस्वरूपिणी । कृष्ण
वामाङ्गसम्भूतापरमानन्दरूपिणी ।
कृष्णावृन्दावनीवृन्दावृन्दावनविनो
दिनी ॥ चन्द्रावतीचन्द्रकान्ताश
तचन्द्रनिभानना । नामान्येतानि
साराणितेषामभ्यन्तराणिचेति ॥
राधेत्येवञ्चसंसिद्धाराकारोदानवा
चक : । स्वयंनिर्वाणदात्रीयासारा
धापरिकीर्त्तिता इतिब्रह्मवैवर्त्तपु
राणम् । राधोतिसकलान्कामांस्त
स्तेनराधेतिकीर्त्तितेतिदेवीभागवत
म् । राध्नोतिसाधयतीत्यर्थ : ॥
महालक्ष्म्याम् ॥ यथा । यन्माय
यामोहिताश्चब्रह्मविष्णुशिवादय : ।
वैध्याशास्तांमहालक्ष्मीपरांराधांव
दन्तिते ॥ यदंशाद्भवलक्ष्मी :
प्रियानारायणस्यच ॥ धन्विनांवि
घभेदे । वेधविशेषे ॥ विशाखान
क्षत्रे । आमलक्याम् ॥ विष्णुक्रा
न्तायाम् ॥ विद्युति ॥ राधोति

कार्य्यमनया । राधसंसिद्धौ । गुरि
श्चहलइत्यकार : ॥ यद्वा । राधय
ति । अच् । टाप् ॥

राधाकान्त : । पुं॰ श्रीकृष्णे ॥

राधाकृष्ण : । पुं॰ राधाऽविनाभूत
कृष्णे । श्रीकृष्णे । द्विभुजे । मुरली
धरे ॥ राधानामोच्चारणानन्तरंकृ
ष्णनामोच्चारणेविधिर्यथा । नारद
उवाच । आदौराधांसमुच्चार्यपश्चा
त्कृष्णंविदुर्बुधा : ॥ निमित्तम
स्यांभक्तंवदभक्तजनप्रिय ॥ श्रीना
रायणउवाच । निमित्तमस्यविवि
धंकथयामिनिशामय । जगन्माता
चप्रकृति : पुरुषश्चजगत्पिता ॥ ग
रीयसीतिजगतांमाताशतगुणै :
पितु : । राधाकृष्णेतिगौरीशेत्येव
शब्द : श्रुतौश्रुत : ॥ कृष्णराधे
शगौरीतिलोकेनचकदाश्रुत : ।
प्रसीदरोहिणीचन्द्रगृहाणार्घ्यमिदं
मम । गृहाणार्घ्यंमयादत्तंसंज्ञया
सहभास्कर । प्रसीदकमलाकान्त
गृहाणममपूजनम् ॥ इतिदृष्टंसा
मवेदेकौथुमेमुनिसत्तम । शब्दो
च्चारणादेवस्फीतोभवतिमाधव :
। शब्दोच्चारत : पश्चाद्यावत्यैव
ससम्भ्रम : । आदौपुरुषमुच्चार्य
पश्चात्प्रकृतिमुच्चरेत् । सभवेन्मा
तृगामीचवेदातिक्रमणेमुने । इ॰
ब्र॰ वै॰ पु॰ ॥

तत्खरदूषणं जयेत् ॥ दीपतेतुथा वत्कानुमानतः सद्यपूवजठराग्नि-दीपनः। रोचकः कफकुलान्तका रक्त श्वासकासवसिजन्तुनाशनः॥ पारदभागः१ विषभागः१लवङ्गभागः १ गन्धकभागः १ मरिचभागाः ८ जातीफलभागौ २ रामबाणोरसोऽभीयं ॥ रामस्यशरे। रामशरे ॥

रामवीणा । स्त्री॰ वीणाप्रभेदे ॥

रामशर : । पुं॰ शरतृणभेदे । रामकाण्डे ॥

रामशीतला । स्त्री॰ आरामशीतलायाम् ॥

रामसख : । पुं॰ सुग्रीवे ॥ रामस्यसखा । टच् ॥

रामसेनक : । पुं॰ भूनिम्बे ॥ कटफले ॥

रामह्रद : । पुं॰ तीर्थविशेषे ॥

रामा । स्त्री॰ उत्कृष्टयोषिति । रमते गीतकलाभिरिति॰ रमयतिपुरुषमितिवापुरुषरमणकारिण्यामबलायाम् । रम॰ । ज्वलादित्वाणः ॥ हिङ्गुलिन्याम् । कष्टकार्याम् ॥ गृहकन्यायाम् ॥ आरामशीतलायाम् ॥ अशोके ॥ गोरोचनायाम् ॥ गैरिके ॥ हिंगुले ॥

रामानुजः । पुं॰ लक्ष्मणे ॥ श्रीकृष्णे ॥ आधुनिकवैष्णवसम्प्रदाये ॥ न॰ तिलकविशेषे ॥ यदूर्ध्वपुण्ड्रं तिलकं शोभनंतन्मनोहरम् । तन्मध्यपीतरेखंचश्रीमद्रामानुजंविदुः ॥

रामायणम् । न॰ वाल्मीकीयेमहाकाव्ये । द्वात्रिंशत्सहस्रात्मकेमहदाख्याने । रामेणरावणवधाख्ये । कुशलवौपदिष्टचतुर्विंशतिसहस्रश्लोकसंख्याकमहाकाव्ये ॥ यथा । प्राप्तराज्यस्यरामस्यवाल्मीकिर्भगवानृषिः । चकारचरितंकृत्स्नं विचित्रपदमर्थवत् ॥ चतुर्विंशत्सहस्राणिश्लोकानामुक्तवानृषिः । तथासर्गशतान्पंचषट्काण्डानितथोत्तरम् । शतकोटिसङ्ख्यमपि । चरितंरघुनाथस्यशतकोटिप्रविस्तरम् । एकैकमक्षरंपुंसांमहापातकनाशनम् ॥ तत्तु सम्पूर्णब्रह्मलोकेस्थितमित्यैतिह्यम् ॥ रामस्यायनंचरितम् । पूर्वपदादितिणत्वम् ॥

रामालिङ्गनकाम : । पुं॰ रक्ताम्लाने ॥

रामावचलीयम : । पुं॰ चक्रवाके ॥

रामावरज : । पुं॰ लक्ष्मणे ॥ श्रीकृष्णे ॥

रामिल : । पुं॰ रमणे ॥ कामे ॥

राम्भ । पुं॰ व्रतिनोवैणवेदण्डे ॥ रम्भस्यवेणोर्विकारः । पलाशादिभ्योवेत्यण् ॥

रायभाटी । स्त्री॰ वाचीव॰ दू॰ गौ॰ प्र॰ । नदीस्रोतोविशेषे ॥

रायस्पोषः । पुं॰ धनपुष्टौ ॥ रायो धनस्य पोषः । अलुक्समासः । छान्दसो विसर्गस्य सकारः ॥

रालः । पुं॰ सर्जरसप्रसिद्धे॰ यक्षधूपे ॥ अस्य नामानि गुणाश्च यथा । रालस्तु सालनिर्यासस्तथा सर्जरसः स्मृतः । देवधूपो यक्षधूपस्तथा सर्वरसश्च सः ॥ रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत् । दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः ॥ ग्रहभग्नाग्निदग्धांशशूलातीसारनाशनः ॥

रालकार्य्यः । पुं॰ शालद्रुमे ॥

रावः । पुं॰ शब्दे । ध्वनौ ॥ रव अण् । रु शब्दे । भावे घञ् ॥

रावणः । पुं॰ लङ्केश्वरे । दशग्रीवे । पौलस्त्ये । षड्ग्रीवे । रावणो लोकरावणादिति न्यायात्॰ रावयति । रु॰ । नन्द्यादित्वाल्ल्युः । तदुक्तं सुन्दरकाण्डे । यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यसि ॥ यद्वा । विश्रवसोऽपत्यम् । शिवादिभ्य॰ विश्रवसो विश्रवणरवणौ यावादेशौ निपातितौ॰ अण् च ॥

रावणगङ्गा । स्त्री॰ सिंहलदेशस्थनदीविशेषे । येतु रावणगङ्गायां जायन्ते कुरुविन्दकाः । पद्मरागोपमं रागं बिभ्राणाः स्फुटार्चिषः ॥



रावणारिः । पुं॰ श्रीरामे ॥ रावणस्यारिः ॥

रावणिः । पुं॰ रावणस्य ज्येष्ठपुत्रे । इन्द्रजिति ॥ अन्यात्ये रावणकुमारे । रावणस्यापत्यम् । अत इञ् ॥

राशिः । पुं॰ पुञ्जे । उत्करे । कूटे । धान्यादिसमूहे ॥ मेषादिरूपे ज्योतिश्चक्रस्य द्वादशांशे ॥ तस्य संस्थानं यथा । विषुवत्क्रान्तिवर्त्म्यास्पूर्वभागस्थिताश्चिराः । मेषाद्याः राशयः क्रान्तिवलयः पूर्वदिक्क्रमात् ॥ ते यथा । मेषो वृषो मिथुनं कर्कटः सिंह एव च ॥ कन्या तुलाऽथ वृश्चिकश्च धनुर्मकर एव च ॥ कुम्भो मीनश्च विज्ञेया राशयो द्वादशैव ते ॥ रश्यते॰ रशति वा । रशद्रहिरडौ चाधातुः स्वनार्थे॰ । बाहुलकादिञ् । श्रीजन्मादप्यमूर्वा ॥ यथा । अश्रुते । अशूव्याप्तौ । अभिपथ्यात्युडायलुकौ चेति॰ उप्॰ धातोरुडागमश्च ॥ गणिती ॥

राशिचक्रम् । न॰ मेषादिद्वादशराश्यादियुक्तचक्रे । भचक्रे । ज्योतिषचक्रे ॥ सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगम् । तदर्कांशैरमेषाद्राशिभिर्नवभांचरणाङ्कितः ॥ तद्विवरणं यथा । भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः । पर्येत्यजस्रं तन्नद्वा ग्रहकक्षायथाक्रमम् ॥ उप

रिक्षस्सप्तम्वतीकक्षास्याधः स्थित श्च । मन्त्याकक्षयाभागमन्दान्तो ल्पास्तयाल्पया ॥ कालेनाल्पेन भगणं भुङ्क्तेऽल्पममयाश्रितः । य ह : कालेनमहतामण्डलेमहतिभ्र मन् ॥ स्वऽल्पयातुबहून् भुङ्क्ते भगणान् शीतदीधितिः । महत्या कक्षयागच्छन् ततः स्वल्पं शनैश्च रः ॥ मन्दादधः क्रमेणस्युश्चतुर्था दिवसाधिपाः । वर्षाधिपतयस्तद्व त्तृतीयाः परिकीर्त्तिताः ॥ ऊर्द्ध्वक्रमेणशशिनोमासानामधिपाः स्मृताः ॥ होरेशाः सूर्य्यतनयाद धोधः क्रमशस्तथा । भवेद्भकक्षा तिग्मांशोर्भ्रमणं षष्टिताडितम् । सर्व्वोपरिष्टाद्भ्रमति योजनैस्तैर्भ मण्डलम् ॥ तत्कक्षाक्रममाह । ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभि धीयते । तन्मध्ये भ्रमणं भानामधो ध : क्रमशस्तथा ॥ मन्दामरेज्यभू पुत्रसूर्य्यशुक्रेन्दुजेन्दवः । परिभ्रम न्त्यधोधः स्थाः सिद्धविद्याधराघ नाः ॥ रविर्मासं निशानाथः सपा दद्दिवसद्वयम् । पक्षत्रयं भूमिपुत्रो बुधोऽष्टादशवासरान् ॥ वर्षमेकं सु राचार्य्यश्चाष्टाविंशदिनं भृगुः । शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्ध वत्सरम् ॥ एवं प्रमाणात्सकलाः स्वराशिं भुञ्जतेग्रहाः ॥ इतिराशि भोग : ॥

राशिविभागः । पुं॰ अश्विन्यादिन क्षत्रैर्मेषादीनां विभजने ॥ यथा । सपादद्वयनक्षत्रैरश्विन्यादिभिरेवच । राशयः कथितास्तेमेषादिद्वाद शक्रमात् ॥ तथाहि । अश्विनीभर णीकृत्तिकापादो मेषः १ । कृत्ति काशेषपादत्रयं रोहिणीमृगशिरोऽर्द्धं- वृषः २ । मृगशिरः शेषार्द्धमार्द्रा पुनर्वसुपादत्रयं मिथुनम् ३ । पुन- र्वसुशेषपादेकंपुष्याश्लेषाकर्कटः ४ । मघापूर्वफल्गुन्युत्तरफल्गुनीप्र- थमपादः सिंहः ५ । उत्तरफल्गुनी शेषपादत्रयंहस्ताचित्रार्द्धंकन्या ६ । चित्राशेषार्द्धं स्वातीविशाखापाद त्रयंतुला ७ । विशाखाशेषैकपादो ऽनुराधाज्येष्ठावृश्चिकः ८ । मूलं पूर्वाषाढोत्तराषाढाप्रथमपादोधनुः ९ । उत्तराषाढाशेषपादत्रयश्रवणा धनिष्ठार्द्धं मकरः १० । धनि ष्ठाशेषार्द्धशतभिषापूर्वभाद्रपाद त्रयंकुम्भः ११ । पूर्वभाद्रशेषपाद उत्तरभाद्ररेवतीमीनराशि १२ रिति ॥ उक्तञ्च । सप्तविंशतिभि र्ज्योतिश्चक्रं स्तिमितवायुगम् । तद ष्टांशोभवेद्राशिर्नवर्क्षचरणाङ्कितइ- ति ॥

राष्ट्रः । पुं॰ न॰ उपवर्त्तने । चक्रे । नीवृति । देशे । विषये ॥ उपद्रवे

॥ राजति । राजृ० । ष्ट्रन् । इत्यु
णादिः ॥

राष्ट्रनिवासी । त्रि० जानपदे । देश
वासिनि ॥

राष्ट्रिका । स्त्री० कण्टकारिकायाम्
॥ राष्ट्रमस्त्यस्याः । अतइनिठनौ
इतिठन् ॥

राष्ट्रियः । पुं० नाट्योक्त्याराजश्याले
॥ राष्ट्रेऽधिकृतः । राष्ट्रावारपारा
द्घखाविति घः । घस्येयादेशः ॥

राष्ट्रीयः । पुं० राष्ट्रिये ॥ त्रि० राष्ट्र
सम्बन्धिनि ॥

रासः । पुं० कोलाहले ॥ ध्वनौ ॥
भाषाशृङ्खलके ॥ विलासे ॥ गोपानां
गोपीभिः सहक्रीडाविशेषे । रास
ते । रासशब्दे । घञ् ॥ गर्व्विते ॥

रासगोष्ठी । स्त्री० हल्लीषके ॥ तल्लक्षणं
यथा । पृथुसुवृत्तं मसृणं वितस्तिमा
त्रोन्नतं कौ विनिखन्यशङ्कुकम् । आ
क्रम्यपद्भ्यामितरेतरन्तुहस्तैर्भ्रमो
यञ्चलुरासगोष्ठीतिहरिवंशटीकायां
नीलकण्ठः ॥

रासनः । पुं० रसे ॥ रसनया गृह्यते
। ग्रीष्मल्पश् ॥

रासभः । पुं० गर्द्दभे । रासते ।
रास० । रासिवल्लिभ्यांच अभच् ॥

रासभवन्दिनी । स्त्री० मल्लिकायाम ॥

रासभी । स्त्री० गर्द्दभ्याम् । गधी० इ०
भा० ॥ जातिलक्षणोङीष् ॥



रासमण्डलम् । न० श्रीकृष्णस्यरासक्री
डास्थले ॥

रासेरसः । पुं० रासगोष्ठ्याम् ॥ रा
से ॥ शृङ्गारे ॥ रससिद्धौ ॥ रसा-
वासे ॥ षष्ठीजागरणे ॥ उत्सवे ॥
परिहासे ॥

रासेश्वरी । स्त्री० राधायाम् ॥

रास्ना । स्त्री० स्वनामख्यातलताविशे
षे । नाकुल्याम् । सुरसायाम् ।
भुजङ्गाक्ष्याम् । रास्नन० जेन० इ०
भा० प्र० ॥ रास्नात्रिविधाप्रोक्तामूलं
पत्रं दलं तथा । ज्ञेयौ मूलदलौ-
श्रेष्ठौलघ्वीरास्नातुमध्यमा ॥ इ०
रा० नि० ॥ अपिच । नाकुलीतुव-
रातिक्ताकटुकोष्णाविनाशयेत् ।
भोगिलूतावृश्चिकाखुविषज्वरक्रिमि
व्रणान् ॥ इ० भा० प्र० ॥ रास्नाशो
थामवातघ्नीतिराजवल्लभः ॥ एला
वती० इ० दे० भा० प्र० औषधिविशे-
षे । एलापर्ण्याम् । सुवहायाम् ।
युक्तरसायाम् । काँटाभामरुली०
इ० गौ० दे० भा० प्र० ॥ अस्यागुणाय
था । रास्नामपाचनीतिक्तागुरूष्णाक
फवातजित् । शोथश्वाससमीरा-
स्रवातशूलोदरापहा ॥ कासज्वर-
विषाशीतिवातिकामयहिध्महृत् ॥
राति० रायतेवा । रासते० रसतेवा
। रादाने । रसया स्वादने० रास
शब्देवा । रास्नासास्नेतिसाधुः ॥

राहुः । पुं॰ तमोग्रहे । स्वर्भानौ । सैंहिकेये । रहति॰गृहीत्वात्यजति चन्द्रार्कौ । रह त्यागे । बाहुलकात् उण् ॥

राहुगृहम् । न॰ कन्याराशौ ॥ राहोः गृहम् ॥

राहुग्रहः । पुं॰ )

राहुग्रासः । पुं॰ ) उपरागे चन्द्रसूर्ययोर्ग्रहणे ॥

राहुच्छत्रम् । न॰ आर्द्रके ॥

राहुदर्शनम् । न॰ राहोर्याजुपग्रामे । ग्रहणे ॥

राहुभेदी । पुं॰ विष्णौ ॥

राहुमूर्द्धभित् । पुं॰ केशवे ॥

राहुरत्नम् । न॰ गोमेदके ॥

राहुसूः । पुं॰ बुद्धे । सुगते ॥

राहुस्पर्शः । पुं॰ उपरागे ॥

राहुहा । पुं॰ विष्णौ ॥

राहूच्छिष्टः । पुं॰ )

राहूत्सृष्टः । पुं॰ ) लशुने ॥

रिक्तः । त्रि॰ शून्ये ॥ यथा । रिक्तश्च सनभोदिशाद्राजानंदेवतांगुरुमिति ॥ निर्धने ॥ न॰ वने ॥ रिच्यतेस्म । रिचवियोजनसम्पर्चनयोः । क्तः ॥

रिक्तकम् । त्रि॰ शून्ये ॥ स्वार्थे कन् ॥

रिक्ता । स्त्री॰ चतुर्थीनवमीचतुर्दशीषु तिथिषु ॥

रिक्थम् । न॰ धनमात्रे । वसुनि ॥ रिच्यते । रिचिर् विरेचने । पातृतुदिवचिरिचीतिथक् ॥

रिक्थहारी । त्रि॰ दायादे ॥

रिक्थादः । पुं॰ पुत्रे ॥

रिक्थी । त्रि॰ धनहारिणि ॥

रिखा । स्त्री॰ लिखायाम् । लीख॰ इ॰ भा॰ इति हेमचन्द्रः ॥ रख्यते । लख शालोषणे । घञ् । पृषोदरादिः ॥

रिङ्खणम् । न॰ स्खलने । धर्मादिस्खलने ॥ बालानां हस्तपादाभ्यां चलने । रिङ्खयतौ । भावे ल्युट् ॥

रिङ्गणम् । न॰ स्खलने ॥ धर्मादिस्खलने ॥ बालानां हस्तपादाभ्यां चलने । रींगणा॰ इ॰ भा॰ प्र॰ ॥ यौ विल्वात्पिच्छिलादेवस्खलनंरिङ्गणंविदुः ॥ रिगि गतौ । भावे ल्युट् ॥

रिङ्गम् । त्रि॰ जानुभ्यां गच्छति ॥ गच्छति ॥

रिधमः । पुं॰ कामे ॥ वसन्ते ॥

रिपुः । पुं॰ शत्रौ । अहितकारिणि ॥ आभ्यन्तरा रिपवो यथा । कामक्रोधौ लोभमोहौ मदो मात्सर्यमेव च । आभ्यन्तराद्रुमेप्रोक्ता रिपवस्तत्ववेदिभिः ॥ अनित्याः शत्रवो बाह्या विप्रकृष्टास्तथेतराः । अतः सोऽभ्यन्तरान्नित्यान्षट् पूर्वमजयद्रिपून् । अनिष्टं रपति । रपव्य

क्तार्थवाचि । रपेरिद्धोपधायाइति कुः ॥ लशनात्प्रभवने ॥ चोरक नामगन्धद्रव्ये ॥
रिपुघातिनी । स्त्री०-लताविशेषे । कुचिकायाम् । कुचुकु० गौ० दे० भा० प्र० ॥ शत्रुनाशकारिण्याम् ॥
रिपुद : । पुं० दधिचोत्तरदारस्थे ॥
रिपुभम् । न० षष्ठराशौ ॥
रिप्फम् । न० व्ययभवने ॥
रिप्र : । वि० अधमे । कुत्सिते ॥ रीयते । रीङ् स्रवणे । लीरीङोर्ह्रस्वः पुट् चतरौर्ह्रस्वः पुगागमयोरिति प्रत्ययोर्धातोर्ह्रस्वः प्रत्ययस्य पुट् च ॥
रिभेद : । पुं० अरिभेदे ॥
रिरंसा । स्त्री० रन्तुमिच्छायाम् ॥ रमे : सन् ॥ अप्रत्ययात् । टाप् ॥
रिरंसु : । वि० रन्तुमिच्छौ । रमे : सन्नन्तादुप्रत्यय : ॥
रिरक्षा । स्त्री० रक्षितुमिच्छायाम् ॥
रिरक्षिषु : । वि० रक्षितुमिच्छौ ।
रिरी । स्त्री० पित्तले ॥
रिश्य : । पुं० मृगे ॥
रिष्ट : । पुं० खड्गे ॥ फेनिले । रीठा० इ० भा० ॥ न० दुरसि । पापे ॥ क्षेमे कुशले ॥ अशुभे । अकल्याणे । अभावे । नाशे ॥ क्षेमाशुभाभावेषु ॥ रेषणम् । रिष्यतेर्क्तो निवा । रिषहिंसायाम् । क्त : ॥
रिष्टक : । पुं० फेनिले । रीठा० इ० भा० ॥
रिष्टि : । पुं० खड्गे । असौ ॥ स्त्री० शुभे ॥ रेषति । रिष० क्तिच् ॥
रिप्णम् : । न० व्ययभवने ॥
रिष्य : । पुं० मृगभेदे ॥ रिष्यति । रिष० । अघ्न्यादित्वात्साधु : ॥
रिष्व : । वि० हिंस्रे ॥ न० शस्ते ॥ रिष्यतेऽनेन । रिष० । सर्वनिघृष्व रिष्वेतिसाधु : ॥
री । स्त्री० गतौ ॥
रीठा । स्त्री० रीठाकरञ्जे ॥
रीठाकरञ्ज : । पुं० ख्यातनाम्वृक्षे । गुच्छके । गुच्छपुष्पके । गुच्छफले । फेनिले ॥
रीठक : । पुं० पृष्ठवंशे ॥
रीढा । स्त्री० अवमाननायाम् । अवज्ञायाम् ॥ रेहणम् । रिहवधे । औणादिक : क्त : । ढीत्वं लोपा रा ॥
रीण : । वि० स्रुतसजादौ । क्षरिते । स्रुते ॥ रीयतेस्म । रीङ् स्रवणे । क्त : । स्वादयश्चोदित : । ओदित श्चेतिनत्वम् ॥ दीर्घः ॥
रीति : । स्त्री० स्यन्दे । गतौ ॥ प्रचारे ॥ लोहकिट्टे ॥ दग्धस्वर्णादिमले ॥ सीमनि ॥ स्रवणे ॥ स्वभावे । रूपे । स्रवणे । भावे । आत्म

न्य ॥ पथ्यौ ॥ न॰ सौवर्चले ॥ वि॰ मनोज्ञे । सुन्दरे ॥ रोचते॰ रुच्यते वा । रुच॰ । राजसूयेतिसाधु : ॥

रुच्यकन्द : । पुं॰ सूरणे ॥

रुज् । स्त्री॰ रोगे ॥ रुजतिदेहम् । रु-जोभङ्गे । क्विप् ॥ रोजनवा, सम्प दादित्विक्विप् ॥ कुष्ठौषधौ ॥

रुजा । स्त्री॰ रोगे ॥ भङ्गे ॥ रुजति । रुजो॰ । भिदादिपाठात्॰ रुजार्था-नामितिनिर्देशाज्ञाडङ्टाप् ॥ द्र गुणवेतिकोशः ॥ कुष्ठे ॥ मेष्याम् ॥

रुजाकर : । पुं॰ व्याधौ । न॰ कर्मरङ्गफले ॥ त्रि॰ पीडाकारिणि ॥

रुजासह : । पुं॰ धन्वनवृक्षे ॥

रुजस्करा । स्त्री॰ सुमताख्याम् । सुख-सन्दोह्यायांगवि ॥

रुण्ड : । पुं॰ कबन्धे ॥

रुण्डिका । स्त्री॰ द्वारपिण्डाम् । देह ल्याम् ॥ दूतिकायाम् ॥ रणभूमौ ।

रुतम् । न॰ वाशिते । तिरश्चांशब्द । कूजिते ॥

रुदथ : पुं॰ कुक्कुटे ॥ शुनि ॥ शि शौ । रोदिति । रुदिर्॰ अश्रुविमोच ने । रुदिविदिभ्यांङित्थ : ॥

रुदन्तिका । ) स्त्री॰

रुदन्ती । ) स्त्री॰ क्षुद्रक्षुपविशेषे । स्वल्पतोयायाम् सञ्जीवन्याम् । रो माञ्चिकायाम् । चणपत्याम् ॥ य स्या : स्वरूपयथा । चणपत्रसमंप

त्रंक्षुपमस्यावतनःस्मृति : । शैशिरेज लबिन्दूनांस्रवन्तीतिरुदन्तिका ॥ रु दन्तीवज्रिरक्तघ्नावित्तमौचरसाय-नौ ॥

रुदितम् । न॰ क्रन्दिते । क्रुष्टे ॥ रु-दिर्॰ । भावेक्तः ॥ त्रि॰ तद्वति ॥

रुद्ध : । त्रि॰ नद्योप्राकारादिनाकृतवे ष्टने । वेष्टिते । बलयिते । संवी-ते । चावृते । सध्यनीत्या । रुधिर्-आवरणे । क्तः ॥

रुद्र : । पुं॰ गणदेवताविशेषे ॥ एका-दशरुद्रेषु ॥ तेषांनामानियथा । अजैकपादहिर्बुध्न्योविरूपाक्षोथरैव-त : । हरश्चबहुरूपश्चत्र्यम्बकश्चसुरे-श्वर : ॥ सावित्रश्चजयन्तश्चपिनाकी चापराजित : । एतेरुद्रा : समा ख्याताएकादशगणेश्वरा : । एते षांमानससानान्तु त्रिशूलवरधारिणा म् । कोटयश्चतुराशीतिस्तत्पुत्रा श्चाक्षयामता : ॥ दिक्षुसर्वासुये रक्षांप्रकुर्वन्तिगणेश्वरा : । पुत्रपौत्र सुताश्चैतेसुरभीगर्भसम्भवा : ॥ इतिमात्स्ये ५ ध्याय : ॥ शिवे । शम्भौ । ईशे ॥ रोदयत्यसुरान् । संहारकालेप्रजा : संहरन्रोदय तिवा । रुदिर्॰ । रोदेर्णिलुक्च तिरक्प्रत्ययलुक् ॥ सर्वगसरुधाद्रा वणात्॰ रोदनहननाद्वारुद्र : । त थाचस्कान्दे । रुज : सर्वगता

यस्माद्द्रावयामिजगत्त्वहम् । रोदनं हन्मियस्माच्चरुद्रस्तस्मादहं प्रिये ॥ यद्वा । रुतं वेदात्मकं शब्दं कल्पादौ ब्रह्मणे राति॰ददाति । रादाने । आतोनुपसर्गे कः ॥ यद्वा । रुता नादेनसकलं जगदिदं द्रावयतिरञ्जयतीति॰नादात्मकत्वाद्रुद्र ॥ यद्वा । रुतानादिम॰प्रणवरूपेण॰वेदरूपेण वा॰ द्रावयति॰॰ ब्रह्मरूपमितिरुद्र॰ यद्वा । रुतं संसारदुःखं तद्द्वेतुं-वाद्रावयतीतिरुद्रः : तद्दुःखंतद्दुःखत्वं तु विद्रावयतीव : प्रभुः । रुद्रत्वं व्यसेतस्माच्छिवः : परम कारणमिति ॥ विष्णुरुद्रयोरभेदो यथाकौर्मे । सर्वदेवोभगवान्महादेवोनसंशयः । मन्यन्ते येजगद्योनिं विभिन्नं विष्णुमीश्वरात् ॥ मोहादवेदनिष्ठाद्वा तेयान्तिनरकं नराः । वेदानुवर्त्तिनं रुद्रं देवं नारायणं तथा । एकीभावेनपश्यन्तिमुक्तिभाजोभवन्तिते । श्रीमद्भागवते द्व्यादौरुद्रौपरिकीर्त्तितौ । यथा । क्रुद्धस्यब्रह्मणोयस्माद्रुद्रनामार्थमुद्भौ । मूलरुद्रांशभूतोरुद्रनामा द्वितीयकइति ॥ आदित्यपञ्चकं च ॥ एकादशार्द्धे ॥ न॰ रौद्ररसे ॥

रुद्रकोटी । स्त्री॰ तीर्थविशेषे ॥

रुद्रगणः । पुं॰ शिवपार्षदसमूहे ॥

रुद्रचण्डी । स्त्री॰ रुद्रयामलोक्तदेवीमाहात्म्ये ॥

रुद्रजः । पुं॰ पारदे ॥

रुद्रजटा । स्त्री॰ लताविशेषे । रौद्याम् । सौम्यायाम् । सुगन्धायाम् । सुपत्रायाम् । सुगन्धपत्रायाम् । पत्रवल्ल्याम् जटावल्ल्याम् ॥ अस्यागुणाः । कटुरसत्वम्॰ श्वासकासहृद्रोगभूतरक्षोनाशित्वञ्चेति ॥

रुद्रपत्नी । स्त्री॰ चण्ड्याम् । दुर्गायाम् ॥ अतस्याम् ॥

रुद्रप्रिया । स्त्री॰ हरीतक्याम् ॥ रुद्राण्याम् ॥

रुद्रवीणा । स्त्री॰ सङ्गीतनारायणोक्तवीणाविशेषे । रुद्रराम् ॥

रुद्रसर्गः । पुं॰ रुद्रकर्तृकभूतवेतालादिसृष्टौ ॥

रुद्रसावर्णिः । पुं॰ द्वादशमनौ ॥

रुद्रसूः । स्त्री॰ एकादशपुत्रप्रसूताम् ॥

रुद्राक्रीडः । पुं॰ श्मशाने ॥

रुद्राक्षः । पुं॰ स्वनामाख्यप्रसिद्धवृक्षे । हलभेरी । चमरे । पुष्पचामरे । अक्षफले । शिवाक्षे । सर्वाक्षे । भूतनाशने ॥ विनाभस्मत्रिपुण्ड्रेण-विनारुद्राक्षमालया । पूजितोपि महादेवोनस्यात्तस्यफलप्रदः ॥ विनामन्त्रेणयोधत्ते रुद्राक्षं भुविमानवः । सयातिनरकान्घोरान्यावदिन्द्राश्चतुर्दशेतिपद्मपुराणम् ॥ रुद्राक्षान्कण्ठदेशेदशन ३२ परि

मितान्॰ मस्तकेविंशतिदे ४० ष ट् ६ षट् ६ कर्णप्रदेशे॰ करयुगलकृतेद्वादशे १२ द्वादशे १२ व । वाक्षेरिन्दो : कलाभि १६ र्नयनयुगकृतेत्वेक १ मेकं १ शिखायाम्॰ वक्षस्यष्टाधिकंय : कलय तियतकं १०८ सस्वयंनीलकण्ठ : प्रतिदिवसभागवतम् ॥ मन्त्रेणेति दिशं तरविषयम् । सर्वाश्रमाणांव र्णानांरुद्राक्षस्यधारणम् । कर्त्तव्यंमन्त्रत : प्रोक्तंद्विजानांनान्यव- र्णिनामितिनारायणवचनात् ॥

रुद्राणी । स्त्री॰ शिवायाम् । भवान्याम् । सर्वमङ्गलायाम् ॥ रुद्रस्य स्त्री॰ इन्द्रवरुणभवसर्वरुद्रमृडहि- मारण्ययवयवनमातुलाचार्याणामानुगिति॰ ङीषानुकौ ॥

रुद्रावर्त्त : । पुं॰ तीर्थविशेषे ॥ वह्निकूटस्थानस्यार्यापरमेश्वर्याम् । रुद्रजटायाम् ॥

रुद्रास्पदम् । न॰ तीर्थविशेषे ॥

रुद्री । स्त्री॰ रुद्रवीणायां ॥

रुधिर : । पुं॰ अङ्गारके । कुजे । भौमे । मङ्गलग्रहे ॥ न॰ कुङ्कुमे ॥ शरीरस्थरसभवधातौ । रक्ते । अस्रे । त्वग्जे । शोणिते । असृजि । लोहू॰इ॰भा॰ ॥ रुधादि॰रुध्यते वा । रुधिर्॰ । इषिमदिमुदीति- किरच् ॥

रुधिराख्यम् । न॰ मणिप्रभेदे । यथोक्तं गरुडपुराणे । हुतभुग्रूपमादाय दानवस्ययथेप्सितम् । नर्मदायांनिचिक्षेप किञ्चिद्दीनादिभूतले ॥ तत्रेन्द्रगोपकलितंशुकवक्त्रवर्णसं- स्थानत : प्रकटपीलुसमानमान्यम् । नानाप्रकारविहितंरुधिराख्य- रत्नमुद्भूयतत्खलुसर्वसमानमेव ॥ मध्ये न्दुपाण्डरसतीवविशुद्धवर्णंत च्चेन्द्रनीलसदृशंपटलंतुखेस्यात् । सैश्वर्यभृत्यजननंकथितंतदेवपक्वञ्च तत्खलुभवेत्सुरभ्यवर्णम् । इति गारुडे ॥ ७८ । अध्याय : ॥

रुधिरोद्गारी । पुं॰ षष्टिसंवत्सराणां मध्ये वत्सरविशेषे ॥ तत्फलंयथा । अतिपीडितोहिरण्यादितामत्ताश्चाद्य शिवस : । तत्सर्वदेविविक्रीयकर्त्तव्योधान्यसञ्चय : ॥ रक्ते संवत्सरेदेविक्रूरबुद्धिर्नराधिप: । मानवा : क्रूरचेष्टाश्चसङ्ग्रामेनजयोभवेत् ॥ ५८ ॥

रुमण्वान् । पुं॰ लवणाचले ॥ लवणमस्त्यस्मिन् । मतुप् । आसन्दीवदिति॰लवणस्यरुमण्भाव : ॥ लवणाकरवाचकरुमन्शब्दस्यैतन्निपातनंनलोपाभावार्थंपर्यायार्थंस्त्यपि मतम् ॥

रुमा । पुं॰ लवणाकरे ॥

रुमा । स्त्री॰ सुग्रीवदारेषु ॥ विशिष्टलवणाकरे ॥

रुम्र: । पुं० रमणे ॥ अरुणे ॥ रम्यतेऽस्मिन् । रमक्रीडायाम् । चकिरम्योरुच्चोपधायाइतिरक् ॥

रुरु: । पुं० मृगविशेषे । हरिणाख्य न्तरे । भारस्तृताख्ये ॥ रुरुमेधान् क्रव्यसारइतियादव: ॥ व्याघ्रे ॥ यथा । गौगीपीगीपवीतोरुकनखविलसत्कण्ठभूषश्चिरंवइति ॥ दैत्यभेदे ॥ रौति । रुशब्दे । अन्वादय इतिसाधु: ॥ रुमातिभ्यांक्रुन्वा ॥

रुलु: । ) पुं०
रुलुक: । ) पुं० एरण्डे ॥ इतिरत्नमाला ॥ रक्तैरण्डे ॥ इतिराजनिर्घण्ट: ॥

रुशन् । त्रि० निन्दार्थाभाषिणि ॥ रुशति । रुशहिंसायाम् । तालव्यान्तस्तौदादिकस्तस्माच्छतृप्रत्यय: । रुशन् शब्द: । रुशतीहिंसा । रुशद्वचनम् ॥

रुशती । स्त्री० निन्दार्थाभाषिणि ॥ शतृन्तात् ङीप् । आच्छीनद्योरितिनुम्विकल्पान्नुमभाव: । स्त्रियांरुशत्यांनास्तिदर्शनम् ॥

रुट् । स्त्री० क्रोधे० ॥ रुषहिंसायाम् । सम्पदादित्वात्क्विप् ॥

रुषा । स्त्री० अमर्षे । कोपे । मन्यौ । क्रोधे । क्विबन्तात्स्त्रियांरुशितिवेनटाप् ॥

रुषित: । त्रि० रुष्टे । क्रोधयुक्ते । रुष्यतेस्म । रुषरोषे । क्त: । रुष्यमत्वरेतिपक्षे इड्विकल्प: ।

रुष्ट: । त्रि० रुषिते ॥ शिवेरुष्टे गुरुस्त्राता गुरौरुष्टे नकश्चन । रुष्यतेस्म । रुष० । क्त: । रुष्यमत्वरसङ्घुषास्वनामितिपक्षे इडभाव: ॥

रुह: । त्रि० जाते ॥ आरूढे ॥ रुहे: कर्त्तरिक: ॥

रुहकम् । न० छिद्रे ॥

रुहा । स्त्री० दूर्वायाम् ॥ छिन्नापिरोहति । रुहबीजजन्मनिप्रादुर्भावे च । इगुपधज्ञाप्रीकिर: क: । टाप् ॥ महासमङ्गायाम् ॥

रुहिरुहिका । स्त्री० उत्कण्ठायाम् ॥ इति पुराणम् ॥

रुक्ष । पुं० वृक्षे ॥ रोहति । रुह० स्नुक्रुशिरुहीत्यादिना० कनिप् ॥

रूक्ष: । पुं० वृक्षे ॥ वरकोद्रवे । त्रि० अप्रेमणि । परुषे । अचिक्कणे । अस्निग्धे । रूक्षा० इतिभाषायाम् ॥ रूक्षयति । रूक्षपारुष्ये । पचाद्यच् ।

रूक्षगन्धक: । पुं० गुग्गुलौ ॥

रूक्षपत्रिका । स्त्री० लङ्काधान्ये ॥

रूक्षदर्भ: । पुं० हरिद्दर्भे ॥

रूक्षपत्र: । पुं० शाखोटवृक्षे ॥

रूक्षप्रिय: । पुं० ऋषभौषधे ॥

रूक्षस्वादुफल: । पुं० धन्वनवृक्षे ॥

रूक्षा । स्त्री० दन्तीवृक्षे ॥ क्रूरायाम् । अस्निग्धायाम् ॥

रूढः । पुं॰ प्रकृतिप्रत्ययार्थमनपे-
क्ष्यशाब्दबोधजनकेशब्दे ॥ यथा । सु
ब्धोलादिपिकोगौणः शब्दः स्या-
दौपचारिकः । यौगिकोयोगरूढो
वारूढोऽसामुख्यएवसः ॥ इतिशा-
ब्दिकाः ॥ अपिच । रूढमाख्यव-
न्ति॰ विभजन्तेच । रूढं सङ्केतवन्नाम
सैवसंज्ञेतिकीर्त्यते । नैमित्तिकीपा
रिभाषिक्यौपाधिकीचपरात्रिधा ॥ अ
न्नामयादृगार्थेसङ्केतितमेव॰ नतुयौ
गिकमपि॰ तद्रूढम् । योगरूढन्तुप-
ङ्कजादिकंनतथा रूढानामेवसंज्ञाप
देनाभिलप्यते । नतुरूढादिपदत्सं-
ज्ञानाम्नोऽवान्तरभेदः । येनविभा
गव्याघातः स्यात् । संज्ञायास्त्रयो
भेदाः नैमित्तिकीपारिभाषिकी॰औ
पाधिकीचेति । पाचकपाठकादय-
स्तुनसंज्ञाः सङ्केतशून्यत्वात् । ये-
तुरूढस्यनाम्नश्चतुर्विधत्वमाहुस्तन्म
तमुपन्यस्यति । जातिद्रव्यगुणस्प-
न्दैर्धर्मैः सङ्केतवत्तया । जाति
शब्दादिभेदेनचातुर्विध्यं परेजगुः ॥
गोगवयादीनांगोत्वादिजात्या । य
दृच्छादीनांलाङ्गलधनादिद्रव्ये-
ण । धन्वपिशुनादीनांपुण्यदर्पादि
गुणेन । चलचपलादीनांशब्दानां
कम्पाद्यवच्छिन्नस्पन्दत्वाच्चातुर्वि
ध्यमेवरूढानामिति । यदुक्तं दृष्टा-
पार्थैः । शब्दैरेवप्रतीयन्ते जाति-



द्रव्यगुणक्रियाः । चातुर्विध्यादमी
षान्तुशब्दउक्तश्चतुर्विधइति । तदे-
तज्जडमूर्खादीनामन्धमूकादीनां-
चशब्दानामपरिग्रहापत्त्यापरित्य-
क्तमस्माभिः ॥ नैमित्तिकसंज्ञांल-
क्षयति । जात्यवच्छिन्नसङ्केतवती
नैमित्तिकीमता । जातिमात्रेऽपिस
ङ्केताद्व्यक्तेर्भानंसुदुष्करम् ॥ यन्ना
मजात्यवच्छिन्नसङ्केतवत्तन्नैमि-
त्तिकीसंज्ञा । यथागौश्चैत्रादिः ।
तद्धिगोत्वचैत्रत्वादिजात्यवच्छिन्ने
षगवादिकमभिधत्ते नतुगोत्वादि-
जातिमात्रम् । गोपदंगोत्वेसङ्केति
तमित्याकारकग्रहान्नामानयेत्यादौ
गोत्वादिजात्यादेरन्यथानुपपत्तेः
एकत्वाश्चवयस्यान्यानुभावकत्वेऽ
तिप्रसङ्गात् । पारिभाषिकीमौ-
पाधिकीसंज्ञांक्रमेणलक्षयति । उ
भयावृत्तिधर्मेणसंज्ञाज्ञानात्पारिभा
षिकी । औपाधिकीत्वनुगतोपाधि
नायाप्रवर्तते ॥ उभयावृत्तिधर्माव
च्छिन्नसङ्केतवतीसंज्ञापारिभाषि-
की । यथाकाशडित्थादिः ॥ याधा
नुगतोपाध्यवच्छिन्नसङ्केतवतीसं-
ज्ञासात्वौपाधिकी । यथाभूतदता
दि । तद्धिसचेतनत्वविशेषगुणव
त्वावच्छिन्नस्वानुगतोपाधिपुर
स्कारेणैवप्रवर्तते । इतिशब्दशक्ति
प्रकाशिकायां॰जाते । प्रसिद्धे ।

रूपम्

रूपकम्

रुद्देर्गख्र्येतिक : । टमुधयुष्ट्खढ लोपदीर्घ : ॥

रुढपद : । त्रि॰ मनमूले ॥

रूढि : । स्त्री॰ शिष्टप्रयोगे ॥ प्रसिद्धौ ॥ अनादिव्यवहारसिद्धसम्बन्धविशेषे ॥ मुख्यशब्दस्य भेदे ॥ सा चलरूपियत्वाल्लागुणेन वाभिर्देया ईस्वत्त्निसंज्ञासं जिसदे तेमप्रवत्तेते । यथा । जित्य : डवित्य : गौ : शुक्लइति ॥ रूढशब्दनिष्ठत्ती ॥

रूपम् । न॰ वाच्याकारे । स्वभावे ॥ सौन्दर्ये । मनोहराकृतौ । तल्लक्षणं यथा । अङ्गान्यभूषितान्येव केनचिद्भूषणादिना । येनभूषितवद्भान्तितद्रूपमितिकथ्यते ॥ इत्युज्ज्वलनीलमणि : । नाणके । प्रशस्ते ॥ पशौ ॥ शब्दे । ग्रन्थावृत्तौ नाटकादौ ॥ आकारे ॥ श्लोके ॥ अवस्थाभादिद्विपदान्तं नानाविकारविशेषे ॥ रूपन्तुषोडशविधंमोच धर्मेप्रकीर्तितम् । यथा । हस्वम् १ दीर्घम् २ स्थूलम् ३ चतुरसम् ४ हृतम् ५ शुक्लम् ६ कृष्णम् ७ नीलारुणम् ८ रक्तम् ९ पीतम् १० कठिनम् ११ चिक्कणम् १२ श्लक्ष्णम् १३ पिच्छलम् १४ मृदु १५ दारुण १६ मिति ॥ चक्षुर्मात्रग्राह्यो गुणे ॥ तच्चशुक्लनीलपीत रक्तहरितकापिशचित्रभेदात्सप्तविधम् ॰ पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यांसप्तविधम् । अभास्वरंशुक्लंजले । शुक्लंभास्वरंतेजसि॥ नामामावे ०।० ॥ त्रि॰ उत्तरपदस्थित्वात्सदृशे ॥ यथापितृरूप पुत्र:मातृरूपाकन्या ॥ प्रत्यये ॥ रोपयतिविमोहयति । रूपविमोहने । अच् ॥ यद्वा । रूप्यते ऽनेन । खप्यपिक्यप्रत्ययोतिसाधु ॥ रौतिवा । शब्दे । खप्यशिल्पेतिप : रौतेर्दीर्घश्च ॥ अतिरूपसमिन्दितम् ॥

रूपकम् । न॰ नाटके । मूर्ते ॥ रूप्ये । नाव्यालङ्कारे ॥ तल्लक्षणादि यथा । विषयस्य तताद्रूप्यरञ्जनं विषयस्यत् । रूपकंतत्निधाधिक्य न्यूनत्वानुभयोक्तिभि : ॥ अयं हि धूर्जटि : साक्षान्येनदग्धा : पुर : । अथात् अयमासीविनाशभसाक्षीसौर्मविलोचनम्॥ मखमुविभ्रमखलदलीकलयमहषिताम् । अस्यामुखेन्दुनालमेवानन्दे किमिन्दुना ॥ साध्वीयमपराक्ष्मीरसुधासागरोदिता । अयंकलङ्किनसन्द्राम्मुखचन्द्रोतिरिच्यते ॥ सङ्ख्याविशेषे ॥ यथा । सङ्घाकोमेन्च्यते शुद्धासाप्तिसोकपर्वभवेत् । रूपकैर्दग्रभि : प्रोक्त : कालज्ञोनामनामत : ॥ त्रि॰ । मूर्तिमति ॥ पुं॰ । इङ्गादिसमम् ॥

तेयथा । दृढः प्रौढोऽपत्रपरोविसपष्टतुरक्रमः । निशारुचः प्रतितालः कथिताः सप्तरूपकोद्भृतिदामोदरः ॥

रूपकभेदः । पुं० अभिनेयप्रकारे ॥

रूपतत्त्वम् । न० शीले ॥

रूपधारी । त्रि० सौन्दर्यविशिष्टे ॥

रूपधेयम् । न० रूपे ॥ रूपमेव । भागरूपनामभ्यांधेयः ॥

रूपनाशनः । पुं० पेचके

रूपवान् । त्रि० आकारविशिष्टे ॥ सौंदर्ययुक्ते ॥

रूपस्कन्धः । पुं० विषयप्रपञ्चे । वासनामयचित्तेननिरूप्यमाणे पुगन्धस्पर्शादिषु । पञ्चेन्द्रियेषु च ॥ रूप्यन्ते एभिर्विषयाइतिकर्मकरणव्युत्पत्तिभ्यां सविषयाणीन्द्रियाणिरूपस्कन्धः । रूप्यमाणपृथिव्यादीनांवाह्यत्वेविदेहस्थत्वादिन्द्रियसम्बन्धाध्याध्यात्मिकत्वम् ॥

रूपाजीवा । स्त्री० वारस्त्रियाम् । वेश्यायाम् । रूपमाजीवोऽस्याः ॥

रूपामाली । स्त्री० वर्णवृत्तविशेषे ॥ यथा । चत्वारोयस्यांकर्णाआयन्तेछन्दसो वंशोरंकुर्वन्ते । भव्यावर्णापादेराजन्ते रूपामालीसेयं तत्काम्ये ॥ यथा । रुत्वाशंभुं न्यस्यान्तः [illegible] यः [illegible] कुर्यात् । देवेन्द्राद्याः प्रीत्यासम्प्राप्ताः सेवन्ते तत्पादाम्भोजम् ॥

रूपास्त्रः । पुं० कामदेवे ॥ रूपमस्त्रमस्य ॥

रूपिका । स्त्री० श्वेतार्कवृक्षे ॥ चोढ्रपुष्पे ॥

रूपी । त्रि० रूपवति ॥ मूर्तिमति ॥

रूपेश्वरी । स्त्री० देवीविशेषे ॥

रूप्यम् । न० आहतरजते ॥ आहतहेमनि ॥ तारे । चन्द्रहासे । रजते चन्द्रलोहके । चांदी० इ० भा० ॥ अस्यलक्षणगुणादयश्चयथा । गुरु स्निग्धंमृदुश्वेतं दाहच्छेदघनक्षमम् । स्वर्णाढ्यंचन्द्रवत्स्वच्छंरूप्यंनवगुणंशुभम् ॥ सारदायोग्यम् । कठिनं कृत्रिमं रूक्षंरक्तं पीतं दलं लघु । दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्तितम् ॥ सारदायायोग्यम् रूप्यं शीतंकषायाम्लं स्वादुपाकरसं सरम् । वयसःस्थापनंस्निग्धं लेखनं वातपित्तजित् । प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम् ॥ तारं शरीरस्यकरोतितापं विड्बन्धनंयच्छति शुक्रनाशम् । वीर्यं बलं हन्तितनोश्च पुष्टिं महागदान्पोषयतिह्यशुद्धम् । अथशोधनविधिः । पत्रीकृतस्य चापितारस्याग्नौप्रतापयेत् । निषिञ्चेत्तप्ततप्तानितैलेतक्रेचकाञ्जिके । गोमूत्रेचकुलत्थानांकषायेचत्रिधा त्रिधा । एवंरजतपत्राणांविशुद्धिःस

रुज्यतेपीड्यतेदेहोऽनेनेतिवारोगः॥

रोगघ्नम् । न॰ औषधे । त्रि॰ रोगनाशके ॥

रोगभूः । स्त्री॰ शरीरे ॥

रोगराजः । पुं॰ पापरोगे । राजयक्ष्मणि ॥ रोगाणांराजे । टच् ॥

रोगलक्षणम् । न॰ निदाने ॥

रोगशान्तकः । पुं॰ वैद्ये ॥

रोगशिला । स्त्री॰ मनःशिलायाम् ॥

रोगशिल्पी । पुं॰ शरालु॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ वृक्षविशेषे ॥

रोगश्रेष्ठः । पुं॰ ज्वरे ॥ रोगेषुश्रेष्ठः ॥

रोगहम् । न॰ औषधे । भैषज्ये ॥

रोगहारी । पुं॰ चिकित्सके । वैद्ये ॥ रोगंहरतितच्छीलः । सुपीति णिनिः ॥ त्रि॰ रोगनाशके ॥

रोगितरुः । पुं॰ अशोकवृक्षे ॥

रोगी । त्रि॰ रोगयुक्ते । व्याधिते । आतुरे । अभ्यमिते । रोगार्त्ते ॥ रोगमस्यास्ति । इनिः ॥ अथवर्धे चिकित्सार्थं परीक्षारोगितस्यहि ॥ तत्राहवाग्भटः । दर्शनस्पर्शनप्रश्नैः परीक्षेतचरोगिणम् । आयुरादिदृशास्पर्शाच्छीतादेः प्रश्नतोऽपरम् ॥ आयुराद्दीर्घत्वादिशब्दात् साध्यत्वाऽसाध्यत्वादिबोध्यम् । दृशा॰दर्शनेन । अक्षसम्पदादिस्पर्शा

तिभाविक्षिप् । स्पर्शात्॰ शीतादेः । शीतोष्णमृदुकाठिनत्वादिनापरीक्षयत्व । प्रश्नतः । उदरस्यापचगौरवलघुताऽलघुता॰बुभुक्षाऽबुभुक्षाबलाऽबलादिना। मिथ्यादृष्टाविकाराहि दुराख्यातास्तथैव च । तथादुष्परिमृष्टाश्चमोहयेयुश्चिकित्सकान् ॥ तत्रदर्शनं नेत्रजिह्वामूत्रादेः कर्त्तव्यम् ॥

रोगिवल्लभम् । न॰ भैषज्ये । औषधे । त्रि॰ रोगिप्रिये ॥

रोग्यम् । त्रि॰ अपथ्ये । अहिते ॥ रोगायहितम् । यत् । रोगसम्बन्धिनि ॥

रोचकः । पुं॰ क्षुधायाम् । भूषणायाम् । जिघत्सायाम् । कदल्याम् ॥ राजपलाण्डौ ॥ काचकृति ॥ ग्रन्थिपर्णभेदे । निशाचरे । धनहरे । क्षितवे । गन्धासके । नैपालदेशेभटिउर॰इतिप्रसिद्धे ॥ अस्यगुणाः । रोचकोमधुरस्तिक्तः कटुपाकः कटुर्लघुः । तीक्ष्णोरूक्षोहिमोहन्तिकुष्ठकण्डूकफानिलान् ॥ रक्षोऽश्मोखेदमेदोस्रज्वरगंधविषव्रणान् ॥ त्रि॰रुचिकारके ॥

रोचनः । पुं॰ कूटशाल्मलौ ॥ श्वेतशिग्रौ ॥ पलाण्डौ ॥ आरग्वधे ॥ करञ्जे ॥ अङ्कोठे ॥ दाडिमे ॥ त्रि॰ रोचके । रुचिकरे ॥ रोचते । रुचदीप्तौ । अनुदात्तेतश्चेतियुच् ॥

रोचयति । नन्द्यादित्वाल्ल्युर्वा बहुलमन्यत्रापीतियुच्वा ॥

रोचनकः । पुं० जम्बीरे ॥

रोचनफलः । पुं० बीजपूरके ॥

रोचनफला । स्त्री० चिर्भिटायाम् ॥

रोचना । स्त्री० रक्तकह्लारे ॥ गोपित्ते ॥ वरयोषिति ॥ रोचते । रुच० । बहुलमन्यत्रापीतियुच् । टाप् ॥

रोचनिका । स्त्री० वंशरोचनायाम् ॥ गुण्डारोचन्याम् ॥

रोचनी । स्त्री० आमलक्याम् ॥ गोरोचनायाम् ॥ मनः शिलायाम् ॥ श्वेतत्रिवृतायाम् ॥ काम्पिल्लौषधौ ॥ रोचते । रुचदीप्तावभिप्रीतौ च । कृत्यल्युटोबहुलमिति ल्युट् ॥

रोचमानः । पुं० अश्वग्रीवास्थरोमावर्त्ते । यथा । ग्रीवायामुदयाख्यश्च रोचमानोऽथकीर्त्तितः ॥ चिविकाख्यश्च । स्कन्धे च रोचमानश्च सौभाग्यवर्द्धनः । अधिप । कल्याणी रोचमानस्तु स्वामिसौभाग्यवर्द्धन इति जयन्ती ॥ त्रि० अत्यन्तं दीप्यमाने ॥ रोचते । रुच० । लट् : शानच् । आनेमुक् ॥

रोचितः । त्रि० प्रकाशिते ॥

रोची । त्रि० रोचिष्णौ ॥

रोचिष्णुः । त्रि० अलङ्कारादिनाशोभमाने । विभ्राजि । भ्राजिष्णौ ॥ रोचतेतच्छील : । रुच० । अलङ्क्रिति० इष्णुच् ॥

रोचिः । न० शोचिषि । त्विषि । प्रभायाम् । दीप्तौ ॥ रोचतेऽनेन । रुच० । बाहुलकादिसिः ॥

रोची । स्त्री० हिलमोचिकायाम् ॥

रोच्यः । त्रि० प्रकाश्ये ॥ प्रीतिविषये ॥

रोटिका । स्त्री० रोटी० इतिभाषा प्रसिद्धपिष्टकविशेषे ॥ अस्याः करणप्रकारो यथा । शुष्कगोधूमचूर्णं न किञ्चित्पुष्टाम्बुपेषिताम् । तस्य कीलेद्दीर्घसूत्रास्त्या भूयोवारिपिताम्पचेत् । सिद्धैषारोटिकाप्रोक्ता गुणानस्याः प्रचक्ष्महे । रोटिकाबलकृद्रुच्याबृंहणीधातुवर्द्धनी ॥ वातघ्नी कफकृद्गुर्वी दीप्ताग्नीनां प्रपूजिता ॥ यवजारोटिकारुच्यामधुराविशदालघुः । मलशुक्रानिलकरी बल्याश्लेष्मकफामयान् ॥ पीनसश्वासकासांश्चमेदोमेहगलामयान् ॥

रोडः । पुं० चोदे ॥ त्रि० दृप्ते ॥

रोदनम् । न० क्रन्दने । शोकादिना साश्रुपतने । रोना० इ० भा० ॥ अस्रे । अश्रुणि । आंसू० इ० भा० । रुद्यते । रुदिर्अश्रुविमोचने । बाहुलकात्कर्मणिल्युट् । तल्लक्षणमाश्रमं यथा । अनल्पस्निग्धरुदितमदीनं शुभदं नृणाम् । प्रचुराश्रुदीनं रूक्षरुदितं नशुभावहम् ।

॥ रोदनाश्रुपतनेमृतानांनरकं यथा ॥ श्लानिनोमारुदन्त्वेवमारोदी : पुत्रसाम्प्रतम् ॥ रोदनाश्रुप्रपतनान्मृतानांनरकंध्रुवम् ॥ मृतमुद्दिश्यरोदननिषेधोयथा ॥ श्लेष्माश्रुबान्धवैर्मुक्तंप्रेतोभुङ्क्तेयतोऽवश: । अतोनरोदितव्यंहिक्रियाकार्याविधानत : इति ॥

रोदमिका । स्त्री॰ यवासे ॥

रोदनी । स्त्री॰ कच्छुरायाम् । दुरालभायाम् । यवासे ॥ रोदयति । रुदिर्॰ । ल्युट् । ङीप् ॥

रोद : न॰ दिवि । भूमौ । द्यावापृथिव्यो : । रोदितिसर्वमस्मिन् । रुदिर्॰ । असुन् ॥

रोदसी । न॰ द्यावापृथिव्यो : ॥ दिवि ॥ भूमौ ॥

रोदसी । स्त्री॰ स्वर्गे । भूमौ ॥ द्यावाभूम्यो : ॥ गौरादित्वात्पक्षेङीप् ॥

रोदस्यौ । स्त्री॰ द्विवचनान्त : । भूमिस्वर्गयो : ॥

रोध : । पुं॰ नदीतीरे । कूले ॥ रुणद्धि । रुधिरावरणे । पचाद्यच् ॥ प्रतिबन्धे ॥

रोधक : । त्रि॰ रोधिनि ॥ रुधिर्॰ । ण्वुल् ॥

रोधन : । त्रि॰ रोधकर्त्तरि ॥ न॰ रोधे ॥

रोधवक्रा । स्त्री॰ सरिति ॥ रोधेन-वक्रा ॥

रोध : । न॰ तीरे ॥ रुणद्धि । रुधिर्॰ । सर्वधातुभ्योऽसुन्निति॰ असुन् ॥

रोधोवक्रा । स्त्री॰ नद्याम् ॥ रोधसावक्रा ॥

रोधोवती । स्त्री॰ नद्याम् ॥

रोध्र : । पुं॰ गालवे । लोध्रे । न॰ अपराधे ॥ किल्बिषे ॥ रुणद्धि । रुधिर्॰ । बाहुलकाद्रन् ॥

रोध्रपुष्प : । पुं॰ मधूकवृक्षे ॥

रोध्रपुष्पिणी । स्त्री॰ धातकीवृक्षे ॥

रोप: । पुं॰ रोपणे ॥ इषौ । बाणे ॥ न॰ छिद्रे ॥ रोप्यतेऽनेनवा । रुपविमोहने । णिच् । अच् ॥ यद्वा । रूप्यतेऽनेन । प्रत्यये तिघञ् ॥

रोपक : । पुं॰ सुवर्णसप्ततिमभागे ॥ यथाहविष्णुगुप्त : । दीनाराऽपकैरष्टाविंशत्यापरिकीर्त्तित: । सुवर्णसप्ततिमोभागोरोपकउच्यतइति ॥

रोपणम् । न॰ विमोहने ॥ जनने ॥ प्रादुर्भावे ॥ रुपिर्भावेल्युट् ॥ अञ्जनविशेषे ॥ यथा । रोपणंरसकंपिष्टासम्यक्सम्प्राप्यशारिवा । गृह्णीयात्तज्जलंसर्वंत्यजेच्चूर्णमधोगतम् ॥ शुष्कंतत्तज्जलंसर्वंपर्पटीसन्निभंभवेत् । विचूर्ण्यभावयेत्सम्यक्त्रिवेलंत्रिफलारसै : । कर्पूरस्यरसंतस्यद्गमांशेननि : क्षिपेत् ।

रोमवान् । त्रि॰ रोमशे । लोमवि शिष्टे ॥

रोमविकार : । ) पुं॰ रोमाञ्चे ।
रोमविक्रिया । ) स्त्री॰ रोमहर्षणे ।

रोमश : । पुं॰ भिण्डालौ । मेषे ॥ कुम्भिनि ॥ शूकरे । त्रि॰ अतिशय लोमविशिष्टे । रोमाणिसन्त्यस्य, । लोमादित्वात्॰ श : । रलयो रभेद : ॥

रोमशफल : । पुं॰ डिण्डिमे । मुनि निर्मिते । डिण्डसो॰ टिण्डा॰ कृ॰ भा॰

रोमशा । स्त्री॰ ककुद्मावृत्ते ॥

रोमशकम् । न॰ स्त्रोत्सवकी ॥

रोमहर्ष : । पुं॰ पुलकितत्वे । रोमाञ्चे ॥

रोमहर्षण : । पुं॰ सूते । इतिहासपु राणानांधारकेव्यासशिष्ये ॥ यथा ,तेसर्वेरोमाञ्चितवस्त्राश्रुपितानिवत् । द्वैपायनस्यभगवतस्तेयैरोमहर्षणः ॥ भवतमेवभगवान्व्याजहारस्व यंप्रभु : । बिभीतकवृक्षे । न॰ रो माञ्चे । रोमपां हर्षणम् ॥

रोमाञ्च : । पुं॰ रोमहर्षणे । रोमोद्गमे ॥ रोम्णामञ्चनं पूजनम् । आ वेषञ् ॥

रोमाञ्चिका । स्त्री॰ कटम्बीवृक्षे ॥

रोमाञ्चित : । त्रि॰ जातपुलके । हृष्ट रोमणि ॥ रोमाञ्च : सञ्जातोस्य ।

तारकादित्वादितच् ॥

रोमाली । स्त्री॰ वय : सन्धौ ॥ रोमा वल्याम् ॥

रोमालु : । पुं॰ पिण्डालौ ॥

रोमालुविटपी । पुं॰ कुम्बीवृक्षे ॥

रोमावली । स्त्री॰ नाभेरुपरिलोमश्रे ण्याम् ॥

रोमाश्रयफला । स्त्री॰ भिन्निदिष्टाघु षे ॥

रोमोद्गम : । ) पुं॰ रोमहर्षणे ।
रोमोद्भेद : । ) पुं॰ रोमाञ्चे ।

रोल : । पुं॰ मार्गीयामलक्यां ॥

रोलम्ब : । पुं॰ भ्रमरे ॥

रोला । स्त्री॰ मात्रावृत्तान्तरे । यथा ॥ रोलावृत्तसमेविषमपतिविङ्गल- भणितंप्रतिपदमिहचतुरधिकदशा ऽपि प्रतिपदविरचितम् । एकादश अधिविरसिरखिलसकलविरामकरण सुललितपदसङ्कारिविमलकविक एठाभरणम् ॥ यथा । तरलितपयोनि धिसलिलमयगिरिशिखरशिखा परि । विलसितरसातलमटतिपयस वसकलदिशोपरि । गगनगमनम भिनयतिसंशयिनाशिवमस्तुति- विनमिटनतयाथिभवनं भुपविसु- घति ॥

रोट । त्रि॰ वधके । हिंस्रे । रोषति । रुष॰ । क्विप् ॥

रोष : । पुं॰ कोपे । क्रोधे ॥ यमर्षे

यमुदेतुमिच्छतितिमिरंरोषमयंधि यापुरः । अविभिद्यनिशाकृतंत मः प्रभयानांशुमताप्युदीयते ॥ रोषणम् । रुषहिंसायाम् । भावे घञ् ॥

रोषण : । पुं॰ पारदे ॥ हेमकषणे ॥ उषरे ॥ कषरे ॥ त्रि॰ क्रोधने । अमर्षणे ॥ रोषणितास्त्रीच : । रुष॰ । क्रुधमण्डार्थेभ्यश्चेतियु च् ॥

रोषमय : । त्रि॰ रोषादागते । मयड्वै तिमयट् ॥

रोषित : । त्रि॰ रोषंप्रापिते । रुष्टे ॥

रौढ : । पुं॰ अङ्कुरे ॥ सादिनि ॥

रोहक : पुं॰ भूतविशेषे ॥ त्रि॰ रोढरि । रोहकारे ॥ वृक्षादीनांजन्म निप्रादुर्भावे । ण्वुल् ॥

रोहण : । पुं॰ गिरिप्रभेदे । विदूराद्रौ ॥ न॰ शुक्रे ॥ जन्मनि ॥ प्रादुर्भावे ॥

रोहन्त : । पुं॰ द्रुमविशेषे । वल्यात् । रुह॰ । तृभिनन्दिकीविप्राणि भ्य : चिदाभिपीतिझच् ॥ ह्यमसा र्थे ॥

रोहन्ती । स्त्री॰ लतान्तरे ॥ पित्वात् ङीप् ॥

रोहि : । पुं॰ वीजे । हृदे ॥ धार्मिके । व्रतस्थाम् ॥ रोहति । रुह॰ । कृपिकिसहिहसिविदिच्छिदिभीसि भ्यश्चेतीन् ॥ गन्धमृगे ॥

रोहिष : । पुं॰ भूतृणे ॥ कटतृणे ॥ रोहितकवृक्षे ॥ न॰ कालभेदे । रौहिणे । दिनस्यनवमेमुहूर्त्ते ॥ सचपूर्वाह्णश्राद्धस्यगौणकालत्वेनोत्तरावधि : । अपराह्णश्राद्धस्यपूर्वावधि : । एकोद्दिष्टश्राद्धस्यसमानकाल : ॥ रोहति । रुह॰ । रुहेरिति॰ इन् ॥ त्रि॰ रोहिण्यां जाते । नक्षत्रेभ्योबहुलमितिलुक् । लुक्तद्धितलुकि ॥

रोहिणि : । स्त्री॰ रोहिणीनक्षत्रे ॥

रोहिणिका । स्त्री॰ रागादिनारक्तवर्णायांस्त्रियाम् ॥

रोहिणी । स्त्री॰ अश्विन्यादितुचतुर्थ नक्षत्रे । ब्राह्मम् ।। तत्रजातस्य फलंयथा , स्याद्धर्मकार्ये कुशल : कुलीन : सुचारुदेहोविभवस्पती वर : । अरातिनाथाकुलिताखि लाभयोयोरोहिणीज : सधनीसमा नो ॥ इति ॥ रोहिणीमदर्प्पीति गौरादिषु पाठान् ङीष् ॥ कण्ठ रोगविशेषे ॥ अस्यनामानिसङ् ख्याचयथा , रोहिणीपञ्चधाप्रोक्ता कण्ठशालूकएवच । अधिजिह्व वलयोऽलासनामैवावृन्दक : ॥ तथैवकृन्द : शतघ्नीचगिलायु : क ण्ठविद्रधि : । गलौघ : स्वरघ्नश्च मांसतानस्तथैवच ॥ विदारीचकण्ठ

सान्तगीतविशेषरसे । उग्रे ॥ त्रि० तीव्रे ॥ भीषणे ॥ रुद्रसम्बन्धिनि ॥ रुद्रदैवत्ये ॥ रुद्रस्येदम् । अण् ॥

रौद्री । स्त्री० चण्ड्याम् ॥ ङीप् ॥ रुद्रजटायाम् ॥

रौप्यम् । न० रूप्ये ॥

रौप्यमाक्षिकम् न० तारमाक्षिके ॥

रौमम् । न० रौमके ॥ रुमायांभवम् । अण् ॥

रौमकम् । न० साम्भरि० इ० भा० प्र० लवणे । रौमे । वसुके । रुमायांभवम् । तत्रभवइत्यण् । सञ्ज्ञायाम् त्रि० रोमदेशभवस्तत्स्था नतोषा । मत्ताद्यादित्वादण् ॥

रौमहर्षणि : । पुं० उग्रश्रवसि । सूते ॥ रोमहर्षणस्यापत्यम् । अत इञ् ॥

रौरव : । पुं० नरकविशेषे ॥ घोरे ॥ त्रि० चञ्चले ॥ घोरे ॥ धूर्ते ॥ रुरुसम्बन्धिनि ॥ रुरुर्भीरुस्त्वाख्य : प्राणिविशेषः । तस्यायम् । तस्येदमित्यण् ॥

रौहिण : । पुं० चन्दनवृक्षे ॥ न० दिनस्यनवमेमुहूर्त्ते । यथा । अत्र पूर्वाह्णे श्राद्धमभिधायरौहिणन्तु नलङ्घयेदित्यभिधानेनपूर्वाह्ण श्राद्धसङ्गवात्परोरौहिणपर्यन्तगौ णपूर्वाह्णकाल : प्रतीयते । तेन रौहिणंपूर्वाह्णश्राद्धस्यगौणका- लत्वेनोत्तरावधि : अपराह्णश्राद्धस्यपूर्वावधिरित्यवगम्यते । ततश्च पूर्वदिनेसङ्गवात्परंरौहिणपर्यन्तं तिथिलाभेपरदिनेमुहूर्त्तत्रयमात्रे- तत्तिथिलाभेपूर्वदिनेश्राद्धम् । रौहिणान्तस्यगौणपूर्वाह्णत्वाभावात् नपरदिनेतथात्वाभावात् । उभयदिने सङ्गवलाभेपरदिने० शुक्लपक्षे तिथि र्ग्राह्या तिवचनात् । रौहिणस्तुदिव- सस्यनवममुहूर्त्तस्तत्रज्योतिषोक्त- रोहिणीदैवतत्वात्रौहिणत्वमिति इतिश्राद्धतत्त्वम् ॥ त्रि० रोहि ण्यांजाते । सन्धिवेलादीत्यनेना ण् ॥

रौहिणेय : । पुं० बुधग्रहे ॥ बलायुधे । बलदेवे ॥ न० मरकतमणौ त्रि० गोवत्से ॥ रोहिण्याअपत्य म् । शुभ्रादित्वाट्ढक् ॥

रौहिष : पुं० मृगविशेषे ॥ रोहिषंतृ णभेदमत्ति । शिपद्मत्यण् ॥ रोहित मत्स्ये । न० कत्तृणे । रोहितइति० रोहिसइतिचख्यातेतृणे ॥ रोहिषंतुव रंतिक्तंकटुपाकंव्यपोहति । हृत्क ण्ठव्याधिपित्तास्रशूलकासकफज्व- रान् ॥ रोहति । रुह० । रुहेर्वृद्धि श्चेतिटिषच् ॥

रौहिषी स्त्री० सव्यास ॥ दूर्वायाम् ॥

॥ रकार : समाप्त: ॥

## लकारस्यप्रारम्भः

लः । पुं॰ इन्द्रे । शक्रे । लकारे ॥ लघुचरे ॰ । ॰ ॥ न॰ पृथ्वीबीजे ॥ लीयते । लीङ् ॰ । अन्येभ्योऽपिदृश्यतइति डः ॥

लकचः । पुं॰ डहौ । लकुचे । इतिशब्दरत्नावली ॥

लकुचः । पुं॰ लिकुचे । डहौ । इ-ढवल्कलि । स्थूलस्कन्धे । चुद्रपन-से । धडहरा॰ इ॰ भा॰ प्र॰ ॥ अस्यगुणाः । आमंलकुचमुष्णञ्चगुरुवि-ष्टम्भकृत्तथा । मधुराम्लरसञ्चापिदो-षत्रितयरक्तकृत् । शुक्राग्निनाशन-ञ्चापिनेत्रयोरहितंस्मृतम् । सुप-क्वंतत्तुमधुरमम्लंचानिलपित्तकृ-त् ॥ कफाग्निकरंरुच्यंवृष्यंविष्ट-म्भकृन्मतम् ॥ लकयते । लकचास्वा-दने । बाहुलकादुचः ॥

लक्तकः । पुं॰ जीर्णवस्त्रखण्डे । क-र्पटे । लत्ता॰ इ॰ भ॰ प्र॰ ॥ द्रवद्र-व्यंयेनपूयतेतत्तदीयमितिस्वामी॰ तत्तुल्यंयत्क्लिश्यति । मलिन-त्वादिदृष्टजीर्णवस्त्रखण्डे॰ इतिमुकु-टः ॥ प्रक्षेदादिमार्जनार्थंवस्त्रस्य वस्त्रखण्डस्यसंज्ञेयमितिनव्याख्या-तुः ॥ लक्तति । श्लक्ष्णीभावे । बाहुल-कात्तन् । स्वार्थेकन् । यद्वा । लक्यते स्म । लक॰ । क्तः । स्वार्थेकन् ॥

लक्तकर्म्मा । पुं॰ पट्टिकाख्ये । रक्त-थलोध्रे ॥

लक्षम् । न॰ व्याजे । अपदेशे । परद्रो-हफलकातिरिक्तव्याजे । शरव्ये ॥ न॰ स्त्री॰ दशायुतसङ्ख्यायाम्- १००००० लाख इ॰ भा॰ ॥ लक्ष्य-म् । लक्षआलोचने । घञ् ॥ ल-क्ष्यतेसा ॥

लक्षकः । त्रि॰ लक्षयितरि । लक्षय-तियस्तस्मिन् ॥ यथा । लक्षकंनाम लक्षयति । यादृशार्थंयत्सम्बन्धयति शक्तस्तुयद्भवेत् । तत्तल्लक्षकंनामत-त्कथितंबुधैर्यदि । यादृशार्थंसम्ब-न्धवत्तियन्नामसङ्केतितंतदपितादृशा-र्थलक्षकम्॰ यदितादृशार्थेशक्तिशून्यं भवेत् । सयथादयस्तुशब्दास्तुरगा-दिसम्बन्धिनि॰ लवणादाविवतुरगा-द्यर्थविशिष्टापय । गङ्गादयस्तुती-रादावसङ्केतिताः । तत्सम्बन्धि-नीरादिमत्वेनतटीतापयतीरा-द्यन्वयबोधयन्तिलक्षकापय ।

लक्षणम् । न॰ नाम्नि । चिह्ने । स्व-रूपे । फले ॥ लक्ष्यतेज्ञायतेपदा-र्थोऽनेन । लक्षदर्शनाङ्कनयोः । क-रणेल्युट् ॥ तद्द्विविधम् । इतरभे-दानुमापकम्॰ व्यवहारप्रयोजकञ्चे-तिन्यायमतम् । व्याकरणमतन्तु । कृत्तद्धितसमासानामभिधानंनि-यामकम् । लक्षणन्त्वनभिज्ञानां शब्दभिज्ञानसूचकमिति । सजाती

नीये ॥

लक्ष्मम्। न० लक्षणात्व्याप्यत्वे ॥

लक्षा। स्त्री० दशायुतसङ्ख्यायाम् ॥

लक्षितः। त्रि० ख्यापिते ॥ आलोचिते ॥ दृष्टे ॥ अङ्किते ॥ लक्षेः कर्मणि क्तः ॥ लक्षणाश्रये ॥

लक्षितलक्षणा। स्त्री० लक्षितलक्षणायाम् ॥

लक्षिता। स्त्री० परकीयान्यतमनायिकाभेदे ॥

लक्ष्मणः। पुं० सौमित्रौ। श्रीरामभ्रातरि ॥ सारसे ॥ यक्षे। न० चिह्ने ॥ नामनि ॥ लक्षयति। लक्ष०। चुरादित्वात्स्वार्थे टच्। पे शिनप्रत्ययस्तस्य मुडागमो मीर्घ्यौ च ॥ त्रि० श्रीयुक्ते सश्रीके ॥ लक्ष्मीरस्यास्ति। पामादित्वान्नः। लक्ष्म्याश्चेति निपातसूत्रेणास्य सिद्धिः ॥

लक्ष्मणप्रसूः। स्त्री० सुमित्रायाम् ॥

लक्ष्मणा। स्त्री० सारसस्त्रियाम् ॥ श्वेतकण्टकार्याम्। दुर्योधनकन्यायाम्। कटशोत्तावियाम्। त्रि० स्त्रीहषणायाम्। चन्द्रपुष्पायाम् ॥ ओषधीभेदे। पुत्रकन्दायाम्। पुत्रदायाम्। नागपत्राम्। श्वेतबिन्दुपत्रायाम्। लक्ष्मणाकन्दप्रतिनामा। गौडदेशप्रसिद्धे ॥ तुषारसुषधा। पुत्राकारशक्ताल्पबिन्दुभिर्लाञ्छितासदा। लक्ष्मणापुत्रजननी

मस्तगस्याकृतिर्भवेत् ॥ कथितापुत्रदावश्यं लक्ष्मणामुनिपुङ्गवैः ॥ अदन्तत्वाट्टाप् ॥ दुर्योधनकन्यायाम्। साम्बपत्न्याम् ॥

लक्ष्म। न० चिह्ने ॥ प्रधाने ॥ लक्षयति० लक्ष्यतेवा। लक्ष०। मनिन् ॥

लक्ष्मीः। स्त्री० विष्णुपत्न्याम्। पद्मालयायाम् ॥ पद्मायाम्। लोकमातरि। मायाम् ॥ सम्पत्तौ ॥ शोभायाम् ॥ वृद्ध्यौषधे ॥ वृद्धिनामौषधे ॥ फलनीवृत्ते ॥ सीतायाम् ॥ वीरभार्यायाम् ॥ स्थलपद्मिन्याम् ॥ हरिद्रायाम् ॥ शम्याम्। द्रव्ये। मुक्तायाम् ॥ मोक्षप्राप्तौ ॥ लक्षयति० पश्यतिनीतिज्ञम्। लक्ष०। लक्षेर्मुट् चेति० ईप्रत्ययस्तस्यमुट् ॥ लक्ष्यते० लक्ष्यतेवा दुर्गायाम् ॥

लक्ष्मी। स्त्री० लक्ष्म्यर्थेषु ॥ कृदिकारादिति ङीष् ॥ लक्ष्मीर्लक्ष्मीरितिविभाषितिविकल्पाभिधानम् ॥

लक्ष्मीकान्तः। पुं० नारायणे ॥

लक्ष्मीगृहम्। न० रक्तोत्पले ॥ लक्ष्म्यायाश्चगृहम्। लक्ष्म्यावेश्मनि ॥

लक्ष्मीजनार्दनः। पुं० शालग्रामविशेषे ॥ तल्लक्षणंयथा। एकद्वारेचतुश्चक्रं नवीननीरदोपमम्। लक्ष्मी

जनार्द्दनं पर्य्यरक्षित वनमालया ॥ इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

लक्ष्मीतालः । पुं॰ श्रीतालवृक्षे ॥ तौर्यत्रिकाख्यपरिच्छेदविशेषे ॥

लक्ष्मीनारायणः । पुं॰ शालग्रामविशेषे ॥ तल्लक्षणं यथा । एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥

लक्ष्मीनृसिंहः । पुं॰ शालग्रामविशेषे ॥ तल्लक्षणन्तु । द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् । लक्ष्मीनृसिंहं विज्ञेयं गृहिणाञ्च सुखप्रदम् ॥

लक्ष्मीपतिः । पुं॰ वासुदेवे । नारायणे ॥ लक्ष्म्याः पतिः अमरको ॥ पूगे ॥ लवङ्गवृक्षे ॥ सम्पत्तियुक्ते ॥

लक्ष्मीपुत्रः । पुं॰ कामदेवे तुरङ्गमे ॥ लवे ॥ कुशे ॥

लक्ष्मीपुष्पः । पुं॰ पद्मरागमणौ ॥

लक्ष्मीफलः । पुं॰ बिल्ववृक्षे ॥ लक्ष्मीप्रदं प्रियं वा फलमस्य । शाकपार्थिवादिः ॥

लक्ष्मीवान् । पुं॰ पनसवृक्षे ॥ श्वेतरोहितवृक्षे ॥ त्रि॰ श्रीले । श्रीमति । श्रीसमन्विते ॥ लक्ष्मीरस्यास्ति । मतुप् । मादुपधायाश्चेतिवत्वं ॥

लक्ष्मीवेष्टः । पुं॰ श्रीवेष्टे ॥

लक्ष्मीशः । पुं॰ श्रीशे । विष्णौ ॥

लक्ष्मीसमाह्वया । स्त्री॰ रामपत्न्याम् । सीतायाम् ॥ लक्ष्मीसमाह्वयो यस्याः ॥

लक्ष्मीसहजः । पुं॰ चन्द्रे ॥

लक्ष्म्यारामः । पुं॰ वनविशेषे ॥ लक्ष्म्याः आरामः ॥

लक्ष्यम् न॰ शरवेध्ये । शरव्ये ॥ व्याजे । अपदेशे ॥ त्रि॰ अनुमेये ॥ लक्षणयाबोध्ये । दर्शनीये ॥ लक्षणम्॰ लक्ष्यतेवा । लक्ष आलोचने । ण्यत् ॥

लक्षीकृतः । त्रि॰ वेधुमिष्टे ॥

लगडम् । त्रि॰ चारुणि । बन्धुरे । मनोज्ञे ॥

लगितः । त्रि॰ सम्बद्धे । लगाद्॰ भा॰ ॥ लगे सङ्गे । क्तः ॥

लगुडः । पुं॰ दण्डे । दण्डकाष्ठे । लाठी॰ इ॰ भा॰ ॥

लग्नः । पुं॰ स्तुतिपाठके । प्रातर्गेये ॥ न॰ मेषादिराशीनामुदये । चि॰ यज्ञागात्मके ॥ त्रि॰ लज्जितसक्ते । लगतिफले । स्थि॰ । क्षुब्धस्वान्तेतिसूत्रे इडभावो निष्ठानत्वमपि निपात्यते ॥

लग्नकः । पुं॰ प्रतिभुवि यो हि दायं विनाऽन्यकृतऋणस्य परिशोधं कर्त्तुमात्मानं स्वीकरोति॰ यथा । यदा

कुलटायाम् । धान्यविशेषे । करालत्रिपुटायाम् ॥ लक्यतेऽसुख मस्याम् । लक आस्वादने । चुरादिः । एरच् । घञ्वा । पृषोदरादित्वान्नुम् । नुम्यनुपधत्वान्नवृद्धिः ॥ यद्वा । रमन्ते स्याम् । बाहुलकात्साधुत्वम् ॥

लङ्कादाही । पुं॰ हनूमति ॥

लङ्काधिपतिः । लङ्कापतिः । पुं॰ रावणे ॥

लङ्कायिका । स्त्री॰ पृक्कायाम् । पिडिङ्शाक॰ ह॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लङ्कामलयः । पुं॰ लङ्काद्वीपस्थमलयशैले ॥

लङ्कायिका । स्त्री॰ ) लङ्कारिका । स्त्री॰ लङ्कायिकायाम् ॥

लङ्कास्थायी । पुं॰ वृक्षविशेषे । लङ्कास्थ्याम् । लङ्कासिज॰ ह॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लङ्केशः । पुं॰ रावणे ॥

लङ्कोपिका । स्त्री॰ पृक्कौषधौ ॥ लङ्कायामुप्यते । टुवप् बीजसन्ताने । क्वुन् । वचिस्वपीतिवसम्प्रः ॥

लङ्कोयिका । स्त्री॰ पृक्कायाम् ॥ लङ्कायामूयते । ऊयीतन्तुसन्ताने । क्वुन् ॥

लङ्गः । पुं॰ सङ्गे । मिलने । लाङ्

ह॰ गौ॰ भा॰ प्र॰ षिटे ॥

लङ्गूलम् । न॰ लाङ्गूले । पुच्छे ॥

लङ्घनम् । न॰ उपवासे ॥ कर्षणे ॥ चतुष्प्रकारासंशुद्धिः पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेति लङ्घनमिति चरकोक्तौ यथानिर्णीतत्वात् ॥ अनशने ॥ लङ्घनमभयं नीतिदीर्घसन्धिसेऽनघे । विज्वरत्वं लघुत्वञ्च क्षुधास्योपजायते ॥ इत्यनशनरूपस्य लङ्घनस्य फलकथनात् ॥ त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा । लङ्घनं सन्निपातेषु कुर्याद्वारोग्यदर्शनादिति चक्रपाणिदत्तः ॥ आक्रमणे । प्लवने । अश्वगतीयगतौ ॥ प्लुतन्तु लङ्घनं पक्षिमृगगत्यनुकारकमिति हैमचन्द्रोक्तेः ॥ आक्रमणे । यथा । नचाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् । नचैनं पादतः कुर्यान्मुखेन न धमेद्बुधः ॥

लज्जकारिका । स्त्री॰ लज्जालौ । वराहक्रान्तायाम् । समङ्गायाम् । निद्रागन्धायाम् । नमस्कार्याम् ॥

लज्जा । स्त्री॰ मन्दाक्षे । त्रपायाम् । सुशीलस्य भार्यायाम् । पञ्चशान्तिम् ॥ कृतेऽकरणीये परज्ञानसम्बन्धाद्दुःखे ॥ अकरणीयाप्रवृत्तिजनकोऽन्तःकरणस्य वृत्तिविशेषे ॥ लज्जनम् । ओलस्जी व्रीडने ।

गामिभिः ॥ विंशतिर्वामवक्त्राभिरायुः पुण्ड्राभिरल्पकम् । नपूर्वधातेन्दुनिभे भ्रुवोश्चाथललाटकम् ॥ शुभमर्द्धेन्दुसंस्थानमतुङ्गं स्यात् श्रीमद्धनम् । इति ६५ अध्यायः ॥

ललाटकम् । न० प्रशस्तललाटे ॥ ललाटमात्रे ॥

ललाटन्तपः । पुं० सूर्ये ॥ ललाटं तपति । तपसन्तापे । असूर्यललाटयोरितिखश् । मुम् ॥

ललाटिका । स्त्री० कर्णादिकृतभालभूषणे । पत्रपाश्यायाम् । मागेपाटी० बिन्दीबेना० टीकाटीपो० प्रसिद्धाते ॥ ललाटस्यालङ्कारः । ललाटे भवोऽलङ्कारो वा । कर्णललाटात्कनलङ्कारे ।

ललामम् । न० पुं० लाङ्गूले । ध्वजे ॥ शृङ्गे ॥ प्रधाने ॥ भूषायाम् ॥ रम्ये ॥ वाजिनि ॥ पुण्ड्रे । अश्वादीनां भालेऽन्यवर्णचिह्ने ॥ तुरङ्गे ॥ प्रभावे । अश्वस्यभूषायाम् ॥ ललनम् । लडवाल्ये० लड विलासे । सम्पदादित्वात्क्विप् । डलयोरैक्यम् । ललमततीति अमगत्यादौ । कर्मण्यण् ॥

ललामन्तम् । न० पुरोभागेन्यस्ते ललाटपर्यन्तमागते शिखोर्द्ध्वंयिमाल्ये ॥ ललाममिव । इवार्थेकन् ॥ मुण्डमालायाम् ॥

ललाम । न० अश्वे ॥ चिह्ने । शृङ्गे ॥ पताकायाम् ॥ रम्ये ॥ प्रधाने । भूषायाम् ॥ पुण्ड्रे ॥ पुच्छे । प्रभावे ललनम्० लल् । ललमामति । अम० । बाहुलकात् कमिन् ॥

ललामी । स्त्री० कर्णधिमिकायाम् । कर्णाभरणविशेषे ॥

ललितः । पुं० प्रातर्गेयेरागविशेषे । यथा । प्रातर्गेयास्तुदेशाखो ललितः पटमञ्जरी । विभासभैरवी चैव कामोदीगौडकीयंपि ॥ अथास्य रूपं यथा । प्रफुल्लसप्तच्छदमाल्यधारी युवातिगौरोऽलसलोचनश्रीः । विनिःश्वसन्सन्दहात्प्रभाते विलासिवेशो ललितः प्रदिष्टः ॥ न० स्त्रीणांशृङ्गारभावजक्रियाविशेषस्वभावविशेषे ॥ सुकुमारविधानेन भ्रूनेत्रादिक्रियास्विष्करचरणाङ्गविन्यासोललितम् । तथाच । सुकुमाराङ्गविन्यासो मसृणो ललितं भवेत् । यथा । सभ्रूभङ्गं करकिसलयावर्त्तनैरालपन्ती सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन । विन्यस्यन्ती चरणकमले लीलया स्वैरयाति-नि: शङ्का च प्रथमवयसा नर्त्तिता पङ्कजाक्षी ॥ भ्रूनेत्रादिक्रियाशालि सुकुमारविधानतः । हस्तपादाङ्गविन्यासललितं विदुरित्यन्ये

लवणाब्धि : । पुं॰ लवणोदे । क्षारा
ब्धौ ॥

लवणाब्धिजम् । न॰ सामुद्रलवणे ॥

लवणाम्भाः । पुं॰ लवणाब्धौ ॥ लवणं
क्षारमम्भोयस्य ॥

लवणारजम् । न॰ लोणारक्षारे ॥

लवणाष्टकम् । न॰ सैन्धवादिषु ॥
तद्यथा । लवणाष्टकमेतत्तु सैन्धवस्तु
वर्चलम् । विडंसमुद्रसम्भामुद्भि
दंरोमकंगडम् ॥

लवणोत्तमम् । न॰ सैन्धवे ॥

लवणोत्थम् । न॰ लोणारक्षारे ॥

लवणोद : । पुं॰ लवणार्णवे ॥ लव
णमुदकंयस्य । उत्तरपदस्यार्थेत्युद
कस्योदादेश : ॥

लवनम् । न॰ छेदने । अभिलावे ।
लूयतेइति आधाप्रसिद्धे ॥ लूञ्॰
ल्युट् ॥

लवली । स्त्री॰ फलवृक्षविशेषे । यौ
मकायाम् । अस्थिमायाम् । लोना॰
इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लवपति : । पुं॰ नवांशेशे ॥

लवली । स्त्री॰ सुगन्धमूलायाम् ।
कोमलवल्कलायाम् । नोयाड़ि॰
इ॰ गौ॰ दे॰ भा॰ प्र॰ फलवृन्ते
। अस्यफलगुणायथा । लवलीफल
मश्मार्शः कफपित्तहरंगुरु । विश
दंरोचनंरुच्यंसाद्यंतुवरंरसे ॥

लवाक : । पुं॰ छेदनद्रव्ये ॥

लवाणक : । पुं॰ दात्रादौ ॥
लूयतेऽनेन । लूञ्॰ आणकोलूधूशि
ङ्घिधाञ्भ्यद्व्याणक : ॥

लवि : । त्रि॰ छिदुरे ॥

लवित्रम् । न॰ दात्रे ॥ लूयतेऽनेन ।
अर्त्तिलूध्वित्यादिना॰ इत्र : ॥

लशुन : । पुं॰ न॰ रसोने । अस्यप
र्यायादयोयथा । रसोनोलशुनोरि
ष्टोम्लेच्छकन्दोमहौषधम् । महाक
न्दोरसोनोन्योगृञ्जनोदीर्घपत्रक :
। यस्मात्तिरस सुपूयोत्थमसुर
कात्तुना । दीर्घनालायपत्रत्वाद्
भिदासौपसादृश : ॥ अश्नाति
॰ अश् उनन् । अशभोजने॰ अश
व्याप्तौवा । अशेर्लशचेत्युनन् ॥

लष्व : । पुं॰ नर्त्तके । लष्यते । लष
कान्तौ । सर्वनिघृष्वेतिसाधु : ॥

लसत् । त्रि॰ उल्लसति । प्रकाशमा
ने ॥

लसमान : । त्रि॰ दीप्यमाने ॥

लसा । स्त्री॰ हरिद्रायाम् ॥

लसिका । स्त्री॰ लालायाम् ॥

लसितम् । न॰ चेष्टिते ॥

लसीका । स्त्री॰ इक्षुरसे । त्वङ्मांस
मध्यगेरसे ॥

लस्त : । त्रि॰ श्लिष्टे । क्रीडिते ॥ श्लि
ष्टयुक्ते ॥ लसश्लेष । लसश्लेष
णक्रीडनयो : । क्त : ॥

लस्तक : । पुं॰ धनुषोमध्यभागे ॥

स्वार्थे कन् ॥

लस्तकी । पुं॰ कार्मुके । धनुषि ॥

लहरिः । स्त्री॰ )
लहरी । स्त्री॰ ) तरङ्गे ॥ महातरङ्गे । उल्लोले ॥ कल्लोले ॥

ला । स्त्री॰ दाने । ग्रहणे । लातेः क्विप् ॥

लाक्षकी । स्त्री॰ सीतायाम् ॥

लाक्षणिकः । त्रि॰ लक्षणाभिज्ञे ॥ लक्षणमधीते॰ वेद वा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥ लक्षणयाप्रतिपादके । लक्षणागम्यार्थे ॥

लाक्षा स्त्री॰ राक्षायाम् । जतुनि । यावे । अलक्ते । द्रुमामये ॥ लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः । चक्षुष्या कफपित्तास्रहिक्काकासज्वरप्रणुत् । व्रणोरःक्षतवीसर्पकृमिकुष्ठगदापहा । अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः ॥ लोक्यते । लक्षयितव्यशोभिगुणादिः । यद्वा, लक्षामृतः । यद्वा लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वात्॰ लाक्षारोचने इति निर्देशाद्दीर्घः । लक्ष्यतेऽनया वा । गुरोश्च हलः । प्रज्ञाद्यण् । अजादित्वाट्टाप् ॥

लाक्षातरुः । पुं॰ पलाशवृक्षे ॥

लाक्षातैलम् । न॰ लाक्षादितैलमिति प्रसिद्धे पक्वतैलविशेषे ॥ तद्द्विविधं स्वल्पमहच्चेति ॥

लाक्षापुष्पा । स्त्री॰ गुलञ्चाख्यशतपत्र्याम् ॥

लाक्षाप्रसादः । पुं॰ पट्टिकालोध्रे ॥

लाक्षाप्रसादनः । पुं॰ रक्तलोध्रे । क्रमुके । पट्टिकायाम् ॥ लाक्षाप्रसीदत्यनेन । षद्लृ॰ । करणे ल्युट् ॥

लाक्षावृक्षः । पुं॰ कोशाम्रे ॥ पलाशवृक्षे ॥

लाक्षिकः । पुं॰ लाक्षाभिज्ञे ॥

लाक्ष्यिकः । पुं॰ लक्ष्याभिज्ञे ॥ अध्येतरि वेदितरि च॰ क्रतूक्थादिसूत्रान्ताट्ठक् । लक्ष्यानुसूत्रस्य लक्षणे॰ इति वार्त्तिकात् ठक् ॥

लाघवम् । न॰ आरोग्ये ॥ अप्रभुत्वे अनादरविषये । लघिमनि ॥ कार्यैकसमवेतहेतुर्धर्मो लाघवम्॰ गौरवप्रतिद्वन्द्वि यस्मिन् सति लघुत्वगमनम् भवति । तदेव लाघवं कश्चित् तिर्यग्गमनहेतुः यथा वायोः । यथा कारणानां दृष्टिपटुत्वे तुल्ये लाघवम्॰ गुरुत्वे मन्दानिष्पत्तिरिति ॥ लघोर्भावः । इगन्ताच्च लघुपूर्वादित्यण् ॥

लाङ्गलम् । न॰ कुसुमविशेषे ॥ भूमिकर्षणयन्त्रविशेषे । गोदारणे

। सीरे । हले । हयराजे । ताले ॥ शस्त्रास्त्रविशेषे । लिङ्गे ॥ लङ्गति । लगिगतौ । बाहुलकात्कलच्॰ दीर्घश्च ॥

लाङ्गलग्रह : । पुं॰ कृषके ।

लाङ्गलचक्रम् । न॰ कृषिकर्मोपित लाङ्गलाकारचक्रविशेषे ॥

लाङ्गलदण्ड: पुं॰ ईषायाम् । हलयुगयोर्मध्यकाष्ठे ॥ लाङ्गलस्य दण्ड : ।

लाङ्गलपद्धति ।स्त्री॰ सीतायाम् । हलरेखायाम् ॥ लाङ्गलस्य पद्धति ॥

लाङ्गलिक : पुं॰ स्थावरविषभेदे ॥

लाङ्गलिका । स्त्री॰ लाङ्गलीहक्षे ।

लाङ्गलिकी । स्त्री॰ अग्निशिखौषधौ ॥ लाङ्गलपुष्पविशेषोऽस्त्यस्या : । अतइनिठनाविति ठन् । जातेरित्यस्त्रीविषयादिति ङीष् ॥

लाङ्गली । पुं॰ बलदेवे ॥ हलिनि । नारिकेले ॥ सर्पे ॥ लाङ्गलमस्त्यस्य । इनि : ॥

लाङ्गली । स्त्री॰ लाङ्गलाकारपुष्पजलपिप्पलीविशेषे । शारदायाम् । तोयपिप्पल्याम् ॥ कांचडा॰ इ॰ गौ॰ दे॰ भा॰ लाङ्गलाकारोऽस्त्यस्या: अच् । गौरादि : ।

लाङ्गुलम् । न॰ पुच्छे ।

लाङ्गुली । पुं॰ कपिकच्छ्वाम् ।

लाङ्गूलम् । न॰ पुच्छे । लूने । वालहस्ते । वालधौ ॥ लङ्गति । लगि॰ । खर्जपिञ्जादिभ्यऊरोलचाविति ऊलच्॰ लङ्गेर्वृद्धिश्च ॥ शेफसि । शिश्ने । कुसूले ॥

लाङ्गूलिका । स्त्री॰ पृश्निपर्ण्याम् ॥

लाङ्गूली । पुं॰ वानरे ॥ ऋषभनामौषधौ ॥

लाज : । पुं॰ आर्द्रतण्डुले ।

लाजा । पुं॰ भृष्टव्रीहौ । भृष्टधान्ये । पतिव्रीह्योर्भृष्टा लाजा इति संज्ञिता : । यवादयस्तु भृष्टा धानापरिकीर्तिता : ॥ लाजास्युर्मधुरा शीतर्पणा: पित्तनाशना : । शीघ्रमग्निबलास्त्या: किञ्चिद्रूक्षा लघवस्तथा : ॥ अत्यग्नीसारयमनो धातुमाद्यकर : पर : मन्दाग्निविषमाग्नीनां बालानां स्थविरस्य पितास ॥ देवसुकुमाराणां लाजमण्ड: सुसंस्कृत : ॥ अपिच । शीतोष्णसुखण्डुलानि धान्यानि सतुषाणि च । भृष्टानि स्फुटितान्युक्ता लाजा इति मनीषिण: । लाजा : स्युर्मधुरा: शीतालघवो दीपनाश्च ते स्वल्पमूत्रमलारूक्षा बल्या: पित्तकफच्छिद: ॥ छर्द्यतीसारदाहास्रमेहमेदस्तृषापहा: ॥ न॰ उशीरे ॥ लज्यन्ते । लज भर्जने ॥ घञ् ।

लाजा । स्त्री॰ अक्षते ।

लाञ्छन : । पुं॰ रामोधान्ये ॥ न॰

नामनि ॥ चिह्ने ॥ लाञ्छ्यते । लाञ्छिलक्षणे ल्युट् ॥

लाटः । पुं॰ देशविशेषे ॥ यथा । अवन्तीतः पश्चिमेतुवैदर्भाद्दक्षिणोत्तरे । लाटदेशः समाख्यातस्तंत्रे योगिनिसद्मने ॥ जीर्णके । वस्त्रे ॥ जीर्णभूषणादिषु ॥

लाटानुप्रासः । पुं॰ शब्दालङ्कारविशेषप्रभेदे ॥ यथा । शाब्दस्तु लाटानुप्रासोभेदेतात्पर्यमात्रतः ॥ शब्दगतोनुप्रासः । शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्च॰लाटानुप्रासः ॥ एकपदानुप्रासश्चायं । पदानांसः । सइति लाटानुप्रासः उदाहरणम् । यस्य नसविधे दयितादवदहनस्तुहिनदीधितिस्तस्य । यस्यचसविधेदयितादवदहनस्तुहिनदीधितिस्तस्य ॥ पदस्यापि ॥ अभिशब्देनसङ्गतिसमुच्चीयते । उदाहरणम् । वदनंवरवर्णिन्यास्तस्याः सत्यंसुधाकरः । सुधाकरः क्वनुपुनः कलङ्कविकलोभवेत् ॥

लापः । पुं॰ कथने । लपनम् । लप॰ । घञ् ॥

लाभः । पुं॰ मूलधनादधिकाप्तिौ । विक्रेयघटादीनां मूल्यादधिकया प्राप्तद्रव्ये । फले । इष्टप्राप्तौ ॥ आत्मलाभात्परोलाभो नास्तीति विदुषांमतम् ॥ प्राप्तौ ॥ लम्भादेकादशेस्थाने ॥ लभ्यते । डुलभष् प्राप्तौ । अकर्तरीतिघञ् । संज्ञायामित्यस्याप्रायिकत्वात् ॥ उत्कृष्टपुरुषार्थलाभे सम्भवत्यधमं काममयमानोमूर्खः ॥

लामज्जकम् । न॰ वीरणमूले । नलदे । उशीरवत्पीतच्छविलघयिशेषे ॥ लामज्जकं हिमं तिक्तं लघु दोषत्रयास्रजित् । त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥

लालनम् । न॰ अत्यन्तस्नेहकरणे । प्रेमपूर्वकबालकादरणे ॥ यथा । लालनेबहवोदोषास्ताडनेबहवोगुणाः । तस्मात्पुत्रञ्चशिष्यञ्चताडयेन्नतुलालयेत् ॥ पञ्चवर्षाणि पुत्रान्लालयेत्पालयेत्पिता । ततः षोडशपर्यन्तं गुणान्विद्यांश्चशिक्षयेत् ॥ विंशत्यब्दाधिकान्पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेहंप्रदर्शयेत् ॥

लालसः । पुं॰ लालसायामर्थेघ् । त्रि॰ उत्सुके ॥ भृशंलसनमित्यर्थे यङन्तादच् ॥

लालसा । स्त्री॰ औत्सुक्ये ॥ तृष्णातिरेके ॥ महाभिलाषे ॥ याञ्चायाम् ॥ लोभे ॥ दोहदे ॥ लालसायाम् । औणादिकोऽसच् ॥ यद्वा । लसकान्तौ । भृशंलसन

लदर्शिनि सेवकी । प्रभुभावनिदर्शिनि ॥ ललाटं कोपप्रसादचिह्नं ललाटमेव वा पश्यति । संज्ञायां ललाटकुक्ष्यौ पश्यतीति ठक् ॥ कार्यार्थमसेवके । दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषु प्रतिष्ठत इत्यर्थः ॥ त्रि॰ ललाटसम्बन्धिनि ॥

लालाभक्षः । पुं॰ नरकविशेषे ॥

लालामिकः । त्रि॰ ललामग्राहिणि ॥ ललामं गृह्णाति । प्रतिकण्ठार्थललामेति ठक् ॥

लालामेहः । पुं॰ प्रमेहविशेषे ॥ यथा । लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् । प्रमेहतीति शेषः । औषधमस्य । गुडूच्याः स्वरसः पिबेन्मधुमासवं मेहजित् । हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाहितः ॥

लालाविषः । पुं॰ लूतादौ ॥

लालास्रावः । पुं॰ ऊर्णनाभे ॥

लालिकः । पुं॰ महिषे ॥

लालितः । त्रि॰ पालिते ॥ उपस्कृते ॥

लालित्यम् । न॰ ललितस्वभावे ॥ ष्यञ् ॥

लावः । पुं॰ पक्षिविशेषे । लवा॰ इ॰ भा॰ प्र॰ ॥ अस्य प्रभेदा मांसगुणाश्च यथा । लावा विष्किरवर्गस्य चतुर्धा मता बुधैः । पांशुलो गौरकोऽन्योऽपि पौण्ड्रको दर्भकस्तथा । लवाः षड्किकसाः स्निग्धा ज्वरघ्ना ग्राहिणो हिमाः । पांशुलः श्लेष्मलस्तेषु वीर्योष्णोऽनिलनाशनः ॥ गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् । पौण्ड्रकः पित्तकृत्किञ्चिल्लघुर्वातकफापहः ॥ दर्भको रक्तपित्तघ्नो हृद्यामयहरो हिमः । पौण्ड्रकः किञ्चिद्रूक्षः । लावयति । लूञ् । स्वार्थे णिच् । अच् । एदि ॥

लावकः । पुं॰ लावपक्षिणि । लघुजङ्घे ॥

लावणम् । न॰ लवणे ॥ नम्रे ॥ इति रत्नमाला ॥ त्रि॰ लवणेन संस्कृते ॥ इति हेमचन्द्रः ॥ लवणसम्बन्धिनि ॥

लावणिकः । पुं॰ लवणवणिजि ॥ लवणं पण्यमस्य । लवणाट्ठञ् ॥ त्रि॰ लावण्यवति । लावण्यं कान्तिविशेषोऽस्यास्ति । अतइनिठनाविति ठन् । ठस्येकः । यस्येति च त्यस्योपधालक्षितलस्येति यलोपः ॥ लवणेन संस्कृते ॥

लावण्यम् । न॰ कान्तिविशेषे ॥ तल्लक्षणं यथा । मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं तदिहोच्यते ॥ लवणस्येदं विद्यतेऽस्य लवणम्

। वर्णदृढादिभ्यः ष्यञ् । लवणस्य भाव : । दृढादित्वात् ष्यञ् ॥ यथा । ' लवणाख्यिट् • सैव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥ रूपे ॥

लावण्यार्जितम् । न॰ विवाहकाले श्वश्रूश्वशुराभ्यां दत्ते धने ॥ यथा । प्रीत्या दत्तन्तु यत् किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं यच्च तत् लावण्यार्जितमुच्यते ॥ 'लावण्यं प्रीतिकर्म वस्त्रादि॰ तथाच प्रणतायै प्रीत्यादिमत्यै वा स्त्रियै श्वशुरादिना दत्तं तृतीयं स्त्रीधनमित्यर्थः ॥

लावा । स्त्री॰ लावपक्षिणि ।

लाबुः । ) स्त्री॰
लाबुकम् । ) न॰ तुम्ब्याम् ।

लाबुका । स्त्री॰ तुम्बिकाभेदे ॥

लाबुकी॰ स्वरवीणायाम् ॥ इ॰ हा॰ स्त्री॰ ॥

लाबू । स्त्री॰ तुम्ब्याम् ॥

लाषुकः । त्रि॰ लषणशीले ॥ लष्यति॰ लषति शीलः । लषका न्नौ ॥ लषपतपदेत्युकञ् ॥

लासः । पुं॰ नृत्यभेदे ॥ स्त्रीणां नृत्ये । यूषे ॥ लसनम् । लस श्लेषणक्रीडनयोः । घञ् ॥

लासकः । पुं॰ लास्यकारिणि । नर्त्तके ॥ केकिनि । मयूरे ॥ वेष्टके ॥ लसति । लस॰ ण्वुल् ॥

लासिका । स्त्री॰ नृत्यकारिण्याम् ॥ नर्त्तक्याम् । लसति । लस॰ ण्वुल् । प्रत्ययस्थादितीत्वम् ॥

लास्फोटनी । स्त्री॰ आस्फोटन्याम् । वेधनिकायाम् ॥

लास्यम् । न॰ नृत्ये । सुकुमारनृत्ये । ताललयाश्रये ॥ पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते ॥ अपिच । कुशितं यौवतं यत्तु तिलास्यं द्विविधमुच्यते । यथाभिनयार्थैर्भावै रसै राशे वशुम्बने : ॥ नायिकानायकौ रङ्गे नृत्यतश्छुरितं विराम् । मधुरं यल्लीलाभिर्नटीभिर्यच्चनृत्यते ; वशीकरणविद्याभं तल्लास्यं यौवतं मतमिति । लस॰ । ऋहलोर्ण्यत् ॥ तौर्यत्रिके ॥ पुं॰ नर्त्तके ॥

लास्यकम् । न॰ नृत्ये ॥

लास्या । स्त्री॰ नर्त्तक्याम् ॥

लिकुचः । पुं॰ लकुचे । डहौ । वडहल इ॰ भा॰ प्र॰ ॥ लकति । लक आस्वादने । बाहुलकादुचप्रत्ययः । पृषोदरादिः ॥ न॰ तुफि ॥

लिक्का । स्त्री॰ लिक्षायाम् ॥

लिक्षा । स्त्री॰ यूकाण्डे । लिक्षिकायाम् । लीक॰ लीख॰ इ॰ भा॰ प्र॰ केशकीटे । यूकाभेदे ॥ लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वादस्येत्वम् ॥ परि

मोणविशेषे । कचायाष्टके ॥ यथा । त्रसरेणवोऽष्टौविज्ञेयालिक्षैकापरिमाणत : । इतिमनु : ॥ अपिच । जालान्तरगतेभानौयच्चाणु दृश्यतेरज : । तैश्चतुर्भिर्भवेल्लिक्षालिक्षाषड्भिस्सर्षपहृति ॥

लिक्षिका । स्त्री॰ लिक्षायाम् ॥

लिखनम् । न॰ लेखने ॥ अक्षराङ्गौ यायांविधिलिपौ ॥ यथा । अशय लिखनं पूर्वं यत्कालेनिरूपितम् । सर्वथसिद्धं तु राधे अन्ये भाक्षको लिखि : ॥ विधातुर्यविधातारये यांयलिखनं क्षतम् । ब्रह्मादीनां स्वस्त्रद्धायांनतत्खण्डं कदाचन ॥ ब्र॰ वै॰ पु॰ ॥

लिखित : । पुं॰ धर्मशास्त्रप्रवर्त्तके मुनिविशेषे ॥ न॰ वर्णसंस्थाने, लिपौ ॥ लिख्यतेस्म । लिखअक्षरविन्यासे । क्त : ॥ त्रि॰ लिखितपत्रादौ ॥ यथा । प्रमाणं लिखितं भुक्तिः साक्षिणश्चेतिकीर्त्तितम् ॥ इति मिताक्षरायां याज्ञवल्क्य : ॥

लिखिताक्षरविन्यास : । पुं॰ लिपौ ॥

लिगु : । पुं॰ मूर्खे ॥ भूप्रदेशे ॥ मृगे ॥ न॰ चित्ते ॥ लिगति । लगेरिइ । खरुशङ्क्वितिकुप्रत्ययान्त : साधु : ॥

लिङ्गम् । न॰ चिह्ने ॥ शिवमूर्त्तिविशेषे ॥ यथा । नेहलिङ्गार्चनात् किञ्चित्पुण्यमभ्यधिकं क्वचित् । इतिविज्ञाययत्नेनपूजनीय : सदाशिव : ॥ तथा । दुर्गार्चनरतोनित्यं महापातकसम्भवै : । दोषैर्नलिप्यतेवीरपद्मपत्र मिवाम्भसा ॥ इति भविष्यपुराणम् ॥ साङ्ख्योक्तप्रकृतौ ॥ हेतौ ॥ धर्मे ॥ व्याप्ये । व्यापकस्मारके ॥ व्यक्तौ ॥ तत्त्वलिङ्गं प्रधानस्य । महदादि सूक्ष्मपर्यन्ते ॥ लिङ्गनाज्ज्ञापनान्बुद्ध्यादिषु ॥ लयङ्गच्छतीति॰ सूक्ष्मशरीरे । पञ्चज्ञानेन्द्रियाणि॰ पञ्चकर्मेन्द्रियाणि॰ पञ्चप्राणा : मनोबुद्धिश्चेतिसप्तदशात्मके ॥ यथा । बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसाधिया । शरीरं सप्तदशभि : सूक्ष्मं तल्लिङ्गमुच्यते ॥ लिङ्गतेगम्यतेऽनेनेति॰ व्युत्पत्ते ॥ अनुमाने ॥ तत्त्रिविधम् । अन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिभेदेति ॥ उपक्रमादिषट्सु ॥ यथा । उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीचलिङ्गं तात्पर्यनिर्णये । प्रमाणविशेषे ॥ शब्दसामर्थ्ये लिङ्गम् । यथाहु : । सामर्थ्यं सर्वभावानांलिङ्गमित्यभिधीयते॰ इति॰ । सामर्थ्यं रूढिरेव॰ समाख्याबीभेद : । तेनवर्षिर्देवसदनन्दा

मीतिमन्तस्यकुशलवनाङ्गलंनतु॰ धलपादिलवनाङ्गखम् । तस्यवर्हि र्दीमीतिलिङ्गात्तल्लक्षनं प्रकाशयि तुं समर्थं स्यात् । एवमन्यथापि लिङ्गादिनिर्धेशोद्रष्टव्यः । त दिदं लिङ्गंधाक्यादिभ्योवलवत् । अतएवच्छान्दैसद्यंकर्णामीतिम न्तस्यपुरोडाशसदनधारणाङ्गत्वं सदनं कर्णामीतिलिङ्गात्॰नतु वाक्यात् । मगसि । अवगम्यतेऽवा यतेऽवगच्छतियेनतल्लिङ्गमितिपू ज्यपादाः ॥ पुंस्त्वादौ ॥ शिश्नसि । तेङ्गने । अस्यशुभाशुभलक्षणं यथा । दीर्घलिङ्गेनदारिद्र्यं स्थू ललिङ्गेननिर्धनः । कृशलिङ्गे नसौभाग्यं ह्रस्वलिङ्गेनभूपतिः॥ धार्कर्ग : कठिनैर्लिङ्गैः परदा ररत : सदा । रमतेपरदारासौम् लिङ्गेभवतिध्रुवम् ॥ कृशलिङ्गेनसूक्ष्मेण रक्तलिङ्गेनभूपति : परस्त्रीरमतेनिर्धनारोणांशक्षमेभवे त् ॥ कृशलिङ्गेनरक्तेनलभतेचो त्तमाङ्गनाम् । रक्तंसुखस्वादि व्याङ्ग्या : कन्यकाया : पतिर्भवे त् ॥ इतिसामुद्रकम् ॥ अपिच । दक्षिणावर्तलिङ्गोय : सभवेत् पुत्रवान्नरः वामावर्ते तथाकन्याः सुयताख्यक्षयन्तिच । स्थूलैः सि रालैः कठिनैर्दारादारिद्र्यभाजना :

। कृतुभिर्वर्तुलैर्लिङ्गैः पुरुषाः सुखभागिनः । यस्यपादोपविष्टस्य भूमिंस्पृशतिमेहनम् । भोगवान् सतुविज्ञेयोनरोदारिद्र्यभाजनः ॥ भूमौपादोपविष्टस्ययस्यस्पृशतिमेह नम् । भोगवान्सतुविज्ञेयस्तथातु रगमेहनः ॥ स्थूलपन्थिमुतेलिङ्गे नरोऽतिसुखभाग्भवेत् । लिङ्गे मस्तुनामध्यर्भियतेकृच्छ्रपीडित इति ॥ लिङ्ग्यतेऽनेन । लिगिग तौ । हलश्चेतिघञ् । [illegible] ॥

लिङ्गवञ्चः । पुं॰ इन्द्रशठि । मारिच्ये ॥

लिङ्गधारिणी । स्त्री॰ देवीविशेषे । नैमिषेतुमहास्थानेदेवीसालिङ्ग धारिणीतिदेवीगीता ॥

लिङ्गपुराणम् । न॰ लैङ्गे महापु राणे । तत्श्लोकसंख्या यथा । एकादशसहस्राणिलिङ्गाख्यंचा तिविस्तृतमिति ॥

लिङ्गवर्धनः । पुं॰ कपित्थवृक्षे ॥

लिङ्गवर्धिनी । स्त्री॰ अपामार्गे ॥

लिङ्गवृत्तिः । पुं॰ धर्मध्वजिनि । जीविकार्थजटादिचिह्नधारिणि ॥ जीविकादिनिमित्तन्तुयोऽधिभर्त्ति ज टादिकम् । धर्मध्वजीलिङ्गवृ त्तिर्धर्मवञ्चनिमयते ॥ लिंगमात्र मादिचिह्नधारणं वृत्तिर्जीविकाहेतु र्यस्य सः ॥

लिङ्गशरीरम् । न॰ सप्तदशावयवे

सूक्ष्मशरीरे । सप्तदशावयवास्तु । ज्ञानेन्द्रियपंचकम् कर्मेन्द्रियपंचकं प्राणादिवायुपंचकं बुद्धिमनसी चेति ॥ लिङ्ग्यते ज्ञायतेऽप्रत्यगात्मसद्भावोऽनेन० तल्लिङ्गम् । लिगि० इत्यस्मादिति घञ् । लिङ्गस्य तत्शरीरस्येति विग्रहः ॥

लिङ्गस्थ : । पुं० ब्रह्मचारिणि । व-र्णिनि ॥

लिङ्गानुशासनम् । न० वररुच्यादिकृतेनाम्नां लिङ्गबोधकेग्रन्थे ॥ तच्च शासनानर्हम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येतिसमासान्तादिति सूत्रभाष्योक्तेर्लिङ्गानुवदनं लोकादेवसिद्धमितिनिष्कर्षात् ॥

लिङ्गालिका । स्त्री० दीनाथास् । क्षुद्रमूषिकायाम् ॥

लिङ्गी । पुं० प्रव्रजितादिषु । ब्रह्मचार्यादिषु ॥ धर्मध्वजिनि ॥ वेशधरे ॥ गजे ॥ आत्मनि ॥ लिङ्गमस्यास्ति । इनि : ॥ न० व्यापके ॥

लिङ्गिनी । स्त्री० लताविशेषे । बहुपत्र्याम् । शिवमल्लिकायाम् । चित्रफलायाम् । काण्डाख्याम् । आपस्तम्भिन्याम् । पंचगुरिया० द्र० भाषाप्रसिद्धे ॥

लिन्द : । त्रि० पिच्छिले अशुचौ ॥ यौ-गिकोऽयम् ॥

लिपि : । स्त्री० लिखिताक्षरे । नि-यौ ॥ सा पञ्चविधा यथा मुद्रालिपि : शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूता लिपयः पञ्चधास्मृताः ॥ एताभिर्लिपिभिर्व्याप्ताधरिः श्रीशुभङ्करेतिवाराही-तन्त्रोक्तेः ॥ लेखन्यालिखितं विप्रैर्मुद्राभिरङ्कितन्तुयत् । शिल्पादिभिर्मितं यच्च पाठ्यं धार्यं स्वसर्वदैतिमुण्डमालातन्त्रोक्तेश्च ॥ लिप्यते । लिप-उपलेपे । इगुपधात्किदितीत् ॥ लिपि : प्रमाणं सर्वेषां सर्वचैवप्रशस्यते । विशेषाद्वृवहारेषु नयिनस्थि-रं यतइति श्रीमहानिर्वाणतन्त्र-म् ॥

लिपिकर : । पुं० लेखके ॥ लिपिं करोति । कृञ्० । दिवाविभा-निट : ॥

लिपिका । स्त्री० लिपौ ॥

लिपिकार : । पुं० लेखके ॥ लिपिं करोति । कर्मण्यण् ॥

लिपी । स्त्री० लिपौ ॥ लिप्यते लिपिरित्यस्यात्कृदिकारादक्तिन इति ङीप् ॥

लिप्त : । त्रि० कृतलेपने । विलि-प्ते ॥ विषदिग्धे विषाक्ते ॥ भु-क्ते । भक्षिते ॥ दिग्धे ॥ लिप्यते-स्म । लिप० । क्त : ॥ यथा । लि-नाति । लीङ् श्लेषणे । लीयते वा । लङि श्लेषणे । लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोरिति प्र-

लीड् । सम्पदादित्वात् क्विप् । लियं लाति । ला॰ । आतोऽनुपसर्गे कः ॥ यद्वा । लेलायनम् । लेला दीप्तौ॰ कण्ड्वादिः । भिदादयङ् । अप्रत्ययादिति षो । पृषोदरादिः ॥ यद्वा । लयनम् । लीङो बाहुलकात् गुणाभावश्च ॥

लीलाखेलः । पुं॰ अतिशक्वरीछन्दः १५ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः । यथा । मायाहोगोविन्दः कालिन्दीकूलच्छायाचक्रे॰ रासोल्लासः क्रीडद्गोपीभिः सार्द्धं लीलाखेलः । मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लीला॰ यद्देवानामीशः स्वर्वेश्याभिः खेलन्तीभिः ॥ त्रि॰ विलाससुभगे ॥

लीलावती । स्त्री॰ केलियुक्तायाम् ॥ विलासवत्याम् ॥ शृङ्गारभावचेष्टाऽन्वितायाम् । लीलाविशिष्टायाम् ॥ भास्कराचार्यस्यपत्न्याम् ॥ भास्कराचार्यकृतपाटीगणितग्रन्थे ॥ न्यायग्रन्थविशेषे ॥ वेश्याविशेषे ॥ मात्रावृत्तविशेषे ॥ तल्लक्षणोदाहरणे यथा । लघुगुरुकृतनियमविरहितमिह दिशदलयचतुष्कलमष्टयाम् । द्वात्रिंशत्कलविरचितमिदमतिशयसहृदयहृदयहरणम् । लीलावतिकाभवतिचकारकर्णविलगणजगणभगणकलिता॰ फणिनायकपिङ्गलविरचितमद्भुतवृत्तममलगुम्फनलालिता ॥ यथा । गोकोटिंप्रतिदिनमिह वितरन् द्विजवरनिवहेमुद्माततु येरिपुतिमिरदलनकरत्वसकुशेशयसमिलकोपितसकुरुमाले । दुरितविलयनिजितरखरनोदयनृपराजवजयनवक्यसिरणे त्वयि चलति चलतिमसुधावसुधाधिपकीर्त्तिं सिंहधरणीरमणे । लीला शोभाऽस्त्यस्याम् । मतुप् । ङीप् ॥

लीलोद्यानम् । न॰ देववने ॥

लुकायितः । त्रि॰ अन्तर्हिते ॥

लुङ्गः । पुं॰ मातुलुङ्गे । बीजपूरे । लुञ्ज्यते । लुञ्जिभाषार्थः । घञ् । चजोरितिकुत्वम् । न्यङ्क्वादित्वात् ॥

लुङ्गुषः । पुं॰ छोलङ्गे ॥

लुठनम् । न॰ वेल्लने । अश्वस्यभूमौ पुनः पुनः शरीरपतनने । लोठन॰ कु॰ भा॰ प्र॰ ॥

लुठितः । त्रि॰ अश्वस्थाल्वर्थमुहुर्मुहुः परावृत्ते । उपावृत्ते ॥ वेल्लते । अपावृत्ते । परावृत्ते ॥ लुठति स्म । लुठप्रतिघाते । अकर्मकत्वात् क्तः ॥

लुण्ठकः । पुं॰ शाकविशेषे । नव्या॰ कू॰ गौ॰ भा॰ प्रसिद्धे ॥

लुण्टाकः । पुं॰ चौरे ॥

लुण्टाकी । स्त्री॰ चौरायांस्त्रियाम् ॥

लुण्ठक : । त्रि॰ लोष्ठकारके ॥

लुण्ठनम् । न॰ इयलुण्ठिते ॥ लूटइति प्रसिद्धे साध्वसे ॥ लुण्ठिस्तेये । ल्युट् ॥

लुण्ठाक : । पुं॰ परमृत्यौ । द्विके । काके ॥

लुण्डिका । स्त्री॰ )
लुण्डी । स्त्री॰ ) न्यायसारिण्याम् ।

गौडी॰ इ॰ भा॰ प्र॰ ॥

लुप्तम् । न॰ चौर्यधने । त्रि॰ विलुप्ते । लोपवति ॥

लुप्तपर्णपदम् । न॰ यस्मे ॥ लुप्तोयर्णः पदं वायमवाक्ये यदेवासत् ॥

लुप्तसंवत्सर : । पुं॰ विलुप्ताब्दे ॥ यथा । अतिचारगतोजीवस्तं राशिं नैतिचेत्पुन : । लुप्तसंवत्सरोज्ञेयोगर्हित : सर्वकर्मसु ॥ अस्यापवादश्च इभिमेविभाविकुम्भे यद्यतीचारगोगुरु : । नतत्रकाललोप : स्यादित्याहभगवान्यम : ॥ अन्यच्च । भासान्दर्शकारणथाप्रभुज्यराशेयं द्वाराशिमुपैतिजीव : भुङ्क्तेनपूर्वं चपुनस्तथापिन लुप्तसंवत्सरमाहुरार्या : ॥ लुप्ताब्ददोषोऽचिमतेनमध्येसीमोद्भवाया : सुरनिम्नगायाः ॥

लुप्ताब्द : । पुं॰ लुप्तसम्वत्सरे ॥

लुब्ध : । पुं॰ व्याधे ॥ लम्पटे ॥ त्रि॰ आकाङ्क्षिणि । गृध्नौ । परधनाभिलाषुके ॥ धर्मार्थंस्वद्रव्यत्यागासमर्थे ॥ मातरंपितरंभ्रातॄन्सर्वांश्चसुहृदस्तथा । स्निग्धसुतृषोलुब्धारोशान : प्रायशोभुवि ॥ लुभ्यति स्म । लुभगाद्धर्ये । गत्यर्थेतिक्त : ॥

लुब्धक : । पुं॰ व्याधे ॥ स्वार्थे॰ संज्ञायांवाकन् । आर्द्रायाम् ॥

लुलाय: ।पुं॰ महिषे ॥ लुडति । लुडसंश्लेषणे । इगुपधेतिक : । डलयोरेकत्वम् । आप्नोति । आप् ल्ड॰ । अण् । लुलआसमन्तायस्य । यद्वा । लुडाति । लुडलोडने । भिदाद्यङ् । लुलाविलोडितामामोधेन । लुलविमर्दनेसोधोधातुर्वा ॥

लुलायकन्द : । पुं॰ महिषकन्दे ॥

लुलायकान्ता । स्त्री॰ महिष्याम् ॥

लुलाय : । पुं॰ महिषे ॥ लुडति । लुड॰ । क : । डलयोरभेद : ॥ यद्वा । लुडाते । लुडविलोडने । भिदाद्यङ् । लुलविमर्दनेसोधोधातुर्वा । बाहुलकादायप्रत्यय : ॥ यद्वा । अयते । अय॰ । अच् । लुलआसोपयस्य ॥

लुलित : । त्रि॰ आन्दोलिते । तरलिते ॥ उत्सृष्टे ॥ क्लिन्ने । यथा । वाल्पेदुः स्वातिरेकोमललुलितवपुरि ति ॥

दृष्टतरङ्गसीतरजनभा० प्र०

लेण्डम् । न० मूथे । शकृति । लेण्ड इ० भा० प्र० ॥

लेगडुल : । पुं० इङ्गुदे ॥ इङ्गुदे सानवघट्पश्चलेगडुलाश्चापिभाविनश्चत्यागमात् ॥

लेप : । पुं० लेपने ॥ अशनौ । अशनि ॥ अनुशये । अनुयस्ये ॥ सच० खुद्दमदमकार्यमेतत्फलभोच्चे० द्रस्थनुसन्धानकर्मस्ववासनानिमित्त : । सचपुण्ये कर्मणिपुण्यरूप:० पापेचपश्चात्तापरूपोभवति ॥ लेपनम् । लिप० घञ् ॥ सुधायाम् । चूना० इ० भा० प्र० ॥

लेपक : । पुं० मल्लगण्डे । राज इ० प्र० स.लो ॥ त्रि० लेपककर्त्तरि ॥ लिंपति । लिप० ण्वुल् ॥

लेपनम् । न० लेपे । चन्दनागुर्वादिनाङ्गविलेपने ॥ देवगृहादिलेपने । चौवना० इ० भा० लिपेर्ल्युट् ॥ पुं० तुरुष्कनामगन्धद्रव्ये ॥

लेपभुक् । पुं० पितामहपितादिषु ॥

लेपी । पुं० लेपके । मल्लगण्डे । शेकर० इ० गौ० दे० भा० । राज० इ० दे० भा० ॥

लेप्य : । त्रि० लेपनीये ॥

लेप्यकृत् । पुं० लेपके ॥

लेप्यमयी । स्त्री० काष्ठादिघटितपुत्तलिकायाम् । अञ्जलिकारिकायाम् ॥

लेभिरम् । न० उलूखले ॥

लेय : । पुं० सिंहराशौ ॥

लेलायनम् । न० चलने ॥

लेलायमान : । त्रि० अतिशयचलनविशिष्टे ॥ यथाग्निर्हविर्गृहयायलेलायमानोभवति ॥

लेलिह : । पुं० सर्पे ॥

लेलिहा । स्त्री० जीवन्न्यासमुद्रायाम् ॥ यथा । तर्जनीमध्यमानामा.समा : कुर्यादधो मुखा : । अनामायां क्षिपेद् वामकनिष्ठाकनिष्ठिकाम् । लेलिहानामसुद्रेयंजीवन्न्यासेप्रकीर्तिता ॥

लेलिहान : । पुं० शिवे ॥ सर्पे ॥ त्रि० लसल्जिह्वे ॥ लेहातिशयकारके । पुन : पुनर्लेहनकर्त्तरि ॥ लिहेर्यङ्लुगन्तात्ताच्छील्ये चानश्प्रत्यये० गुणोयङ्लुकोरित्यभ्यासस्यगुण : ॥

लेलिहाना । स्त्री० लेलिहायांमुद्रायाम् ॥

लेश : । पुं० अल्पे अर्थे ॥ लिशति । लिशगतौ । पचाद्यच् ॥ लिश्यते वा । घञ् ॥

लेशिक : । त्रि० अतिकम्पने ॥ लेशेनाल्पेनापिएजति । एजृ० । पचाद्यच् ॥

लेष्टु : । पुं० इष्टकादिमृत्पिण्डे । लोष्टे । ढीम्० ढेला० डलाइ० भा० प्र० ।

लिख्यते॰लिखतिवा । लिख॰ । बाहुलकात्तुन् ॥

लेष्टुघ्नः । पुं॰ लोष्टभेदने ॥

लेष्टुभेदनः । पुं॰ कोटिशे । लोष्टभेदनमुद्गरे ॥

लेसिकः । पुं॰ कटिरोहके । हस्त्यारोहके ॥

लेहः । पुं॰ आहारे । भोजने, खादने ॥ लिहनि ॥ लेहनम् लिह्आस्वादने । घञ् ॥ लेढि । आहार्यते-योवा ॥

लेहनम् । न॰ जिह्वास्वादे । जिह्वया रसग्रहणे । आटमा॰ठ॰भा॰ ॥ लिह्ल्युट् ॥

लेह्यम् । न॰ अमृते । सुधायाम् ॥ त्रि॰लेहनीये । आस्वाद्ये । यज्जिह्वाभिः स्वयरसास्वादेननिगीर्यतेकिञ्चिद्द्रवीभूतगुडरसालादितच ॥

लैङ्गः । पुं॰ वैयाकरणे ॥ वैयाकरणाश्लिष्टीपुंनपुंसकंशब्दजाततत्त्वमिलिवर्ण्यंलिङ्गयुक्तम् । स्वादेः शब्दस्वभावत्त्वे सर्वादीनांचिलिङ्गत्त्वायोगादेकस्मिन्नेकभावत्त्वाद्योगात्, औपाधिकधर्मत्त्वे चतस्यावस्तुत्वात् ॥ न॰लिङ्गपुराणे ॥ त्रि॰-लिङ्गसम्बन्धिनि ॥ लिङ्गस्येदम् । तस्येदमित्यण् ॥

लैङ्गी । स्त्री॰ लिङ्गिन्यामोषधौ ॥

लोकः । पुं॰ जने आत्मनि ॥ लोक्यतेऽनुभूयतेशास्त्रोपदेशयोजितबुद्ध्यायमितिव्युत्पादनात् ॥ दर्शने ॥ लोक्यमानेविषये ॥ प्राणिनिकाये । भुवने ॥ त्रयोलोकाः स्वर्गमर्त्यपातालानि । अथसप्तलोकाश्चामीयथा । भूर्भुवः स्वर्महश्चैवजनश्चतपएवच । सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्त्तिताः ॥ इत्युक्ते । आत्मप्रत्यक्षविषयेस्मिन्शरीरे ॥ लोकोद्विविधः प्रोक्तात्मानात्मविभेदतः । मनुष्यपित्रदेवाख्योऽनात्मलोकस्त्रिधामतः ॥ आत्मलोकस्वरूपमित्याहुः आत्मदर्शिनः । मनुष्यलोकः पुत्रेणपितृलोकस्तुकर्मणा । विद्ययादेवलोकश्चसर्वोत्तमश्रुतिः ॥ लोक्यतेऽनुभूयते॰दृश्यते॰भुज्यते-वा । लोकदर्शने । घञ् ॥ कर्मफले ॥ प्रसिद्धिमागमः प्राप्तोलोकशब्दभिधीयते ॥ चतुर्दशविद्यास्थानानिलोकादृतित्याख्यातारः । लोक्यतेज्ञायतेधर्मब्रह्मादिरूपोऽर्थएभिरितिनिरुक्तेः ॥ चिदानन्दस्वरूपब्रह्मातिरिक्तस्सर्वस्यलोकशब्दार्थत्वादेतस्यापिलोकान्तर्गतत्त्वम् ॥

लोककान्ता । स्त्री॰ ऋद्धिनामौषधे ॥

लोकचक्षुः । पुं॰ सूर्ये ॥ जनलोचने ॥

लोकजित् । पुं॰ जिने। लोकंजयति। त्रि॰ । सत्सूद्विषेत्यादिना क्विप् । तुक् ॥ लोकान् जयत्युपरमयतीति वा ॥ त्रि॰ लोकजेतरि ॥

लोकतुषार : । पुं॰ कर्पूरे ॥

लोकत्रयम् । न॰ सर्वस्मिन्जगति ॥ लोकानांत्रयम् ॥

लोकदम्भक : । पुं॰ त्रि : क्षेमापहारादिनाजनवञ्चके ॥

लोकधातु : । जम्बुद्वीपे ॥

लोकनाथ : । पुं॰ शिवे ॥ ब्रह्मणि ॥ विष्णौ ॥ बुद्धे ॥ लोकानांनाथ : ॥ लोकैर्नाथ्यतेयाच्यतेयाकर्मणि घञ् ॥

लोकपाल : । इन्द्रादिषु ॥ तेयथा । इन्द्रो वह्नि : पितृपतिर्नैर्ऋतिर्वरुणोऽनिल : । धनद : शङ्करश्चैवलोकपाला : पुरातना : ॥ राजनि ॥

लोकबान्धव : । पुं॰ रवौ । सूर्ये ॥

लोकभावन : । पुं॰ लोककर्त्तरि ॥

लोकमाता । स्त्री॰ लक्ष्म्याम् ॥ लोकानांमाता ॥

लोकयात्रा । स्त्री॰ लोकनिर्वाहे ॥ लोकाचारे ॥ येनोपायेनमर्त्यानां लोकयात्राप्रसिध्यति । तदेवकार्यं ब्रह्मज्ञैरिदंधर्मंसनातनम् ॥ लोकानांयात्रा ॥

लोकलोचन : । पुं॰ सूर्ये ॥

लोकवाह्य : । त्रि॰ सर्वाचारविवर्ज्जिते ॥ लोकाद्वाह्य : ॥

लोकवित् । पुं॰ पौराणिके भूर्भुव : स्वरितित्रयोलोका : वस्तुभूता : सन्तीतिसकल्पयति ॥

लोकविनायक : । पुं॰ ग्रहविशेषे ॥

लोकविश्रुति : । स्त्री॰ जनश्रुतौ ।

लोकवृत्तम् । न॰ निर्विषपरिहासकथादिके॰ असत्प्रियाख्याने ॥ न लोकवृत्तंवर्त्तेतवृत्तिहेतो : कथञ्चन । अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ लोकानाम् वृत्तम् ॥

लोकसङ्ग्रह : । पुं॰ लोकानांस्वेस्वेधर्मेप्रवर्त्तने ॥ उन्मार्गान्निवर्त्तनेच ॥ सङ्गृह्यतेऽनेन इति संग्रह : । लोकानां सङ्ग्रहोयत्र ॥

लोकसार : । पुं॰ प्रणवे ॥

लोकाकाशास्तिकाय : । पुं॰ लोकानामवकाशे ॥

लोकात्मा । पुं॰ परमेश्वरे ॥ यथा । यस्याग्निरास्यंद्यौर्मूर्धाखंनाभिश्चरणौक्षिति : । सूर्यश्चक्षुर्दिश : श्रोत्रेतस्मैलोकात्मनेनम : ॥

लोकादि : । पुं॰ ब्रह्मणि । लोकानामादि : प्रथमशरीरत्वात् ॥

लोकाध्यक्ष : । पुं॰ परमेश्वरे ॥ लोकंदृश्यवर्गंशुभाशुभविवेकेनयेनसाक्षात्पश्यतीति॰लोकाध्यक्ष: ॥ लोका

नामध्यक्षः । लोकानध्यक्षयतीति वा, लोकाननुबध्यक्षयतीति कर्म्मण्युपपदसमासो वा ॥

लोकापवादः । पुं० लोककर्त्तृकायां निन्दायाम् ॥ लोकापवादाद्भयम् ॥

लोकायतम् । न० तर्कभेदे । चार्वाकदर्शने ॥ लौकिकायतम् ॥

लोकायतिकः । पुं० चार्वाके ॥

लोकालोकः । पुं० पर्वतभेदे ॥ लोकाः प्रकाशसम्बन्धिनः आलोक्यन्ते प्रकाश्यन्ते येन सः ॥ चक्रवालेऽद्रिविशेषे ॥ लोकालोकाविच्छित्त्या लोकालोकनियामकः । योजनायुतविष्कम्भसहस्रशृङ्गपरिच्छदः ॥ यस्तु स्थितो लोकबहिः स्थितत्वाल्लोकनियमयतीति० लोकालोकनियामकः । तदाद्यो लोकाभावादित्यर्थः ॥ लोकदर्शने । भावे घञ् । आलोकः आलोकः । लोकश्चालोकश्च० लोकालोकौ० प्रकाशान्धकारावत्र यस्य सः : अत्र वहिः सूर्यकिरणानां स्पर्शास्पर्शाभ्याम् ॥

लोकालोकी । त्रि० त्रैलोक्यदर्शिनि ॥ लोकानालोकते० तच्छील : । णिनि : ॥

लोकेशः । पुं० हिरण्यगर्भे । ब्रह्मणि ॥ लोकानामीशः ॥ बुद्धभेदे ॥ पारदे ॥

लोकेशाधिष्ठितः । पुं० राजनि ॥

लोकेश्वरः । पुं० शिवे ॥ लोकानां जनानामीश्वरः प्रभुः ॥ बुद्धभेदे ॥

लोकेश्वरात्मजा । स्त्री० बुद्धशक्तिविशेषे । तारायाम् । श्रियि । मनोरमायाम् ॥

लोकैषणा । स्त्री० देवलोकादिकामनायाम् ॥ लोकैषणेति देवादिलोकार्थोपासनार्थिता ॥

लोकोत्तरः । त्रि० लोकातीते ॥

लोकोद्धारः । पुं० तीर्थविशेषे ॥

लोक्यः । त्रि० परलोकादिसाधने । लोकायतिके ॥

लोचनम् । न० चक्षुषि । वाक्ये ॥

लोचकः । पुं० मांसपिण्डे ॥ अक्षितारकायाम् ॥ कज्जले ॥ स्त्रीभालभूषणे ॥ वाटल्याम् । नीलवस्त्रे ॥ कार्पूरे । कर्णिकायाम् । कर्णाभरणे ॥ ज्यायाम् । मौर्व्याम् ॥ भ्रूमध्यवर्त्तिनि ॥ निर्मोके ॥ त्रि० निर्बुद्धौ ॥

लोचनम् । न० चक्षुषि ॥ चक्षुःशुभाशुभलक्षणं यथा । काणाक्षे पद्मपत्राभैर्लोचनैः सुखभागिनः । मार्जारलोचनैः पापैर्महात्मानो मधुपिङ्गलैः ॥ क्रूराः केकरनेत्राश्च हरिताक्षाः सकल्मषाः । जिह्मैश्च लोचनैः क्रूराः सेनान्योगजलोचनाः ॥ गम्भीराक्षा ईश्वराः स्युर्म

न्निग्ध : स्थूलचञ्चुपः। नीलोत्पला चाविद्वांसः सौभाग्यंश्रावचञ्चुणाम् ॥ स्यात्कृष्णातारकाघाणाम-घ्णासुत्पाटनंक्षिप । मण्डलाधा सपामा : स्नु निम्ना : स्नुर्दीर्घलो चना :॥ दृक्स्निग्धाविपुलाभोगे ऽल्पायुर्यातिचोन्नता । विशालोन्न तासुखिनिर्दरिद्राविषमभ्रुवः ॥ इ तिमारुड ६६ ॥ लोच्यतेऽनेन । लोचृदर्शने । ल्युट्॥ आलोचने।

लोचनहिता । स्त्री॰ तुत्थाञ्जने ॥

लोचना । स्त्री॰ शुद्धशक्तिविशेषे ॥

लोचनामय । पुं॰ चक्षूरोगविशेषे । अभिमन्ये ॥

लोचनी । स्त्री॰ महाश्रावणिका-याम् ॥

लोचमर्कट : । पुं॰ लोचमस्तके ॥

लोचमस्तक : । पुं॰ खराश्वाराम् । कारव्याम् । दीप्ये । मयूरे । म यूरशिखौषधे । रुद्रजटाद॰ गौ॰ दि॰ प्र॰ ॥ लोच्यते । लोचृदर्शने घञ् ॥ यद्वा । लोचयति । लोचृ भासार्थः । पचाद्यच् । लोचोदर्श नीयोभासमानोवा॰ मस्तकोऽस्य ॥

लोठनम् । न॰ भूतलस्वयायने ॥

लोडनम् । न॰ प्रतिघाते ॥

लोटयम् । न॰ लवणदणें ॥

लोणा । स्त्री॰ चुद्रात्निकायाम् । चा ङ्गेर्याम् ॥ लोणाशाके । लोनिआ॰

लोनी॰ इ॰ भा॰ श्रुते ॥ अम्लगु णा : । लोणारूक्षागुरु : कटुर्वात श्लेष्महरीपटुः । अर्शोघ्नीदीपनीचा ल्पामन्दाग्निविषनाशिनी ॥

लोणाम्ला । स्त्री॰ क्षुद्रामूलिकायाम् । चाङ्गेर्याम् ॥

लोणारम् । न॰ क्षारविशेषे । लवणो त्थे । लवणाकारजे । लवणक्षारे । लवणमदे ॥

लोणितम् । न॰ लोनिधाल्यशाके ॥ भावांलोणितसंज्ञकंसुदलितंतन्मेधूते तापितंहिंग्वाद्रैंर्यविमिश्रितंसलवणं तक्रेऽवसंवासितम् । शीघ्राऽऽर्द्रे द्यामि दंसुपिण्डसहितं तत्ते नवावासितं खिन्नंसखण्डसंयुतंसलवणं तक्रे वि-भावापितम् ॥ लोणितंशुभप्रीती याऽऽरूचविष्टम्भकारकम् । दोषघ्नं मधुरंगर्वेवातघ्नंचाम्लपित्तकृत् ॥

लोणी । स्त्री॰ लोणायाम् ॥

लोत : । पुं॰ न॰ वाष्पे । अश्रुणि । मैवाश्रुनि ॥ न॰ लोमृष्टे ॥ लुना ति । लूञ्॰ । हसिमृग्रिण्वामिदमि लूपूधुर्विभ्यस्तन् ॥ लोतोमैयद्दरितिक्षश्रवलूनि इतिसूचकैयटः ॥

लोतम् । न॰ लोप्त्रे ॥ नेत्रजले ॥ लूञ् : सर्वधातुभ्यष्ट्रन् ॥

लोध्र : । पुं॰ गालवे । शावरे । ति रीटे । तिल्वे । मार्जने । लोध॰ इ॰ भा॰ प्र॰ ॥ लोध्रोग्राहीलघुः

निघ्नेत् ततो : प्राणभृतांकृत : श्रमकृथावज्ञाखण्डलधं र्पीति ॥ लोभएवमनुष्याणांदेहस्थोमहारिपुः । सर्वदुः खाकरः प्रोक्तोदुः खद : प्राणनाशकः ॥ सर्वपापस्यमूलं हि सर्वदात्वपायान्वितः । विरोधकृत्विवर्णानांसर्वेषां : कारणं तथा ॥ लोभात्घ्नन्तिधर्मेषु कुलधर्मंतथैवहि । मातरंभ्रातरं हन्तिपितरंबान्धवंतथा ॥ गुरुंमित्रंतथाभार्यां पुत्रंचभगिनींतथा । लोभाविष्टो नकिंकुर्यादकृत्यंपापमोहितः ॥ क्रोधात्कामादहङ्कारात्लोभएव महारिपुः । प्राणान्त्यजतिलोकोऽपि नहिपुनः स्यादनाहतम् ॥ सत्यान्लोभाभिभूतस्तुकिंनकुर्यान्नरः किलेतिदेवीभागवतम् ॥

लोभनी । स्त्री॰ महाश्रावणिकायाम् ॥

लोभनीय : । त्रि॰ तृष्णोत्पादके ॥

लोभी । त्रि॰ गृध्नौ । लुब्धे । लोभयु क्ते ॥ लोभीस्यात् । लुभि : ॥

लोभ्य : । पुं॰ मुद्गे ॥ त्रि॰ लोभनो ये ॥

लोमम् । न॰ पुच्छे । लाङ्गूले ॥

लोमधारणी । स्त्री॰ मांसच्छदायाम् ॥

लोमपर्ण : । पुं॰ अश्वके ॥ त्रि॰ लो मयुक्तकर्णविशिष्टे ॥

लोमहः । पुं॰ इन्द्रलुप्तकेरोगे ॥ त्रि॰ लोमघातके ॥ लोमानिहन्ति । हन॰ । अमनुष्यकर्तृकेचेतिटक् ॥

लोम । न॰ तनूरुहे । रोमणि ॥ रोह ति । रुह॰ । नामन्सीमन्व्योमन् रोमन्लोमन्निति साधु ॥ यद्वा । लूयते । लूशब्दे॰ बहुलोभावर्णे था । मनिन् । कपिलकादित्वाल्लत्वम् लूयतेवा ॥

लोमपाद : । पुं॰ ऋष्यशृङ्गमुनेः पु त्रे । अङ्गदेशीयराजविशेषे ॥

लोमपादपू : । स्त्री॰ चम्पापुर्याम् । मालिन्याम् । कर्णपुरि ॥

लोमफलम् । न॰ भव्ये ॥

लोमवान् । त्रि॰ लोमशे ॥ लोमानि सन्त्यस्य । मतुप् ॥

लोमविष : । पुं॰ व्याघ्रादौ ॥

लोमश : । पुं॰ मुनिविशेषे ॥ मेषे ॥ त्रि॰ अतिशयलोमान्विते ॥ य था । कदाचिद्वक्तुरोमुखं : कदा चिल्लोमश : सुखी । कदाचित्भ्रि केरदु : खीकदाचिन्नखलासती ॥ लोमानिसन्त्यस्य । लोमादिभ्य : श : ॥

लोमशकाम्पा । स्त्री॰ पार्श्वयाम् ॥

लोमशपर्णिनी । स्त्री॰ माषपर्ण्याम् ॥

लोमशपुष्पक : । पुं॰ शिरीषवृक्षे ॥

लोमशमार्ज्जार : । पुं॰ पूतिके । मार्ज्जारके । सुगन्धिनि । मूत्रपतने । गन्धमार्ज्जारकेगन्धरीकुला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ गन्धमार्ज्जार

वीर्य्यनुवीर्य्य छतकफवातहत् । वा
गड्कोठश्वर नेत्र्य सुगन्धंस्तैदमम्नु
त् ।
लोमशा । स्त्री॰ काकजङ्घायाम् ॥
मांस्याम् ॥ वचायाम् ॥ शूकशि
म्ब्याम् ॥ महामेदायाम् । काशी
षे । शाकिनीभेदे ॥ शृगाल्याम् ॥
अतिबलायाम् ॥ वराटकायाम्
। शणपुष्प्याम् ॥ वर्वरी ॥ गन्ध
मांस्याम् ॥ लोमानिसन्त्यस्याः ।
लोमादित्वाच्छः । टाप् ॥
लोमशातनम् । न॰ लोमशातने ॥
लोमहर्ष : । पुं॰ रोमहर्षे रोमाञ्चे ॥
लोमहर्षण : । पुं॰ सूते । व्यासशि
ष्ये ॥ न॰ रोमाञ्चे ॥
लोमहृत् । पुं॰ हरिताले ॥
लोमालिका । स्त्री॰ शृगालिकायाम्
। टौम्रकिशायाम् । उल्कामुख्यां ॥
लोमावली । स्त्री॰ रोमावल्याम् ॥
लोल : । त्रि॰ सतृष्णे ॥ चञ्चले ॥
लोडति । लुडविलोडने । क्वचिद
पवादविषयेप्युत्सर्गं प्रवर्त्तत इच् । ड
लयोरेकत्वम् ॥ यद्वा । लोडति
। लोडृउन्मादे । पचाद्यच् ॥ देश
विशेषे ॥
लोलमान : । त्रि॰ चलनशीले ॥ ता
च्छील्ये तिपानश् ॥ लुलमाने ॥
लोला । स्त्री॰ जिह्वायाम् ॥ कमला
याम् । श्रियि ॥ चञ्चलायांनार्या
म् ॥ कामनायाम् । शर्करीच्छन्दः
१४ प्रभेदे ॥ तल्लक्षणं यथा । दि:
सप्तच्छिद्लोलाम्सौम्यौगौचरर्णे
चेत् ॥ यथा । सुग्धे यौवनलक्ष्मी
र्विद्युद्विभ्रमलोला । त्रैलोक्याद्भुत
रूपोगोविन्दोतिदुराप : तद्वृन्दाव
नकुञ्जे गुञ्जद्भृङ्गसनाथे श्रीनाथेनसमं
तावच्छन्दं कुरुकेलिम् । लोलाद्वा
प् ॥
लोलार्क : । पुं॰ सूर्ये । काशिस्थ
रवौ । लोलायां वीथ्यमिश्रितौगङ्गा
स्यानगर धनु : । कालिक व:शरी
घर्म : शिवोधन्वोपुनातुमाम् ॥
लोलिका । स्त्री॰ चाङ्गेर्याम् ॥
लोलित : । त्रि॰ वस्तुलीलवती ॥ चा
लिते ॥ ग्रथे ॥ लोल : सञ्जातोऽ
स्य । तारकादित्वादितच् ॥
लोलुप : । त्रि॰ अतिलुब्धे ॥ गर्हितं
लुम्पति । लुप्लृछेदने । लुपसदे
तियङ्लुगन्तादच् ॥
लोलुभ : । त्रि॰ लोलुपे ॥ भृशं लुभ्य
ति । लुभगार्द्ध्ये । धातोरेकाचइ
तियङ्लुगन्तादच् ॥
लोष्ट : । पुं॰ न॰ मृत्खण्डे । पांशु
पिण्डे । लोष्टौ । टौम् ॰ ढेला॰
इ॰ भा॰ ॥ लोष्टति । लोष्टसङ्घा
ते । पचाद्यच् ॥ यद्वा । लुनाति ।
लूञ् ॰ लोष्टपलितावितिक्त : त
स्यसुट् ॰ धातोर्गुणश्चनिपातनात्

पिष्ट्वा चगालयेद्धस्त्रादेवं वारितरं भवेत् । दाडिमस्य दलं पिष्ट्वा तच्चतुर्गुणवारिणा ॥ तद्द्रवेनायसस्य चूर्णं सन्नीयात्प्रक्षयेदपि आतपे शोषयेत्तत्तु पुटे देयं पुनः पुनः ॥ एवं विंशतिरात्रं स्यान्म्रियते नात्र संशयः एवं सर्वाणि लोहानि स्वर्णादीन्यपि मारयेत् एवं मारितलोहस्य मात्रा । गुञ्जामेकां समारभ्य यावत् स्युर्नवरक्तिकाः । तावल्लोहं समश्नीयाद्यथादोषानलं नरः ॥ कुष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा । मद्यमम्लरसञ्चैव त्यजेल्लोहस्य सेवकः ॥ लुनाति । लुह गार्ध्ये । घञ् ॥ लोहति वा । अच् ॥ यद्वा । रोहति । रुह० । अच् । रलयोरैक्यम् ॥ लूयते वा । घञ् । कपिलकादिः ॥ लूयतेऽनेन वा । लूञ० । बाहुलकात् हः वा ॥ यदातु मायसि पात्रे पक्वमश्नाति वै द्विजः । स पापिष्ठो विभुङ्क्तेऽन्नं रौरवे परिपच्यते इति स्मृतिमत्स्यसूक्तस्य लौहपात्रे भक्षणनिषेधः ॥ अस्यार्थे वर्त्तेऽपि । यथा । पयः पाने पयः पानं गव्यं सिद्धान्नमेव च । सृष्टादिकं मधु गुडं नारिकेलोदकं तथा । फलं मूलं च यत्किञ्चिदभक्ष्यं मुनिरब्रवीदिति ॥

लोहकण्टकः । पुं० मदनद्रुमे ॥ लोहमयकण्टके ॥

लोहकान्तः । पुं० अयस्कान्ते ॥ लोहः कान्तोऽस्य ॥

लोहकारः । पुं० लोहकारके । कामारि ॥ लोहं करोति । कृ+अण्० । कर्मण्यण् ॥

लोहकारकः । पुं० लोहकारि । कामारे । लोहार० इ० भा० । कर्मकारे ॥ सङ्करजातिरयं यथा । गोपालात्तन्तुवाय्यां वै कर्मकारो भूतस्तु । इ० प० पु० ॥

लोहकिट्टम् । न० लोहमले । किट्टे ॥ यल्लोहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम् ॥ लोहस्य किट्टम् ॥

लोहचूर्णम् । न० लोहकिट्टे ॥

लोहजम् । न० कांस्ये ॥ लोहकिट्टे ॥

लोहद्रावी । पुं० टङ्कणे ॥

लोहधमनी । स्त्री० भस्त्रायाम् ॥

लोहनालः । पुं० नाराचे ॥

लोहपृष्ठः । पुं० कङ्कपक्षिणि ॥ लोहमिव पृष्ठमस्य ॥

लोहप्रतिमा । स्त्री० लोहमय्यां प्रतिमायाम् । सूर्म्याम् ॥

लोहमयः । त्रि० लौहात्मके ॥

लोहमारकः । पुं० शालिपर्ण्याम् ॥

लोहराजकम् । न० कलधौते । रूप्ये ॥

लोहलः । पुं० शृङ्खलाभार्ये ॥ त्रि०

घोरः सुकठिनः सचारोवंशकः स्मृतः ॥ वंशकस्त्वनभिष्यन्दी लघु-शीघ्रपाकदः ॥ वंशदव । इक्षुप्रसिक्ताविरिक्तन् ॥ बांशपातामाच॰दू॰गौ॰दे॰भा॰प्र॰मख्ये ॥ न॰ घनुरुषि ॥

वंशकठिनः । पुं॰ देशविशेषे ॥ वंशाः विरलः कठिनायस्मिन्सः ॥

वंशकफम् । न॰ धूम्रतुले । वृक्षसूषी । वीणाशसि । बुढियाकासूत॰ इ॰भा॰प्र॰ ॥

वंशकर्पूररोचना । स्त्री॰ वंशरोचनायाम् ॥

वंशक्षीरी । स्त्री॰ वंशरोचनायाम् ॥ वंशात्क्षीरमस्याः । गौराद्दिः ॥

वंशगुल्मः । पुं॰ तीर्थविशेषे ॥

वंशजः । पुं॰ वेणुयवे । वंशबीजे ॥ त्रि॰ वंशे सद्वंशजाते । बौध्ये ॥ वंशेजातः । सनी॰ । ड ः ।

वंशजा । स्त्री॰ वंशरोचनायाम् ॥ वंशात्॰जायते । सनी॰ । पञ्चम्यामिति ड ः ॥

वंशतण्डुलः । ) पुं॰ वेणुयवे । वंशयवे ॥
वंशधान्यम् । ) न॰

वंशनालिका । स्त्री॰ वंशीवाद्ये ॥

वंशनेत्रम् । न॰ इक्षुमूले ॥

वंशपत्रः । पुं॰ नले ॥ न॰ वंशस्यदले ॥

वंशपत्रकः । पुं॰ श्वेतेक्षौ ॥ बांशपातामाच॰दू॰गौ॰दे॰भा॰प्र॰ चुद्रमत्स्ये । नले ॥ न॰ हरिताले ॥

वंशपत्रपतितम् । न॰ अत्यष्टिच्छन्दः १७ प्रभेदे ॥ यथा । दिङ्मुनिवंशपत्रपतितं भरनभनलगैः ॥ यथा । नूतनवंशपत्रपतितरजनिकलवं॰ पश्यमुकुन्दमौक्तिकमिवामरमरकतगम् । यत्पतंग्वौरनिकरः प्रपिबति मुदितो॰वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥

वंशपत्री । स्त्री॰ वेणुपत्र्याम् । हिङ्गुपत्र्यामि ॥ हिङ्गुपत्रीगुणाविशेषं वंशपत्रीचकीर्त्तिता ॥ नाडीहिङ्गुनि ॥ तृणविशेषे । वंशदलायाम् ॥ अस्यागुणाः । सुमधुरस्त्रिग्धिरस्वपित्तरसादोषमाशिस्त्वरत्यन्ता भि॰पशूनांदुग्धदायित्त्वञ्चेतिराजनिर्घण्टः ॥

वंशपीतः । पुं॰ कणगुग्गुलौ ॥

वंशपुष्पा । स्त्री॰ सहदेवीलतायाम् ॥

वंशपूरकम् । न॰ इक्षुमूले ॥

वंशमूलकम् । न॰ तीर्थविशेषे ॥

वंशयवः । पुं॰ वंशधान्ये ॥ यवावंशभवारूक्षाः कषायाः कटुपाकिनः । बद्धमूत्राः कफघ्नाश्च वातपित्तकराः सराः ॥

वंशरोचना । स्त्री॰ त्वक्क्षीर्याम् वै

र्याम् । श्वेतायाम् ॥ गुणाश्च-
याः । वंशजाद्वंशपीवृष्यावल्याल्पा
दीचशीतला । तृष्णाकासज्वरश्वा
सक्षयपित्तास्रकामलाः । हरेत्कु
ष्ठंव्रणपाण्डुकषायावातकृच्छ्रजि-
त् । रोचते । कप० । नन्द्यादिः ।
वंशस्यरोचना ॥

वंशरोचनिका । स्त्री० वंशरोचनाया
म् ॥

वंशलोचना । स्त्री० ) वंशरोचना
वंशशर्करा । स्त्री० ) याम् ॥

वंशशलाका । स्त्री० वीणामूले ॥

वंशस्तनितम् । न० वंशस्थविले ॥

वंशस्थम् । न० जगती १२ प्रभेदे ॥
यथा । पुरोजकारः परतस्तसंज्ञ-
कौगणौजकारोरगणस्ततः परम् ।
निवेशितश्चेद्यदयन्तभूपतेश्रवीति
वंशस्थमदस्तदाफणी ॥ जतौतु वंश-
स्थमुदीरितंजराविति चास्यलक्षण-
म् ॥ वि०वंशस्थिरी ॥

वंशस्थविलम् । न० जगति १२ प्रभे
दे । वंशस्थिरा ॥ यथा । वदन्ति
वंशस्थविलंकलीजलौ । यथा । वि
लासवंशस्थविलंसुखानिलैः प्रपू-
र्यंद : पञ्चमरागमुद्गिरन् । व्रजाङ्ग
नानामपिगानशालिनांजहारमानं
सहरिः पुनातुनः ॥

वंशाग्रम् । न० वंशाङ्कुरे ॥

वंशाङ्कुरः । पुं० करीरे । वंशाग्रे ।
यवफलाङ्कुरे ॥

वंशानुचरितम् । न० वंशचरितव-
र्णने ॥

वंशिकम् । न० अगुरुणि ॥ वंशोस्त्य-
स्य । अतइनिठनाविति ठन् ॥

वंशिका । स्त्री० वंश्याम् । वेणौ ॥ अ
गुरुणि ॥

वंशी । स्त्री० मुरलीवाद्ये । वंसरी०
इ०भा० ॥ कर्षचतुष्टये ॥

वंशीधरः । पुं० श्रीकृष्णे । धरतीति
धरः । वंश्याधरः ॥ त्रि०वंश्याधा-
रके ॥

वंश्यः । त्रि० सदृशजाते । कुल्ये ।
यौन्ये ॥ वंशभवः । दिगादित्वा
यत् ॥

वंहिष्ठः । त्रि० अत्यन्तबहुले ॥ अय-
मेषामतिशयेनबहुलः । अतिशाय-
नेतमबिष्ठनाविति इष्ठन् ॥ प्रियस्थि-
रस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृ-
न्दारकाणांप्रस्थस्फवर्बंहिगर्वर्षित्र-
प्द्राघिवृन्दाइतिवंह्यादेशेनसाधुः ॥

वंहीयान् । त्रि० बहुलतरे ॥ अयमन
योरतिशयेनबहुलः । द्विवचनवि
भज्योपपदेतरबीयसुनावितीयसुनि
प्रियस्थिरेत्यादिनावंह्यादेशः ॥

वकः । पुं० बकार्थेषु ॥ यन्त्रविशेषे ॥
यथा । जलकच्छपपातालदोलाभूध
रवालुकाः । बकाद्यायन्त्रभेदास्तुवै
द्याभाद्याद्यमूषिकाः ॥ दीर्घब-

पठकाचकुप्पागिजयेत्स्वल्पभाण्ड-
कम् । तिर्यक्कृत्त्वापचेच्चुल्यांवि-
वायन्चमिदस्मृतम् ॥ असुरवि-
शेषे ॥

वकवृत्ति : । पुं॰ वकव्रती । तल्लक्ष
णं यथा । अधोदृष्टिर्नैष्कृतिकः
स्वार्थसाधनतत्परः । शठोमिथ्या
विनोतश्चवकव्रतिसदाहृतः ॥

वकुल : । पुं॰ वकुले ॥ न॰ तत्पुष्प
ति ॥ तद्गुणाः । वकुलंमधुरं
चाह्लिदन्तस्थैर्यकरंपरम् ॥ पुष्पगु
णास्तु । पक्वंकषायंमधुरंशीतं
पित्तकफास्रनुत् । तद्वकुलपुष्पा
गकल्हारोत्पलपाटलम् ॥

वक्तव्य : । त्रि॰ कुत्सिते । विहितक
र्मत्यागात्तिन्द्यमिगर्हिते ॥ हीने
वचनार्हे । अधीने ॥ वचनार्हः ।
वचपरिभाषणे॰ ब्रूञ् आदेशोषा
तव्यः ॥ न॰ वचने ॥

वक्ता । त्रि॰ पण्डिते॰ वदे । वदावदे
। योहिवक्तुंजानातितस्मिन् वौ
चित्यादिगुणविशिष्टंयोवदतितस्मिन्व्य
र्थः ॥ सुष्ठुवक्तरि ॥ बहुभाषिणि
। वाचोयुक्तिपटौ । वाग्मिनि ।
वावदूके ॥ वक्ति । वचपरिभाषणे
। तृन् ॥

वक्त्रम् । न॰ आस्ये । मुखे । यथा ।
सौम्यस्वसंहतंवक्त्रमसलंयस्यदेहि
नः । महाराणाभवेन्नित्यंविपरीते
तुनिर्धनत्वहति । उच्यतेऽनेन । वच
॰ । ष्ट्रन् ॥ छन्दोविशेषे । शुद्धःपौ पचिव
चिथमित्सदितिर्दिक्ष्यत्र: ॥ वस्त्रभेदे
तगरमूले । विषमवृत्तान्तरे ॥ तल्ल
क्षणादियथा । भवत्यर्थसमंवक्त्रं
विषमस्त्वकदाचन । तयोर्द्वयोरुपा
न्तेचछन्दस्तद्युनोच्यते ॥ वक्त्रंयुग्म्या
मगीस्यातामब्धेर्योऽनुष्टुभिख्यात
म् ॥ वचविरामस्यांशेषः पूरयि
तव्यः ॥ वक्त्राम्भोजंसदास्मेरंच
क्षुर्नीलोत्पलंपुरम् । वक्त्रयोनां
मुरारातेरेवोत्सर्जनकारोर्थः ॥

वक्त्रखुर : । पुं॰ दन्ते ॥

वक्त्रज : । पुं॰ ब्राह्मणे ॥ त्रि॰ मुख
जाते ॥

वक्त्रतालम् । न॰ मुखवाद्ये ।

वक्त्रपट : । पुं॰ अश्वाद्यभोजनपात्रे
। तीयङ्गा॰ दू॰ भा॰ प्र॰ ।

वक्त्रभेदी । पुं॰ तिक्तरसे ॥ त्रि॰ मु
खभेदके ॥

वक्त्रवास : । पुं॰ नागरङ्गे ॥ मुखग
न्धे ॥

वक्त्रशोधनम् । न॰ भव्ये ॥ मुखशु
द्धिकारणे ॥

वक्त्रशोधी । पुं॰ जम्बीरे । त्रि॰ आस्य
शोधके ॥

वक्त्रासव : । पुं॰ अधरमधुनि ।

वक्र : । पुं॰ शनैश्चरे ॥ मङ्गलग्रहे ॥
रुद्रे ॥ त्रिपुरासुरे ॥ पर्पटे ॥ वक्र

वचनीयता । स्त्री० निंदायाम् । लोकापवादे ॥ भावेतल् ॥

वचनेस्थित : । त्रि० विधेये । विनयग्राहिणि : आश्रवे । प्रवृत्तिनिवृत्त्योर्विधातुंशक्ये ॥ वचनेतिष्ठतिस्म । द्वा० । गत्यर्थेतिक्त : । तत्पुरुषेकृतीत्यलुक् ॥

वचनोपक्रम : । पुं० वाक्यारम्भे । उपन्यासे ॥

वचर : । पुं० कुक्कुटे ॥ शठे ॥

वचलु : । पुं० वैरिणि । शत्रौ ॥

वच : । न० वाक्ये । वाचि । वचनि ॥ वच० । सर्वधातुभ्योऽसुन्नित्यसुन् ॥

वचसाम्पति : । पुं० सुरगुरौ । बृहस्पतौ ॥

वचा । स्त्री० शारिकायाम् । उग्रगन्धौषधौ । षड्ग्रन्थायाम् । गोलोम्याम् । शतपर्विकायाम् । अस्या गुणायथा । वचोग्रगन्धाकटुकातिक्तोष्णावान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी । अपस्मारकफोन्मादभूतजन्त्वनिला अवचाशुक्लाप्रोक्ताहैमवतीतिसा। हैमवत्युदितातद्वच्छूतहन्तिविशेषत : । अथमहाभरीवचा० यथा : कुलञ्जन० इतिभाषायांनामान्तरम् । सुगन्धाप्युग्रगन्धाचविशेषात्कफकासनुत् । सुस्वरत्वकरीरुच्याहृत्कण्ठमुखशोधनी । अपरासुगन्धास्थूलग्रन्थियंसालिकेमहाभरादूति नाम । स्थूलग्रन्थि : सुगन्धान्यात-तोहीनगुणास्मृता ॥ द्वीपान्तरवचा ० याचीपवीनीतिनाम्नालोकेविख्याता । द्वीपान्तरवचाकटुतिक्तोष्णावह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ वातव्याधिमपस्मारमुन्मादन्तनुवेदनाम्व्यपोहतिविशेषतःफिरङ्गामयमुद्धतम् ॥ वक्ति । वचेरन्तर्भावितण्यर्थात्पचाद्यच् । टाप् ।

वचोग्रह : । पुं० कर्णे ।

वचोहर : । त्रि० दूते ॥ वचोहरति । हरतेरनुद्यमनेऽच् ॥

वज्र : । पुं० शीलप्रासप्रभेदे ॥ अ

नुमितियोगविभागान्नुम् ॥

वङ्क्षुः। स्त्री० गङ्गाशाखाविशेषे ॥ यथा । तस्याः सीतासिन्धुश्च वङ्क्षुर्भद्रा च कीर्त्तितेति शब्दमाला ॥ सा तत्र पर्वतादिक्षु चतुर्धा प्रतिपद्यते । सीता चालकनन्दा च वङ्क्षुर्भद्रा चैकमात् ॥ सा गङ्गा ॥ वंक्षुश्च पश्चिमगिरीनतीत्य सकलं ततः । पश्चिमं केतुमालाख्यं वर्षमन्वेति सार्णवम् ॥

वङ्गः। पुं० कार्पासे । वृन्ताके । चन्द्रवंशीयबलिराजपुत्रे ॥ वङ्गाः पुं० भूम्नि० जनपदविशेषे ॥ रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं शिवे । वङ्गदेशो मया प्रोक्तः सर्वसिद्धिप्रदर्शकः ॥ वङ्गानां निवासी जनपदः वङ्गाः । निवासिनो जनपदे लुप् । लुपि युक्तवद्भावः ॥ न० रङ्गे । त्रपुणि । स्वर्णे । नागणीमले । स्फटिके । रङ्गे । सिंदूरे । रांगइ-भा०-प्र० धातुविशेषे ॥ खुरकं मिश्रकं चापि द्विविधं वङ्गमुच्यते । उत्तमं खुरकं तत्र मिश्रकं त्वहितं मतम् ॥ पञ्चाचरकम् ॥ सीसके ॥ वङ्गति । वगिगतौ । पचाद्यच् ॥

वङ्गजम् । न० सिन्दूरे ॥ त्रि० वङ्गदेशजाते ॥

वङ्गनः। पुं० वार्त्ताकौ ॥

वङ्गशुल्वजम् । न० कांस्ये ॥

वङ्गसेनः ) वङ्गसेनकः ) पुं० वकद्रुमे । अगस्तिवृक्षे । मुनिद्रुमे ॥ अस्य पुष्पगुणाः । वासकस्य च पुष्पाणि वङ्गसेनस्य चैव हि । कटुपाकानि तिक्तानि कासक्षयहराणि च ॥

वङ्गला । स्त्री० रागिणीविशेषे ॥

वङ्गारिः। पुं० हरिताले ॥

वङ्गालः। पुं० भैरवरागपुत्रे ॥

वङ्गाली । स्त्री० भैरवरागस्य रागिण्याम् ॥

वचः। पुं० कीरे । शुकपक्षिणि । वक्ति । वचपरिभाषणे । पचाद्यच् ॥

वचक्नुः। पुं० विप्रे । ब्राह्मणे ॥ ऋषिविशेषे ॥ त्रि० वावदूके । वक्ति । वच० । स्युरुचिभ्योन्युजागृशाक्तनुपत्यक्नुच् ॥

वचण्डा । स्त्री० वरिण्डायाम् ॥

वचण्डी । स्त्री० शारिकायाम् । वर्त्तौ । शस्त्रप्रभेदे । छुरिकायाम् ॥

वचनम् । न० इरायाम् । उक्तौ । वाचि । भाषणे । श्रुतिमात्रामृतप्रायं स्वर्गसर्वकालसुखावहम् । सत्यं सारं हितकरं वचनं श्रेष्ठमीप्सितम् ॥ वचेर्भावे ल्युट् । उच्यते ऽनेनवा ॥ शुश्रूषायाम् ॥ धात्रीफली ॥

वचनग्राही । त्रि० वचनेस्थिते ॥

वचनीयः। त्रि० वक्तव्ये ॥ वचेरनीयर् ॥

वचनीयता । स्त्री॰ निंदायाम् । लो काप्रवादे ॥ भावेतल् ॥

वचनेस्थित : । त्रि॰ विधेये । विनय ग्राहिणि । आश्रवे । प्रवृत्तिनिवृ- त्त्योर्विधातुंशक्ये ॥ वचनेतिष्ठति- स्म । इा॰ । गत्यर्थेतिक्त : । तत्पु रुषेकृतीत्यलुक् ॥

वचनोपक्रम : । पुं॰ वाक्यारम्भे । उ पन्यासे ॥

वचर : । पुं॰ कुक्कुटे ॥ शठे ॥

वचस्नु : । पुं॰ वैरिणि ॥ मनौ ॥

वच : । न॰ वाक्ये । वाचि । वच- नि ॥ वच॰ । सर्वधातुभ्योऽसुन्नि- त्यसुन् ॥

वचसाम्पति : । पुं॰ सुरगुरौ । बृह- स्पतौ ॥

वचा । स्त्री॰ शारिकायाम् । उग्रग- न्धौषधी । षड्ग्रन्थायाम् । गोलो मीम्याम् । शतपर्विकायाम् । वचा गुणायथा । वचोग्रगन्धाकटुकाति क्तोष्णावान्तिवह्निकृत् । विबन्धा- ध्मानशूलघ्नीशकृन्मूत्रविशोधनी । अपस्मारकफोन्मादभूतजन्त्वनिला न्हरेत् ॥ अपिच । अक्षीरपयसा- न्येनमासमेकन्तुसेविता । वचाकुर्या न्नरप्राज्ञंश्रुतिधारणसंयुतम् ॥ चन्द्र सूर्यग्रहेपीतपलमेकं पयोऽन्वितम् । वचायास्तत्क्षणकुर्यान्महाप्रज्ञान्वि तनरम् । अथवचाभेदा : । पारसी कवचाशुक्लाप्रोक्ताहैमवतीतिसाहै मवत्युदितातद्वच्छूशहन्तिविशेष- त : । अथमहाभरीवचा॰ यथा : कुलञ्जन॰ इतिभाषायांनामान्तर- म् । सुगन्धाप्युग्रगन्धाचविशेषात्क फकासनुत् । सुस्वरत्वकरीरुच्याहृ त्कण्ठमुखशोधनी । अपरासुगन्धा स्थूलग्रन्थिर्यस्याःसैमहाभरा इति नाम । स्थूलग्रन्थि : सुगन्धान्यात- तोहीनगुणास्मृता ॥ द्वीपांतर वचा ॥ चोपचीनीतिनाम्नाप्रसि द्धिविख्याता । द्वीपान्तरवचाक ट्वीतिक्तोष्णावह्निदीप्तिकृत् । विब न्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी । वातव्याधिमपस्मारमुन्मादतनु वेदनाम् व्यपोहतिविशेषेणफिरङ्ग् गामयमुद्धतम् ॥ वक्ति । वचे रन्तर्भावितण्यर्थात्पचाद्यच् । टा प् ।

वचोग्रह : । पुं॰ कर्णे ॥

वचोहर : । त्रि॰ दूते ॥ वचोहरति । हरतेरनुद्यमनेऽच् ॥

वज्र : । पुं॰ श्रीकृष्णस्यप्रपौत्रे ॥ अ निरुद्धात्सुभद्रायांवज्रोनामनृपोऽभ वत् इतिगारुडे १४४ ऽध्याय : ॥ विष्कम्भादिषुपञ्चदशेयोगे ॥ अस्यजातकफलंयथा । गुणीगुणज्ञो बलवान्महौजा : सद्रत्नवस्त्रादिप- रीक्षक : स्यात् । वज्राभिधानेयदि

चेत्प्रसूतो वज्रोपमः स्यादरिपुकामिनीनाम् ॥ कोकिलाचवज्रे ॥ श्वेतकुशे ॥ सेहुण्डवृक्षे ॥ न० बालके ॥ धात्र्याम् ॥ काञ्जिके ॥ वज्रपुष्पे ॥ लोहविशेषे ॥ स च बहुविधो यथा । नीलपिण्डम् । अरुणाभम् । मोरकम् । नागकेशरम् । तित्तिराङ्गम् । सर्ववज्रम् । शैवालवज्रम् । सोमवज्रम् । रोहिणीकाश्मीरजम् । ग्रन्थिवज्रकम् । मदनाख्यमित्यादि । एतेषां नामानुरूपं चिह्नमिति पुराणम् ॥ अभ्रविशेषे ॥ अस्योत्पत्त्यादि यथा । पुरा वधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम् । विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः ॥ ते निपेतुर्घनध्वानाः शिखरेषु महीभृताम् । तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम् । तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात् । गगनात् स्खलितं यस्माद्गगनञ्च ततो मतम् ॥ पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम् । वज्रन्तु वज्रवत्तिष्ठेत् तन्नाग्नौ विकृतिं भजेत् ॥ सर्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् ॥ पुं० न० इन्द्रास्त्रविशेषे । ह्रादिन्याम् । कुलिशे । भिदुरे । पवौ । शतकोटौ । स्वरौ । शम्बे । दम्भोलौ । अशनौ । दधीचेरस्थिसम्भवेऽस्त्रे । आयुधानांमध्ये भगवतो वि-



भूतौ । वज्रधारकविधिर्यथा मुनेः कल्याणमिच्छता मणिस्थापि कीर्त्तनात् ॥ विद्युदग्निभयं नास्ति पठिते च गृहोदरे । लिखिते च गृहोदरे । स्तुतिवापाठः ॥ कौमिनिश्च सुमन्तुश्च वैशम्पायन एव च । पुलस्त्यः पुलहश्चैव पञ्चैते वज्रधारकाः ॥ रत्नविशेषे । अभेद्ये । हीरके । हीरा० इ० भा० प्र० वज्रविशेषो यथा । स्वच्छं विद्युत्प्रभं स्निग्धं सौन्दर्य्यं लघु सिंहलम् । षडस्रं तीक्ष्णधारञ्च सुधाम्भारं श्रियं दिशेत् ॥ भस्माभं काकपादञ्च रेखाक्रान्तञ्च वर्त्तुलम् । आधारमलिनं बिन्दुसन्त्रासं स्फुटितं तथा ॥ नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत् ॥ वज्रस्य चतुर्वर्णलक्षणं यथा । श्वेतं तत्रारुणपीतनैचकतया ब्राह्मणस्ततस्तु क्रमात् द्विप्रादित्वमिच्छत्यसुमनसः सन्तिसत्त्वं ततः । स्फीतां कीर्त्तिमनुत्तमां श्रियमिदं दत्ते यथासम्भृतं सत्यानामयथायथं तु कुलिशं पथ्यं हि तज्जायतः ॥ तस्य परीक्षा यथा । यत्पाषाणतलेन निकषणे निकषैर्मेदं मुष्टिसंनिष्ठुरैश्चान्यैरपलब्धोहसुन्दरमुखैर्लेखान्न यात्याहनम् । यच्चान्यं निजलीलया विदलयेद्वज्रं धारा भिद्यते स च वाक्यं कुलिशं वदन्ति कुशला श्लाघ्यं महार्घ्यं ततः । तस्य

सिवपुष्प ॥

वज्रपुष्पा । स्त्री॰ शतपुष्पायाम् ॥

वज्रबाहुः । पुं॰ इन्द्रे ॥

वज्रमूली । स्त्री॰ माषपर्ण्याम् ॥

वज्ररथः । पुं॰ क्षत्रिये ॥

वज्ररदः । पुं॰ शूकरे ॥

वज्रलेपः । पुं॰ कल्कविशेषे ॥ स
चोक्तो वराहेण यथा । आमं तिन्दु
कमामं कपित्थकं पुष्पमपि च शाल्म
ल्याः बीजानि शल्लकीनां धन्वन
वल्को वचा चेति ॥ एतैः सलिल
द्रोणः क्वाथयितव्योऽष्टभागशेषश्च
। अवतार्योऽस्य च कल्को द्रव्यैरेतैः
समनुयोज्यः ॥ श्रीवासकरसगुग्गु
लुभल्लातककुन्दुरूकसर्जरसैः ।
अतसीबिल्वैश्च युतः कल्कोऽयं व
ज्रलेपाख्यः ॥ ३ ॥ अस्यगुणाना
ह । प्रासादहर्म्यवलभीलिङ्गप्रति
मासु कुड्यकूपेषु । सन्तप्तो दात
व्यो वर्षसहस्रायुतस्थायी ॥ ४ ॥
अन्यमप्याह । लाक्षाकुन्दुरुगुग्गु
लुगृहधूमकपित्थबिल्वमध्यानि । ना
गबलाफलतिन्दुकमदनफलमधूक
मञ्जिष्ठाः । सर्जरसरसामलकानि चेति
कल्कः कृतो द्वितीयोऽयम् । वज्राख्य
प्रथमगुणैरयमपि तेष्वेव कार्येषु ॥ ६
अपि च । गोमहिषाजविषाणैः खर
रोम्णा महिषचर्मगव्यैश्च । निम्बक
पित्थरसैः सह वज्रतलो नामकल्को
न्यः ॥ ७ ॥ अपि च । अष्टौ सीसक
भागाः कांस्यस्य द्वौ तु रीतिकाभा-
गः । मयकथितो योगोऽयं विज्ञेयो
वज्रसंघातः ॥ ८ ॥ इति ॥

वज्रवल्ली । स्त्री॰ अस्थिसंहारलता-
याम् ॥

वज्रवारकः । पुं॰ जैमिन्यादौ ॥
यथा । जैमिनिश्च सुमन्तुश्च वैशम्पा
यन एव च । पुलस्त्यः पुलहश्चैव प-
ञ्चैते वज्रवारकाः ॥

वज्रवाराही । स्त्री॰ मायादेव्याम् ।
मारीच्याम् । त्रिमुखायाम् ॥

वज्रवीजकः । पुं॰ लताकरञ्जे ॥

वज्रवृक्षः । पुं॰ सेहुण्डवृक्षे ॥

वज्रव्यूहः । पुं॰ वज्राकाररचनयाभि
धाव्यवस्थितबले ॥

वज्रशल्यः । पुं॰ शल्यकनामजन्तौ ॥

वज्रशृङ्खला । स्त्री॰ विद्यादेव्याम् ।

वज्रसारः । त्रि॰ वज्रवत्कठिने ॥

वज्रसूर्य्यः । पुं॰ बुद्धविशेषे ॥

वज्रा । स्त्री॰ स्नुह्याम् । गुडूच्याम् ।
दुर्गायाम् ॥ वज्राङ्कुशकरीदेवीव
ज्रा देवी प्रगीयते इति देवीपुराणम् ॥

वज्राङ्गः । पुं॰ भुजङ्गमे ॥ त्रि॰ वज्र
तुल्याङ्गयुक्ते ॥

वज्राङ्गी । स्त्री॰ अस्थिसंहारिणि ।
हाडजोड़ा इ॰ भा॰ प्र॰ ॥ गवे
धुकायाम् ॥

वज्राभः । पुं॰ दुग्धपाषाणे । त्रि॰

वटकः । पुं॰ लोलके । पिष्टकप्रभेदे । वडा॰ भक्षा॰ दू॰ मा॰ प्र॰ भच्य ॥ तस्य निर्माणादि यथा । माषाणां पिष्टिकां युक्तां लवणार्द्रकहिङ्गुभिः । कृत्वा विरच्य वटकांस्तांस्तैलेषु पचेत्ततः ॥ विशुष्का वटका बल्या बृंहणा वीर्यवर्द्धनाः । वातामयहरा रुच्या विशेषाद्दर्दितापहाः ॥ विबन्धभेदिनः श्लेष्मकारिणोऽल्पमिपूजिता । सस्तूषं निष्कियेत्तक्रे भृष्टं जीरकहिङ्गु च ॥ लवणं तत्र वटकान् सकलानपि मज्जयेत् । शुक्लस्तक्रवटको बल्यो दीपनो गुरुः ॥ विबन्धष्टद्विदाही च श्लेष्मलः पवनापहः । राज्यक्ष्मातिरोचन्यापाचन्यात् सुभक्षयेत् ॥ वटति । वट॰ । क्वुन् ॥

वटपत्रः । पुं॰ यर्वरामभेदे । सिताक्कि न॰ न्यग्रोधपर्णे ॥

वटपत्रा । स्त्री॰ त्रिपुरमालीपुष्पवृक्षे ।

वटपत्री । स्त्री॰ मोहिन्याख्यलताया म् । ऐरावत्याम् । वटपत्रीकषा यीष्णायोनिमूत्रगदापहा ॥

वटवासी । पुं॰ यक्षे ॥ त्रि॰ वटवृक्ष वासकर्त्तरि ॥

वटाकरः । पुं॰ शुल्वे । रज्जौ । वा करोति । पचाद्यच् ॥ वटस्याका रः ॥

वटारका । स्त्री॰ रज्जौ ।

वटारकः । पुं॰ नामचौरे ॥

वटिः । स्त्री॰ उपजिह्विकायाम् । वटिकायाम् ॥ वटति । वट॰ । सर्वधातुभ्य इन् ॥

वटिका । स्त्री॰ वट्याम् । मोदके गुटिकायाम् । पिण्ड्याम् । व्यञ्जनोपयोगिमाषादिद्रव्ये । वडी॰ इत्यु भयोर्भाषायांप्रसिद्धिः । यस्या निर्माणविधिर्यथा । माषाणां पिष्टि काहिङ्गुलवणार्द्रकसंयुता । तया विरचिता वस्त्रे वटिकाः साधु शो षिताः ॥ तलितास्तप्ततैले ताः भव कासुमलिप्तिता । वटकस्य गुणैस्तुल्यास्तथा रुचिदा भृशम् ॥ कुष्माण्डकवटी ज्ञेया पूर्वोक्तवटिकागु णा । विशेषात् पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ॥ मुद्गानां वटिका तद्व द्विरचिता साधिता तथा । पथ्या रुच्या तथा लघ्वी मुद्गसूपगुणा स्मृतेति ॥

वटितम् । न॰ शिलापिष्टमांसे ॥ त्रि॰ शिलापिष्टद्रव्ये ॥

वटी । स्त्री॰ वटिकायाम् ॥ वृक्षविशेषे । नदीवटे । यज्ञवृक्षे ॥ त्रि॰ रज्जौ । सूर्ये ॥ वटति । वट॰ । अच् ॥ वञ्चनीया ॥ स्त्रीत्वे च ङीष् । गौरादिः । यथा । सिताघृतगुड़ादेयावटी गुड़विगुण्योगुड़वृद्धास ॥

वटुः । पुं॰ ब्रह्मचारिणि ॥ ब्राह्मण माणवके ॥ बालके ॥ कुटन्नटवृक्षे ।

ग्रीवाणमि॥ वटति। वट० । अच्
। से तिसूर्वे वाटु : ॥

वटुक : । पुं० बालके । माणवके ।
भैरवविशेषे ॥

वटुकरणम् । न० उपनयने ॥

वटेश्वरपुरम् । न० तीर्थविशेषे ॥

वठर : । पुं० मूर्खे ॥ अम्बष्ठे ॥ शब्दकारे ॥ वक्रे ॥ त्रि० शठे ॥ मन्दमतौ । वच० । वधिरमित्यांकिचे त्यरष्टीन्तादिश्च ॥

वडभी । स्त्री० सुदनी० गृहचूडा० कृ० गौ० दि० भा० प्र० । कुडौ पुष्पादनार्थं दत्ते वक्रकाष्ठे । गोपानस्याम् ॥ वलते । वलसंवरणे । बाहुलकादभच् । गौरादित्वान् ङीष् ॥ चन्द्रशालायाम् ॥ चन्द्रशालावडभीश्चाताप्रासादमूर्द्धनी तिश्रीधर : ॥

वडवा । स्त्री० द्विकयोषिति । ब्राह्मण्याम् । अश्वायाम् । घोटक्याम् । कुम्भदास्याम् ॥ नारीणामन्तरे ॥ वलं सामर्थ्यमतिशयितमस्या । अर्श आद्यच् । उलयोरैक्यता । वलं वातीति वा । आतोनुपेति क । व तिनस्रुतिया । अन्ये त्वौणादिकः ॥

वडवाकृत : । पुं० पञ्चदशदासान्तर्गतदासविशेषे ॥ यथा । भक्तदासश्च विज्ञेयस्तथैव वडवाकृत : ॥ वडवा दासीतल्लोभाद्दत्तमोक्तदासश्चार्थं : ॥

वाडवाग्नि : । पुं० समुद्राग्नौ । सलिलेन्धने । वडवाग्नौ ॥

वडवादुग्धम् । न० अश्वाक्षीरे । अश्व सुधा : ॥ रूक्षोष्णं वडवाक्षीरं बल्यं श्वासानिलापहम् । अम्लं पटु लघु स्वादु सर्वं मैमाय्यमंतथा ॥

वडवानल : । पुं० और्वे । वाडवे । वडवाग्नौ ॥ वडवायाघनल : । चाराधाधियभावएवसम्बन्धत्वेनष ष्ठ्यर्थ : । पुराकिलऔर्वेणमुनिना० श्वयोनिजं पुत्रमिच्छतावधोमथितं तस्यास्याशामथ पुत्रपोनात ० समसुद्रे वडवामुखेऽवस्थापितइतिपौराणिका : ॥

वडवामुख । पुं० और्वे । अम्भ्यग्नौ वडवानले ॥ न० पाताले ॥

वडवासुतौ । पुं० २ अश्विनीकुमारयो : स्वर्वैद्ययो : ।

वडवाहृत : । पुं० वडवाकृते । दासविशेषे ॥ वडवादासीतयाहृतस्तल्लोभेनतामुद्वाह्यदासत्वं नप्रविष्ट : ॥

वडा । स्त्री० वटके ॥

वडिशम् । न० मत्स्यधरणार्थं शलाकायाकारविशेषे । मत्स्यवेधने ॥ वडिमिमत्स्याञ्छ्यति । शोतनूकरणे । आतोनुपेतिक : । डलयोरैक्यता ॥

वडिशी । स्त्री० वडिशे ॥

वड्र: । त्रि० बृहति । वड्रा० वड्री० इ० भा० ॥ वलते । वलसंवरणे सञ्चरणे च । बहुलमन्यत्रापीतिरक् । डलयोरैकत्वस्मरणाल्लत्वड: ॥

वण: । पुं० शब्दे ॥

वणिक्पथ: । पुं० हट्टे । आपणे । व्यस्तवणिज्यायाम् ॥ व्यवहारादिमार्गो वणिज्यमिति कुल्लूकभट्ट: ॥

वणिज् । पुं० क्रयविक्रयकर्त्तरि । वाणिज्यकारके । वैदेहके । सार्थवाहे । नैगमे । पण्याजीवे । क्रयविक्रयिके । करणान्तरे ॥ स्त्री० वणिज्यायाम् ॥ पणते । पण० । पणेरिज्यादेश्च व: ॥

वणिज्या । स्त्री० विपणे । न० वणिज: कर्मभावयो: ॥ दूतवणिग्भ्यां चेति य. । माधवस्तु० वणिज्याशब्द: स्वभावात्स्त्रीलिङ्गोऽभावप्रत्ययोऽनुकर्मणोऽत्याह ॥ भाष्ये तु० वार्त्तिकमेवनास्ति ॥

वण्ट: । पुं० अंशे । भागे । वाण्टा० इ० भा० ॥ दामग्रन्थौ । वैण्टा० इ० भा० ॥ अनूढरूपे ॥

वण्टक: । पुं० अंशे । भागे । वण्टते । वटि विभाजने । कर्मणि घञ् । स्वार्थे क: ।

वण्टाल: । पुं० युद्धभेदे । शूरयुद्धे ॥ नौकायाम् । खनित्रे ॥

वण्ठ: । पुं० अकृतोद्वाहे ॥ खर्वे । कुन्तायुधे ॥ भृत्ये । वांठ० इ० प० भा० प्र० वण्ठते । वठि एकचर्यायाम् । अच् ॥

वण्ठर: । पुं० खनिकायाम् । रज्जौ । कुक्कुरलाङ्गूले । करीरकोषे । तालस्य पल्लवे । पयोधरे । वण्ठेर रन् ॥

वण्ड: । पुं० अनावृतमेढ्रे । दुश्चर्मणि । त्रि० हस्तादिवर्जिते । छिन्नाङ्गुलौ । वाण्डा० इ० भा० प्र० ॥ छिन्नपुच्छे । वण्डुले । वण्डुषाणे । वनतिश । वनतश्चासौ । अमन्ताड्ड: ॥

वण्डा । स्त्री० पांशुलायाम् ॥ अजादित्वाट्टाप् ॥

वत् । अ० सादृश्ये । तेनतुल्यमित्यादिभिर्विहितोवतिप्रत्यय: । वस्तूपसर्गादस्वार्थइतिविहित : समन्ते ॥

वत । अ० आमन्त्रणे । सन्तोषे । खेदे । अनुकम्पे । विस्मये ॥ वय सेवने । वयगतौ । गत्यर्थे तिक: । नेट यलोप: ॥ अन्यतेऽप्यत्र । वनु याचने । क्त: । अनुदात्तोपदेशेति नलोप: ॥

वतंस: । पुं० कर्णपूरे । कर्णाभरणे । शिरोभूषणे । शेखरे । अवतंस पति० अवतंस्यतेऽनेनवा । तसि :

सौचौभूपार्थ : । पचाद्यच्० इत्य चेतिधञ् वा । भागुरिमतेनाका रलोप : ॥

वतण्ड: । पुं० मुनिविशेषे ॥

वसीका । स्त्री० अवसीकायाम् । सुख लितगर्भायाम् ॥

वत्स : । पुं० पुत्रादौ । मल्ला०वृ०भा० ॥ तर्णके । शक्रत्करौ ॥ वदत्यभीप्सां मातरम् । वदव्यक्तायांवाचि० वदस्यैवा । वृत्तवदीतिस : ॥ वट सिविशेषे ॥ वर्षे ॥ न० । उरसि । वक्षसि ॥

वत्सक : । पुं० कुटजवृक्षे । न०पुष्प कासीसे ॥ संज्ञायांकन् ॥ अनुकम्पितोवत्स : । अनुकम्पितोवत्स : । अनुकम्पायामितिक : ॥

वत्सकबीजम् । न० इन्द्रयवे ।

वत्सकामा । स्त्री० वत्साभिलाषिण्यां गवि । वत्सलायाम् ॥ पुत्रादिकामनाविशिष्टायांनार्याम ॥

वत्सतर: । पुं० दम्ये । वत्सभावमतीत्यद्वितीयंवय : प्राप्ते ॥ तनुर्वत्स : वत्सोवाअल्पंगेम्यस्तनुत्वष्टुति-ष्टरच् ॥

वत्सतरी । स्त्री० वत्सायाभावमतीत्यद्वितीयंवय: प्राप्तायाम् । त्रिहायण्यां गवि ॥ तन्वीवत्सा । ष्टरच् । ङीप् ॥

वत्सनाभ: । पुं० विषवृक्षविशेषे । स्मृते । उग्रे । महौषधे । मारणे । माङ्गराद्व० भा०प्र० । अस्यस्वरूप निरूपणंयथा । सिन्धुवारसदृक्पत्रोवत्सनाभ्याकृतिस्तथा । यत्पार्श्वेनतरोर्वृद्धिर्वत्सनाभ : सभाषित इति ॥ अस्यगुणा : । अतिमधुरत्वम०वातकफकण्ठरुक्सन्निपातनाशित्वम्०पित्तसन्तापकारकत्वञ्चेतिराजनिर्घण्ट : ॥ वत्सान्नभातिहिनस्ति । अभहिंसायाम् । कर्मण्यण् ॥ वत्सस्तनाभिरिवनाभिरस्येतिवा ॥

वत्सप : । पुं० वत्सचारकबालके ।

वत्सपत्तनम् । न० भारतवर्षान्तरे देशविशेषे । कौशाम्ब्याम् ॥

वत्सपाल : । पुं० बलदेवे । श्रीकृष्णे ॥ वत्सपे ॥

वत्सर : । पुं० द्वादशमासात्मककाले । संवत्सरे । अब्दे । हायने । शरदि । समायाम् । वर्षे । सवत्सरादिभेदेनपञ्चधाभवति । ॥ यथाहि । शकाब्दात्पञ्चभि : शेषात्समाद्यादिषुवत्सरा: । सम्परीदनुपूर्वाश्चराश्चेदापूर्वकाःमता : । षष्ट्यादिसंवत्सराणांगणना । मासे गुरोरगभिद : परिवत्सरांश्चापदिः स्मृतामुनिवरै : प्रभवादिकानाम् । स्यादेवायवत्सरमितिगुरुमध्यमेषराशिस्थमेगमितिरेवसदातथाहि ॥

व्यक्तार्यांवचि । पचाद्यच् ॥
वदनम् । न० आनने । मुखे ॥ वद्-
यतेऽनेन । वद्० । करणेल्युट् ॥
वदनासव : । पुं० अधरमधुनि । वक्त्रा
सवे ॥ वदनस्यासव : ॥
वदन्ति : । ) स्त्री० कथायाम् ॥
वदन्ती । )
वदन्य : । त्रि० वदान्ये ॥
वदान्य : । त्रि० बहुप्रदे । दानशौ
ण्डे । वहुप्रदे ॥ मांयावत्से तिवद
ति । वद० । वदेरान्य : ॥ चाटुवा
दिनि । प्रियवादिनि ॥
वदामम् । न० फलविशेषे । सुफले ।
वातवैरिणि । वातादे ॥
वदाल : । पुं० पाठीनमत्स्ये । वोआ-
लि० इ० गौ० दे० भा० प्रा० ॥
वदावद : । त्रि० वक्तरि ॥ वदति ।
वद० । चराचरेति० चरिचलीतिति
त्वादि ॥
वद्रि । अ० कृष्णपक्षे ॥
वध : । पुं० हिंसने ॥ हिंसायाम् ॥
वधुका । स्त्री० वध्वाम् ॥
वधू : । स्त्री० स्नुषायाम् । बहू० इ०
भा० प्रसिद्धे ॥ वहति० उह्यतेवा । व
हप्रापणे । वहेर्धश्चेत्यू : ॥ शारि
वौषधौ ॥ श्वश्राम् ॥ नवोढायाम् ॥
भार्यायाम् ॥ पृक्कायाम् ॥ स्त्रि
नायाम् ॥
वधूजन : । पुं० योषिति ॥
वधूट : । पुं० यौवने ॥
वधूटशयनम् । न० गवाक्षे ॥
वधूटी । स्त्री० स्वल्पवध्वाम् ॥ स्नुषा
याम् ॥ सुवासिन्याम् ॥ युवतौ ॥
वयस्यचरमइतिङीप् ॥
वधूत्पथप्रसर : । पुं० रक्ताम्लानौ ॥
वध्रम् । न० वराटके ॥ बध्यतेऽनेन ।
बधेरौणादिक : ष्ट्रन् ॥
वध्रि : । स्त्री० वध्रे ॥
वध्री । स्त्री० वध्रे ॥ विस्वान्तुडीप् ।
चर्मा : पञ्चवध्रिका : पञ्चेतिभा-
ष्यम् ॥
वनम् । न० नीरे । जले । निवासे ॥
आलये ॥ प्रस्रवणे ॥ कानने । स्व-
त : सिद्धवृक्षसमूहे । गहने । च-
ना० इ० भा० ॥ प्रवासे । वन्यते०
सम्भज्यते० सेव्यते० याच्यतेवा व-
नसम्भक्तौ० वनुयाचनेवा । हलश्चेति
कर्मणिघञ् । सम्राप्यवैतत्त्वाद्
वृद्ध्यभाव : ॥ कर्त्तरिपचाद्यच्वा ॥
त्रि० वनभोये ॥ सम्भजनीये ॥
वनकदली । स्त्री० काष्ठकदल्याम् ॥
वनकन्द : । पुं० सितशूरणे ॥ धरणी
कन्दे ॥
वनकार्पासी । स्त्री० चिपर्यायाम् ।
भारद्वाज्याम् । वनकपास० इ०
भा० ॥
वनकुलत्थ : । पुं० कुलत्थायाम् ॥
वनकोद्रव : । पुं० उद्दाले ॥

वनकोलि : । पुं॰ वनखर्जूर्याम् । खर्जूरिकायाम् ॥

वनगो : । पुं॰ स्त्री॰ गवये ॥

वनगोचर : । पुं॰ नारायणे ॥ वनं जलं गोचरो निवासस्थानं यस्य स : ॥ व्याधे ॥

वनचन्दनम् । न॰ अगुरुणि । देवदारुणि ॥

वनचन्द्रिका । स्त्री॰ मल्लिकायाम् ॥

वनचम्पक : । पुं॰ वनदीपे । हेमाद्रौ ॥

वनचर : । पुं॰ किराते ॥ वनमृगे ॥ वने चरति । चर॰ । चरेट : ॥

वनच्छाग : । पुं॰ वनच्छागले । एडके । शिशुवाह्यके ॥ शूकरे ॥

वनज : । पुं॰ मुस्तके ॥ स्तम्बेरमे ॥ वनशूरणे । अम्बुजे । त्रि॰ वनोत्पन्ने ॥ वने जायते । जनी॰ । ड : ॥

वनजा । स्त्री॰ मुद्गपर्ण्याम् ॥ वनकार्पास्याम् ॥ अन्योपोदक्याम् ॥ अश्वगन्धायाम् ॥ गन्धपत्रायाम् ॥ मिश्रेयायाम् ॥ ऐन्द्रे । वनार्द्रकायाम् ॥

वनजायतेक्षण : त्रि॰ पद्मलोचने ॥

वनजीर : । पुं॰ सूक्ष्मपत्रे । अरण्यजीरे ॥

वनतिक्त : । पुं॰ रोहितकद्रुमे ॥

वनतिक्ता । स्त्री॰ वनतिक्तिकायाम् ॥

वनतिक्तिका । स्त्री॰ पाठायाम् ॥ हरीतक्यां ॥

वनद : । पुं॰ घने । मेघे । वनं जलं ददाति । डुदाञ्॰ । क : ॥ त्रि॰ वनदातरि ॥

वनदमन : । पुं॰ अरण्यदमने ॥

वनदीप : । पुं॰ वनचम्पके ॥

वनधेनु : । स्त्री॰ गवय्यां ॥

वननीय : । त्रि॰ सभाजनीये ॥

वनपल्लव : । पुं॰ शोभाञ्जनवृक्षे ॥ अरण्यजपत्रे ॥

वनपांशुल : । पुं॰ व्याधे ॥

वनपिप्पली । स्त्री॰ क्षुद्रपिप्पल्याम् ॥

वनपुष्पा । स्त्री॰ शतपुष्पायाम् ॥

वनपूरक : । पुं॰ वनबीजपूरे ॥

वनप्रिय : । पुं॰ परभृते । कोकिले ॥ न॰ त्वचे । गुडत्वचि ॥ त्रि॰ अरण्यप्रियमात्रे ॥

वनभुक् । पुं॰ अटवीपथे ॥

वनमक्षिका । स्त्री॰ दंशे ॥ वनमक्षिका ॥

वनमल्लिका । ) स्त्री॰ वनोद्भवमल्लिकायाम् ॥
वनमल्ली । )

वनमाला । स्त्री॰ श्रीकृष्णस्रजि । सप्तपुष्पग्रथितायामाजानुलम्बिन्यां स्रजि ॥ तस्या : स्वरूपं यथा । आजानुलम्बिनीमाला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वन

मालेतिकीर्त्तिता ॥ वनपुष्पस्र
जि ॥

वनमाली । पुं॰ हरौ । श्रीकृष्णे ॥
वनं वनपुष्पं तन्मालाऽस्येति॰ वन
माली । व्रीह्यादित्वादिनिः । सप
्तदप्रप्यथिताख्या वनमालेत्यर्थे
॥ आपादपद्मं या माला वनमालेति
सा मतेति तु कलिङ्गः । -माला स्त्री
तिथा ॥ वनं मल्लितु शीलमस्येति
वा । मलधारणे । सुपीतिच्छिनि :
॥ यद्वा भूततन्मापरूपायेजयन्त्या
ख्यां वनमालां वहन् वनमाली । व
नमालापरिक्षिप्तं धन्याः पश्यन्तिते
सुखमिति हरिवंशोक्तिः ॥

वनमालिनी । स्त्री॰ वाराह्याम् ॥ द्वा
रकापुर्य्याम् ॥

वनमुक् । पुं॰ जलदे । मेघे ॥ वनं नी
रं मुञ्चति सुच्छ॰ । क्विप् ॥

वनमुद्ग : । पुं॰ मकुष्ठके ॥

वनमुद्गा । स्त्री॰ मुद्गपर्ण्याम् ॥

वनमूर्द्धजा । स्त्री॰ कर्कटशृङ्ग्याम् ॥

वनमेथिका । स्त्री॰ मेथिकाप्रभेदे ॥

वनमोचा । स्त्री॰ काष्ठकदल्याम् ॥

वनर : । पुं॰ वानरे ॥

वनराज : । पुं॰ मृगेन्द्रे ॥ वनस्यरा
जनि ॥

वनराजक : । पुं॰ सिंहे ॥

वनराजि : । स्त्री॰ वनश्रेण्यापद्
त्तौ ॥

वनरुहम् । न॰ पद्मे ॥ वनेरोहति ।
रुह॰ । इगुपधेतिक : ॥

वनलक्ष्मी : । स्त्री॰ कदल्याम् ॥

वनवर्व्वर : । पुं॰ कृष्णार्जके ॥

वनवर्व्वरिका । स्त्री॰ अरण्यजवर्व्वर्या
म् । सुमसत्रके । विपर्षे । सूक्ष्मप
त्रके । निद्राली ॥

वनवल्लरी । स्त्री॰ निःश्रेणिकाख्ये ॥

वनवह्नि : । पुं॰ दवाग्नौ ॥

वनवासन : । पुं॰ गन्धोती । खट्टा
शे ॥

वनवासी । पुं॰ नीलमहिषकन्दे ।
शाल्मलिकन्दे ॥ पाठल्याम् । मु
ष्ककाख्ये ॥ मृड्ग्याम् । ऋषभौ
षधे ॥ शूकरकन्दे । वाराहीकन्दे
॥ त्रि॰ वनवासकर्त्तरि ॥

वनवीज : । ⎫ मातुलुङ्गवृक्ष
वनवीजक : । ⎬ पुं॰ याम् ॥ अर
वनवीजपूरक : । ⎭ ण्यजातवीजपू

रे । अश्वत्थायाम् ॥

वनहस्ताकी । स्त्री॰ वृषल्याम् ॥

वनव्रीहि : । पुं॰ नीवारे ॥

वनशूकरी । स्त्री॰ शूकशिम्ब्याम् ॥
अरण्यवाराह्याम् ॥

वनशूरण : । पुं॰ वनोद्भवोले । सित
शूरणे । वनकन्दे ॥

वनशृङ्गाट : । पुं॰ गोक्षुरके ॥ वनस्य
शृङ्गाटइव ॥

वनशृङ्गाटक : । पुं॰ गोक्षुरके ॥

वनशोभनम् । न० पद्मे ॥ त्रि० वन शोभाकर्त्तरि ॥

वनश्वा । पुं० गन्धमार्जारे ॥ वच्चके । गोमायौ ॥ व्याघ्रे ॥

वनसङ्कट : । पुं० मसूरे ॥

वनसद् । त्रि० वनेचरे ॥

वनसमूह : । पुं० वन्यायाम् ॥ वनानां समूह : ॥

वनसरोजिनी । स्त्री० वनकार्पासाम् ॥

वनस्थ : । पुं० मृगे ॥ त्रि० वनवासिनि ॥

वनस्था । स्त्री० अश्वत्थीवृक्षे ॥

वनस्पति : । पुं० द्रुममात्रे ॥ विना पुष्पंफलधारिणिवृक्षे ॥ अपुष्पाफलवन्तोये तेवनस्पतय : स्मृताइति मनु : ॥ श्योनाकवृक्षे । नन्दीवृक्षे ॥ वनस्पति : । पारस्करादित्वात् सुट् ॥ वटे ॥

वनहरिद्रा । स्त्री० काननोत्पन्नहरिद्रायाम् । शोजिकायाम् ॥

वनहास : । पुं० काशतृणे । कुन्दवृक्षे ॥

वनहासक : । पुं० काशतृणे ॥

वनाखु : । पुं० शशके ॥

वनाखुक : । पुं० मुद्गे ॥

वनाज : । पुं० वनच्छागे । दुण्डिके ॥

वनाटु : । पुं० स्त्री० पर्वचटायाम् । नीलमक्षिकायाम् ॥

वनाधिवासी । त्रि० वनस्थे ॥ वनमधिवसतितच्छील : । णिनि : ॥

वनामल : । पुं० करमर्द्दे । कृष्णपाकफले ॥

वनाम्र : । पुं० कोषाम्रे ॥

वनायु : । पुं० हरिणे । देशविशेषे ॥

वनायव : । पुं० बहुवचनान्तोयम् । देशविशेषे ॥

वनायुज : । पुं० हयविशेषे । वनायुजी ॥ वनायुदेशोद्भव : । सप्तम्या मलमेड् : ॥

वनारिष्टा । स्त्री० वनहरिद्रायाम् ॥

वनार्च्चक : । पुं० पुष्पजीविनि । मालाकारे ॥

वनार्द्रका । स्त्री० ऐन्द्रे । वनभवार्द्रकी ॥

वनालिका । स्त्री० वज्रवल्ल्याम् । हस्तिशुण्डाम् ॥

वनाश्रय : । पुं० द्रोणकाके ॥

वनाहिर : । पुं० दन्तायुधे । शूकरे ॥

वनि : । पुं० पावके । वन्यतेयाच्यते । वनुयाचने । खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यइति-इप्रत्यय : ॥

वनित : । त्रि० याचिते । सेविते ।

वनिता । स्त्री० उत्पादितात्यर्थानुरागनार्याम् ॥ योषिन्मात्रे ॥ वन्यते सा । वनुयाचने । वनसम्भक्तौवा । क्त : । यस्यदिभाषेत्यस्यानित्यत्वा

स्त्री॰ गोरोचनायाम् ॥ वन्दायाम् ॥

वन्द्र: । त्रि॰ पूजके ॥ पुं॰ गुरौ ॥ वन्दते॰ वन्द्यतेवा । वदि॰ । स्फायितञ्चीत्यादिनारक् ॥ न॰ कल्याणे ॥

वन्य: । पुं॰ वनौले । घनशूरणे ॥ धाराकदम्बे ॥ देवनले ॥ न॰ कैवर्तीमुस्तके ॥ त्वचे॥ त्रि॰ वनो द्भूते । वनेभव: । यत् ॥

वन्या । स्त्री॰ वनसमूहे ॥ यस्य समूहे । वनानांसमूह: । पाशादिभ्योय: ॥ गोपालकर्कट्याम् ॥ मुद्गपर्ण्याम् ॥ गुञ्जायाम् ॥ भद्रमुस्तायाम् ॥ गन्धपत्रायाम् ॥ सिंघ्रयायाम् ॥

वन्योपोदकी । स्त्री॰ लताप्रभेदे वन्दायाम् । वनसाह्वयायाम् ॥ वृत्तिराजनिर्घण्ट: ॥

वन्न: । त्रि॰ संभिनि । भागिनि । वनति । वनसम्भक्तौ । स्फायितञ्चीत्यादिनारक् ॥

वप: । पुं॰ तैदसि । केशमुण्डने ॥ बीजवपने ॥ वपति । टुवप्॰ पचाद्यच् ॥ वपतियदिक्लेशाच: चेजमसाद्यालोकम् ॥

वपनम् । न॰ बीजाधाने ॥ मुण्डने ॥ यथा । गङ्गायांभास्करक्षेत्रेमातापित्रोर्गुरोर्मृतौ । आधानेसोमपानेच वपनंसप्तसुस्मृतम् ॥

टुवप्॰ । ल्युट् ॥ अन्यचनिधनात्पत्युः पत्नीकेशान्नवापयेत् ॥ क्षौरे ॥

वपनी । स्त्री॰ नापितशालायाम् ॥

वपा । स्त्री॰ विवरे । छिद्रे ॥ मेदसि ॥ उप्यतेऽत्र । टुवप्॰ । भिदाद्यङ् ॥ यद्वा । वपति । पचाद्यच् । टाप् ॥

वपित: । पुं॰ पितरि ॥

वपुस्तव: । पुं॰ शरीरस्थरसधातौ ॥

वपुन: । पु॰ देवे । सुरे ॥

वपुषा । स्त्री॰ हबुषायाम् । हीवेर॰ दू॰ भा ॥

वपुष्मा । स्त्री॰ पद्मचारिण्याम् ॥

वपु: । न॰ तनौ । शरीरे ॥ प्रशस्ताकृतौ ॥ वपति॰ उप्यतेवा । टुवप्बीजसन्ताने । अर्तिपृवपीत्युसि: ॥

वप्तव्य: । त्रि॰ वपनीये ॥ भूमौबीजंवप्तव्यं॰ सुर्वरायांनचोषरे ॥

वप्ता । पुं॰ जनके ॥ त्रि॰ वापके । वपति । टुवप्॰ । तृन्तृचाविति तृच् । कवौ ॥

वप्र: । पुं॰ तातै ॥ प्रकारे ॥ न॰ सीसके । पुं॰ न॰ प्राकाराधारवेदिकायाम् । चये ॥ तथाचार्थशास्त्रम् । खातादुद्धृतमृदावप्रंकारयेत्॰तस्योपरिप्राकारमिति ॥ महावप्रोयथा । महोद्यानांमहावप्रां

तडागशतशोभिताम् ॥ प्राकारस्त्व
सम्बाधामिन्द्रस्येवामरावतीम् ॥
महान्वप्रोयस्या : । प्राकाराधार
भूताकृत्रिमोच्छ्रिताभूमिर्वप्रसंज्ञो
तिवि॰ पु॰ ॥ रोधसि । तटे ॥
रेणौ ॥ क्षेत्रे ।केदारे ।सानुनि ॥
उप्यतेऽत्र । टुवप॰ । इषिवपिभ्यां
रन् ॥
वप्रक्रीडा । स्त्री॰ वृषभादीनांवप्रक्रि-
यायाम् ॥ यथा । उत्खातकेलि:शृ
ङ्गाद्यैर्वप्रक्रीडानिगद्यतेइतिशब्दा-
र्णव : ॥
वप्रा । स्त्री॰ मञ्जिष्ठायाम् ॥
वप्रि : । स्त्री॰ क्षेत्रे ।वपति । टुव
प॰ । [illegible]क्रादित्वात्साधु : ॥
वप्री । स्त्री॰ वल्मीके ॥
वभ : । पुं॰ स्त्री॰ वमनी ॥
वमथु : । पुं॰ वमने । गजस्यकरशी-
करे ॥ वमनं॰ वम्यतेवा टुवमउ
द्गिरणे ॥ द्वितीयुच् ॥
वमन : । पुं॰ शणे ॥ न॰ छर्द्दने ॥
अर्द्दने ॥ आहुतौ । आहरणे ॥
वमनी । स्त्री॰ जलौकायाम् ॥
वमनीया । स्त्री॰ मक्षिकायाम् ॥
त्रि॰ वमनयोग्ये ॥
वमि : । पुं॰ हुताशने । अग्नौ ॥
धूर्त्ते ॥ स्त्री॰ वान्तौ । छर्द्दने ॥
वमनम् । टुवम॰ । वस्यस्वप्या
दिभ्य : ॥



वमित : । त्रि॰ कृतवमने ॥ यथा ।
वमितंलङ्घयेत्प्राज्ञोलङ्घितंन
तुवामयेत् । वमनेकृशवाहुल्याद
न्यालङ्घनकर्षितम् ॥
वमी । स्त्री॰ वमने ॥ कृदिकारादिति
ङीष् ॥
वम्र : । पुं॰ वंशे ॥
वम्री । स्त्री॰ उपजिह्वायाम् । सोम
का॰ हृ॰ दे॰ भा॰ । मालवी॰ हृ॰
महाराष्ट्रभाषा ॥ हृ॰ दे॰ म्ब्र : ॥
वम्रीकूट : । पुं॰ वल्मीके ॥
वय : । पुं॰ पक्षिणि । खगे ॥ तारु
ण्ये ॥ यौवने ॥ बालकतायांयौव
नादिरूपायांशरीरावस्थायाम् । बा
ल्यादौ ॥ अवस्थिवय : यथा : ।
यथा । कौमारयौवनमध्यस्थस्थवि-
रत्वाभिवस्था रिवयांसीत्येक : प
क्ष : । तथाचाहु : । आद्येवयसि
नाधीतंद्वितीयेनार्जितंधनम् । तृती
येनतपस्तप्तंचतुर्थेकिंकरिष्यतीति ॥
चौविवयांसीत्यन्ये । यदाहु : ।
पितारक्षतिकौमारेभर्त्तारक्षतियौ-
वने । पुत्रास्तुस्थाविरेभावेनस्त्रीस्वा
तन्त्र्यमर्हतीति ॥ अन्ये तु॰ कौमार
यौवनस्थविरत्वानि॰ त्रीण्येवनि ।
आहुयते । आषोडशाद्भवेद्बालोयावत्
क्षीरनिवर्त्तक : । मध्यम : सप्तति
र्यावत्परतोवृद्धउच्यतइति ॥ के-
चित्तुउपचयापचयशून्ये द्वे वयसी

वरण्ड : । पुं० अन्तरावेदाम् । वरण्डके । समूहे । सङ्घे ॥ वदनामये । वयस्फोडा० दू० भा० प्र० ॥ वृणोति । वृञ् ० । अण्डन्कृसृभृवृञ्भ्यइत्यण्डन् ॥

वरण्डक : । पुं० अन्तर्वेदौ । वरण्डे । मातङ्गवेदाम् ॥ अभ्यासकाशिका ग्रन्थवेदिमन्तराविदन्तिनोयोधयेदिद्ध तिप्रसिद्धि : ॥ यौवनकण्टके ॥ संकर्णके । गोलकृतिख्याते ॥ भित्तौ ॥ त्रि० विशाले ॥ भयसम्पन्ने ॥ कृपणे ॥

वरण्डा । स्त्री० शरिकायाम् ॥ वर्त्याम् । शस्त्रविशेषे । छुरिकायाम् ॥

वरण्डालु : । पुं० फलपुष्पे ॥

वरतिक्त : । पुं० कुटजवृक्षे ॥

वरतिक्तिका । स्त्री० पाठायाम् ॥

वरत्वरी । स्त्री० रेणुकानामनिगन्धद्रव्ये ॥

वरत्रा । स्त्री० नद्ध्याम् । चर्मसयरज्जौ । वरत० प्र० भा० प्र० ॥ दूष्यायाम् । कक्षायाम् । गजमध्यबन्धनरज्जौ । नियतेऽनया । वृञ् ० । वाकुलकादत्र : । वृञ्चिदिस्यत्रन्वा । यद्वा । वरं त्रायते । चैड्पालने । आतोनुपसर्गेक : ॥

वरत्वच : । पुं० निम्बवृक्षे । न० श्रेष्ठवल्कले ॥

वरद : । त्रि० प्रसन्ने । अभीष्टदातरि । समर्द्धके ॥ शान्तचित्ते ॥ वरं ददाति । डुदाञ्० । आतोनुपसर्गेदतिक : ॥ पुं० अग्नौ ॥ शान्तिकर्मणिपुष्टौचवरदोहव्यवाहन इत्यागमात् ॥

वरदा । स्त्री० कन्यायाम् । कुमारिकायाम् । वरदाख्याम् ॥ अश्वगन्धायाम् ॥ आदित्यभक्तायाम् ॥ टाप् ॥ तिथिविशेषे माघशुक्लचतुर्थ्याम् ॥

वरदाचतुर्थी । स्त्री० माघशुक्लचतुर्थ्याम् । तस्यांगौरीपूज्या । यथा । भविष्योत्तरेमाघशुक्लमधिकृत्य । चतुर्थीवरदानामतस्यांगौरीसुपूजिता । सौभाग्यमतुलंकुर्यात्पश्चम्यां श्रीरपिश्रियम् ॥

वरदातु : । पुं० भूमिसर्पवृक्षे ॥

वरदाशी । स्त्री० दुर्गायाम् ॥

वरदानस् । न० भौमतीर्थभेदे । यत्र विप्रवविट्टर्षसमावरोदस : ॥

वरदारु : । पुं० शाकवृक्षे ।

वरदासक्रम : । पुं० तीर्थविशेषे ॥

वरपर्णाख्य : । पुं० चीरयाख्यकोवृक्षे ॥

वरप्रद : । त्रि० वरदे ॥

वरप्रदा । स्त्री० अगस्त्यमुने : पत्न्याम् । लोपामुद्रायाम् । वरंप्रददाति । डुदाञ् : क : । टाप् ॥

वरक: । पुं० पिशाचविशेषे ॥ यथो-
क्तं शूलिनीमन्त्रविधाने । सहस्रं प्र
जपेन्मन्त्रं शूलिन्यायंस्य शङ्करः । व-
टाश्च वरकाश्चैव नस्य शान्तिकदाच-
नेति ॥

वरफल: । पुं० नारिकेलवृक्षे । वराणि
फलान्यस्य ॥ न० श्रेष्ठफले ॥

वरम् । अ० ईषदुत्कर्षे ॥ मनागिष्टे ॥

वरमुखी । स्त्री० रेणुकाभिधगन्धद्र-
व्ये ॥

वरम्बरा । स्त्री० पृश्निपर्ण्याम् ॥

वरयिता । पुं० भर्त्तरि ॥ वरणकार
यितरि ॥

वरर: । त्रि० वरप्रदे ॥ वरान् राति ।
रादाने । आतह्रतिक: ॥

वररुचि: । पुं० पुनर्वसौ ॥ कात्या
यनमुनौ ॥ विक्रमादित्यराजसभा
स्थकविविशेषे ॥ वररुचिर्यस्य ॥

वरल: । पुं० वरटे । गम्भील्याम् ॥

वरलब्ध: । पुं० चम्पकवृक्षे ॥ त्रि०
वरप्राप्ते ॥

वरला । स्त्री० गम्भील्याम् ॥ हंस्याम् ॥

वरली । स्त्री० वरटायाम ॥

वरवत्सला । स्त्री० श्वश्र्वाम् ॥

वरवर्णिनी । स्त्री० वरारोहायाम् ।
मस्तकाभिन्याम् । उत्तमायां नार्य्या
म् ॥ यस्या: लक्षणयथा । शीतेसु
खोष्णसर्वाङ्गीग्रीष्मे यासुखशीत -
ला । भर्त्तृभक्ता च या नारी सा भवेद्वर
र्णिनी ॥ इतिरुद्र: ॥ वरोवर्णो
ऽस्त्यस्या: । इनि । ङीप् ॥ लाक्षा
याम् ॥ हरिद्रायाम् ॥ रोचनाया
म् ॥ फलिन्याम् ॥ साधीयसाम्
वरस्त्रीवर्णयसोऽस्त्यस्या: । इ-
नि: । ङीप् ॥ स्त्रियि ॥ गौर्याम् ॥
सरस्वत्याम् ॥

वरवाह्लीकम् । न० कुङ्कुमे ॥

वरवृष: । पुं० सुप्रसादे । शिवे ॥
वरेषुवृष: ॥

वरा । स्त्री० फलत्रिके । त्रिफलाया-
म् ॥ पाठायाम् ॥ रेणुकाख्यगन्ध
द्रव्ये ॥ गुडूच्याम् ॥ मेदायाम् ॥
ब्राह्म्याम् ॥ हरिद्रायाम् ॥ विड
ङ्गे । श्रेष्ठायाम् ॥ यमुद्रिस्यबन्ता
वृजदाप् ॥

वराक: । पुं० शङ्करे । रणे । युद्धे ॥
त्रि० शोचनीये । शोच्ये ॥ अप-
रे ॥ वृणोतेरुकीय ॥ वृङ् सम्भ
क्तौ । अन्वभिवशुभ्रशुरुक्वृड: पा
कन् ॥

वराकी । स्त्री० अवरायाम् ॥ ङीप् ॥

वराङ्ग: । पुं० पुष्करिणि । गर्भे ।
मातङ्गे ॥ न० योनौ ॥ मस्तके ॥
गुडत्वचि ॥ शोभनावयवे ॥ त्रि०
शोभनावयवविशिष्टे । वरञ्चतद-
ङ्गञ्च । वराण्यङ्गान्यस्य ॥

वराङ्गकम् । न० गुडत्वचि । त्वक्प
र्णे । त्वचे ॥ वरमङ्गमस्य । शेपा-

अनेनपार्श्वयोर्मर्येसतियातव्यंमा
गैर्नजेत् ॥

वराङ्गी । स्त्री० दन्त्याम् ॥

वराटिका । स्त्री० कपिकच्छौ ॥

वराशी । स्त्री० भद्रमुस्तायाम् ॥ शू करकान्दे ॥

वरिमा । पुं० उरुत्वे । विस्तारता याम् ॥ उरोर्भावः । पृथ्वादित्वा दिमनिच् । प्रियस्थिरेति० उरो र्वरभावः ॥

वरिवः । न० परिचर्यायाम् ॥ धने ॥

वरिवसितः । त्रि० उपासिते ॥ वरि वः कृतम् । नमोवरिवश्चित्रङचः । क्तः । क्यस्यविभाषेतिपक्षे यलोपः ॥

वरिवसिता । त्रि० नमस्कर्तरि ॥

वरिवस्या । स्त्री० शुश्रूषायाम् । से वायाम् ॥ वरिवसः करणम् । व रिवस् शब्दः पूजार्थः । नमोव रिवश्चित्रङः क्यच् । अप्रत्ययादि त्वः । टाप् ॥

वरिवस्थितः । त्रि० उपासिते । वरि वसिते ॥ वरिवसः क्यच् । क्तः । क्यस्यविभाषेतिपक्षे यलोपाभावः ॥

वरिशी । स्त्री० मत्स्यवेधने ॥

वरिषम् । न० वत्सरे ॥

वरिषाः । स्त्री० भूम्नि० वर्षासु । प्रावृषि ॥ ०

वरिषाप्रियः । पुं० चातकेखगे ॥

वरिष्ठः । पुं० तित्तिरौ ॥ नारङ्गवृक्षे



॥ न० मरिचे ॥ ताम्रे ॥ त्रि० वरतमे ॥ उरुतमे ॥ अयमेषामतिशयेनवरः । ०उरुर्वा । अतिशायने० इष्ठन् । प्रियस्थिरेति०उरोर्वरभावः ॥ वरे ॥

वरी । स्त्री० शतावर्याम् ॥ श्रीतोत्प लाकारपुष्पत्वात् । वृणोति । वृ ञ् । पचाद्यच् । गौरादिः ॥ स वर्थेयोमिति ॥

वरीयान् । पुं० विष्कम्भादिसप्तदशे योगे ॥ तत्रजातस्यफलंयथा । दा ताद्यालुः सुतरांसुवेशः सत्कर्म वार्त्तामधुरः स्वभावः । वरीयसीया नधनवान्जनाख्योयोगेवरीयान् यदिजन्मकाले ॥ त्रि० अतियूनि ॥ श्रेष्ठे ॥ अतिविस्तारे ॥ अयमन योरतिशयेनउरुर्वरोवा । द्विवचने तीयसुनिप्रियस्थिरेति० उरोर्वरा देशः ॥

वरीवर्दः । पुं० बलीवर्दे ॥

वरुटः । पुं० म्लेच्छजातिविशेषे ॥ यथा । पुलिन्दानाहलाभिल्लाः शबरावरुटाभटाः । मालाभिल्लाः किरातासर्वेपिम्लेच्छजातयः ॥ इतिहेमचन्द्रः ॥

वरुडः । पुं० अन्त्यजजातिविशेषे ॥ यथा । रजककर्मकारश्चनटोवरु डएवच । कैवर्त्तमेदभिल्लाश्चसप्तैते चान्त्यजाःस्मृताः ॥एतेषांचस्त्रियो गत्वाभुक्त्वाचप्रतिगृह्यच । प्रतस्य

स्नानतोऽभिप्रोक्षणात् साम्यनुगच्छति ॥ इतियमः ॥ वरुणोत्पत्तिर्यथा । कौवर्त्तस्य चकन्यायांगौरिवि कादेवसौषिक । सौषिक्यांगौ रिक्कात्वातीनटोवरुडएवच ॥ ब्र० प० प० ॥

वरुणः । पुं० पश्चिमाशापतौ । प्रचेतसि । पाशिनि । यादसांपतौ । अप्पतौ ॥ यादसामध्यतिपांराजा वरुणोनामभगवतोविभूतिः ॥ त्रियमे०द्वयोरिया । वृञ० । कृष्टदारिभ्यउनन् । अप् । जले ॥ स्वरभिस वरुणात्मसायक्रतिसूर्ये ॥ तरुविशेषे । वरणे । सेतौ । तिक्तशाके । कुमारके । अमरीवे । श्वेतपुष्पे । तमाले । वरुणा० द्र० भा० प्र० ॥ अस्यगुणाः । वरुणः पित्तोभेदीश्लेष्मकृच्छ्राश्ममारुतान् । निहन्तिगुल्मवातास्रकृमीश्चोष्णोऽग्निदीपनः ॥ कषायोमधुरस्तिक्तः कटुकोरूक्षकोलघुः ॥ अपिच । वरुणोनित्तशूलघ्नोभेदीश्लेष्माश्मरीहरः । पुष्पंवरुणस्याशोपित्तघ्नसामयातजित् ॥ ०

वरुणजा । स्त्री० मदिरायाम् ॥

वरुणात्मजा । स्त्री० मदिरायाम् ॥ वरुणालयोस्पिवरुणः । तस्यात्मजा ॥

वरुणानी । स्त्री० वरुणस्यपत्न्याम् ॥ मरुणस्यस्त्री० । इन्द्रवरुणेतिलीघानुकौ ॥

वरुणालयः । पुं० समुद्रे । वरुणस्यालयः ॥

वरूत्रम् । न० प्रावरणे । उत्तरीयवस्त्रे ॥ इत्येरिति । वृञ० । वशिरिदिभ्यश्चोचाविदित्तवप्रत्ययः ॥

वरुत्रः । पुं० सम्भक्ते ॥

वरूथः । पुं० रथगुप्तौ । परप्रहरणाभिघातरक्षार्थं रथस्य सन्नाहवदावरणद्रव्ये ॥ वरूथोरथगुप्तिर्यातिरोधत्ते रथस्थितमितिसव्यन्नः । पिकि ॥ चाले ॥ सम्‌हे ॥ वि० दरणीये ॥ न० चर्मणि ॥ वर्मणि ॥ वेश्मनि ॥ व्रियतेरथोऽनेन । वृञ् वरणे । जृवृञ्भ्यांमूथन् ॥

वरूथाधिपतिः । पुं० सेनान्यास् ॥

वरूथी । त्रि० गुप्तिमति ॥ रथिनि ॥

वरूथिनी । स्त्री० सेनायाम् ॥ वरूथाः सन्त्यस्याम् । इनिः ङीप् ॥

वरेण्यः । पुं० यज्ञे ॥ प्रजापतौ ॥ ध्यानेनसूर्यमण्डलेद्रष्टव्ये पुरुषे । तथाचयोगियाज्ञवल्क्यः । वरेण्यं वरणीयत्वाज्जन्मसंसारभीरुभिः । आदित्यान्तर्गतं यच्चभर्गाख्यं वामुमुक्षुभिः । जन्ममृत्युविनाशाय दुःखस्यत्रिविधस्यच । ध्यानेनपुरुषोयस्तुद्रष्टव्यः सूर्यमण्डलेइति ॥ न० कुङ्कुमे ॥ त्रि० प्रधाने ॥ वरणीये ॥ व्रियते । वृञ० ।

त्रि० वर्णदातरि ॥

वर्णदूतः । पुं० लेखे । वाचिकहारके ॥

वर्णधर्म्मः । पुं० न० वर्णाधिकृतधर्म्मे ॥ वर्णत्वमेकमाश्रित्ययोधर्मः सम्प्रवर्त्तते । वर्णधर्मः सउक्तस्तु यथोपनयनं नृपेतिभविष्यपुराणम् ॥ अपिच । यजनं याजनं दानं ब्राह्मणस्यप्रतिग्रहः । अध्यापनं चाध्ययनं षट्कर्माणिद्विजोत्तमाः ॥ दानमध्ययनं यज्ञोधर्म्मःक्षत्रियवैश्ययोः । दण्डोयुद्धंक्षत्रियस्यकृषिर्वैश्यस्यशस्यते ॥ शुश्रूषैवद्विजातीनांशूद्राणांधर्म्मसाधनम् । कारुकर्म्मतथाजीवः पाकयज्ञोपिधर्म्मतः ॥ क्षमादमोदयादानमलोभस्त्याग एवच । आर्ज्जवंचानसूयाचतीर्थानुसरणंतथा ॥ सत्यसन्तोषआस्तिक्यंश्रद्धाचेन्द्रियनिग्रहः । देवताभ्यर्च्चनंपूजाब्राह्मणानांविशेषतः । अहिंसाप्रियवादित्वमपैशुन्यमकल्कता । सामासिकमिमंधर्म्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ प्राजापत्यंब्राह्मणानांस्मृतंस्थानंक्रियावताम् । स्थानमैन्द्रंक्षत्रियाणांसंग्रामेष्वपलायिनाम् ॥ वैश्यानांमारुतंस्थानंस्वधर्म्ममनुवर्त्तताम् । गान्धर्व्वंशूद्रजातीनांपरिचारेणवर्त्तताम् । इतिकौर्म्मे २ अध्या



यः ॥

वर्णनम् । न० उपवर्णने ॥ स्तवने ॥ शुक्लपीतादिवर्णयोजने ॥

वर्णना । स्त्री० प्रशंसायाम् । गुणकथने । स्तवे ॥

वर्णनीयः । त्रि० वर्ण्ये । वर्णितव्ये ॥

वर्णपात्रम् । न० चित्रकारस्यनील्यादिवर्णाधारे ॥

वर्णपुष्पः ।<br>वर्णपुष्पकः । } पुं० महासरायाम् । राजतरुणीपुष्पवृक्षे । अम्लाने ॥

वर्णपुष्पी । स्त्री० उष्ट्रकाण्डीपुष्पवृक्षे ॥

वर्णप्रसादनम् । न० अगुरुणि ॥

वर्णमाता । स्त्री० भारत्याम् । लेखन्याम् ॥

वर्णमातृका । स्त्री० सरस्वत्याम् ॥

वर्णमाला । स्त्री० क्रमागताकाराद्यक्षरसमूहे । मातृकायाम् ॥ यथा वर्णानामिव ॥ तत्र संस्कृतवर्णाः ५० । अक्षमालायाम् ५१ । इङ्गलीयवर्णाः २६ । फरासीयाः २३ । हिब्रु० अर्थात् इहुदीयाः २२ । आरबीयाः २८ । पारसीयाः ३१ । तुरस्कीयाः ३३ । रुषीयाः ४१ । ग्रिक० अर्थात् इयुनानीयाः २४ । लाटिन्देशीयाः २२ । डच० अर्थात् होलन्दाजीयाः २६ । स्थान्

पित्रे नियोजयेत् ॥ श्रावयेन्मृदुलां
वाणीं सर्वदा प्रियमाचरेत् । पित्रोरा
ज्ञानुसारी स्यात् सत्पुत्रः कुलपाव
नः ॥ औद्धत्यं परिहासञ्च तर्जनं
परिभाषणम् । पित्रोरग्रे न कुर्वीत
यदीच्छेदात्मनो हितम् ॥ मातरं
पितरं वीक्ष्य नत्वोत्तिष्ठेत् ससम्भ्रमः
। विनाज्ञया नोपविशेत् संस्थितः
पितृशासने ॥ विद्याधनमदोन्मत्तो
यः कुर्यात् पितृहेलनम् । स याति
नरकं घोरं सर्वधर्मबहिष्कृतः ॥
मातरं पितरं पुत्रं दारानतिथिसो
दरान् । हित्वा गृही न भुञ्जीयात् प्रा
णैः कण्ठगतैरपि ॥ वञ्चयित्वा गु
रून् बन्धून् यो भुङ्क्ते स्वोदरम्भरः
। इहैव लोकगर्ह्योऽसौ परत्र नारकी
भवेत् ॥ गृहस्थः पोषयेद्दारान् विद्या
मभ्यासयेत् सुतान् । पोषयेत् स्वज
नान् बन्धूनेष धर्म्मः सनातनः ॥
जनन्या वर्द्धितो देहो जनकेन प्रयोजि
तः । स्वजनैः शिक्षितः प्रीत्या
सोऽधमस्तान् परित्यजेत् ॥ एषामर्थे
महेशानि कृत्वा कष्टशतान्यपि । प्री
णयेत् सततं शक्त्या धर्म्मो ह्येष सना
तनः ॥ स धन्यः पुरुषो लोके सक्त
तो परमार्थवित् । ब्रह्मनिष्ठः सत्य
सन्धो यो भवेद्विमानवः ॥ न भार्यां
ताडयेत् क्वापि मातृवत् पालयेत् सदा
। न त्यजेद् घोरकष्टेऽपि यदि साध्वी



पतिव्रता ॥ स्थितेषु स्वीयदारेषु स्त्रि
यमन्यां न संस्पृशेत् । दुष्टेन चेतसा
विद्वानन्यथा नारकी भवेत् ॥ विरले
शयनं वासं त्यजेत् प्राज्ञः परस्त्रिया
। अयुक्तभाषणञ्चैव स्त्रियं शौर्य्यं न द
र्शयेत् ॥ धनेन वाससा प्रेम्णा श्रद्ध
यामृतभाषणैः । सततं तोषयेद्दा
रान्नाप्रियं क्वचिदाचरेत् ॥ उत्स
वे लोकयात्रायां तीर्थेष्वन्यनिकेतने
। न पत्नीं प्रेषयेत् प्राज्ञः पुत्रामात्य
विवर्जिताम् ॥ यस्मिन्नरे महेशानि
तुष्टा भार्या पतिव्रता । सर्वधर्म्मकृतं
तेन भवती प्रियपरः ॥ चतुर्वर्षा
वधि सुतान् लालयेत् पालयेत् पिता
। ततः षोडशपर्य्यन्तं गुणान् विद्या
श्च शिक्षयेत् ॥ विंशत्यब्दाधिकान्
पुत्रान् प्रेरयेद् गृहकर्मसु । ततस्तां
स्तुल्यभावेन मत्वा स्नेहं प्रदर्शयेत् ॥
कन्याप्येवं पालनीया शिक्षणीयाति
यत्नतः । देया वराय विदुषे धनरत्न
समन्विता ॥ एवं क्रमेण भ्रातॄंश्च
स्वभ्रातृसुतानपि । ज्ञातीन् मित्राणि
भृत्यांश्च पालयेत्तोषयेद् गृही । त
तः स्वधर्म्मनिरतानेकग्रामनिवा
सिनः । अभ्यागतानुदासीनान्
गृहस्थः परिपालयेत् ॥ यद्येवं
नाचरेद्देवि गृहस्थो विभवे सति ।
पशुरेव स विज्ञेयः स पापी लोकग
र्हितः ॥ निद्रालस्यं देहयत्नं केशवि

द्विसुव्रते ॥ किमत्रबहुनोक्तेनशौ-
चाशौचविधौशिवे । मन : पूतंभवे
द्येनगृहस्थस्तत्तदाचरेत् ॥ निद्रा
न्तेमैथुनस्यान्तेस्नानान्तेमलमूत्रयोः।
भोजनान्तेमलस्पृष्टेबहि : शौचंवि-
धीयते ॥ सन्ध्याचैवाम्बिकोद्वाम्याँ
वैदिकीतान्त्रिकीक्रमात् । उपास-
नायाभदेनपूजांकुर्याद्यथाविधि ॥
ब्रह्ममन्त्रोपासकानांगायत्रीजपना-
त्प्रिये । स्नानाद्युक्तोसितदास्यंस
न्ध्याभवतिवैदिकी ॥ अन्येषां
वैदिकीसन्ध्यानसूर्यौपस्थानपूर्वक
म् । अर्घ्यदानंदिनेशायगाय
त्रीजपनंतथा । अष्टोत्तरंसहस्रंवा
शतंवादशधापिवा । जपान्नित्य-
नैमित्तिसर्वमाह्निककर्माणि ॥ शू-
द्रसामान्यजातीनामधिकारोस्तिकी
र्तनम् । आगमोक्तविधौदेविसर्व-
सिद्धिस्ततोभवेत् ॥ प्रात : सूर्योद
य : कालोमध्याह्न स्तदनन्तरम् ।
सायंसूर्यास्तसमयस्त्रिकालानामयं-
क्रम : ॥ श्रोतव्यपाय : विप्रादि
सर्ववर्णानांविहितातान्त्रिकीक्रिया।
त्वयैवकथितानायसम्प्राप्तं प्रश्नलेश
लौ ॥ तदिदानींकथ देवविप्रानुवै
दिककर्मणि । नियोजयसितत्स
र्वंविशेषादुक्तुमर्हसि । श्रीसदाशि
वउवाच ॥ सत्यंब्रवीषितत्त्वज्ञ स
र्वेपांतान्त्रिकोक्रिया । वैकानांमो

गमोचायसर्वंकर्मसुसिद्धिदा ॥ दु
यन्तुमखसाविनीयथाभवतिवैदि
की । तथैवतान्त्रिकीचेयाप्रशस्ता
भयकर्मणि ॥ अतोवकथितंदेवि
द्विजानांप्रवर्तिकाकौ । गायत्र्यामधि
कारोस्तिनान्यमन्त्रेषुकर्हिचित् ॥
तारोद्याद्यमन्त्रायाश्चवाग्भवाद्याय
याक्रमात । ब्राह्मणानियमितास
विधीवयितावको ॥ द्विजातीनां
प्रभेदार्थशूद्रेभ्य : परमेश्वरि ।
सन्ध्येयंवैदिकीप्रोक्तामागेवाह्नि
ककर्मयाम ॥ अन्ययाभोभवेन्मो
गें : शीवलो : सिद्धिभागभवेत् ।
सत्यंसत्यंपुन : सत्यंसत्यमेतन्मसं
शय : ॥ कालाव्यवेपिसन्ध्येयंक
र्त्तव्यादेववन्दिते । वीतस्नानश्च
चोचाद्यमोचंमुमिरनातुरै : ॥
आसनंवसनंपात्रंशय्यायानंनि
केतनम् । गृहाकंयस्तुजातस्वस
च्छात्स्वच्छंप्रशस्यते ॥ समाप्याह्नि
कककर्माधित्वाध्यायंगृहकर्मबा ।
गृहस्थोनियतंकुर्यान्नैवतिष्ठेन्निरु
द्यम : ॥ पुण्यतीर्थेपुण्यतिथौग्रह
णेचन्द्रसूर्ययो : । जपंदानंप्रकु
र्वाण : श्रेयसांनिलयोभवेत् ॥ क
लावन्नगता.प्राणानोपवास:प्रशस्य
ते । उपवासप्रतिनिधावेकंदानं
विधीयते ॥ कलौदानंमहेशानिस
र्वसिद्धिकरंभवेत् । तत्पात्र

कर्मनभवेन्मुक्तिभाग्ज्ञान : ॥ कु-
लावधूतस्तत्त्वज्ञोजीवन्मुक्तोनराकृ-
ति : । साक्षान्नारायणंमत्वागृहस्थ
स्तप्रपूजयेत् ॥ यस्तेदर्शनमात्रेणवि
मुक्त: सर्वपातकात् । तीर्थव्रततपो
दानसर्वयज्ञफलंलभेत् ॥ इतिश्री
महानिर्वाणतन्त्रेऽष्टमोल्लासेवर्णाश्र
मधर्मनिरूपणम् ॥

वर्णार्ह : । पुं॰ मुद्गे ॥

वर्णि : । न॰ सुवर्णे ॥ वर्णयंलिख्याचि
त्रयवृत्यन्ते : । अघिरण्येतु॰व
र्णि : ॥

वर्णिक : । पुं॰ लेखके ॥

वर्णिका । स्त्री॰ कथनस्योत्कर्षे ॥ क
ठिन्याम् ॥ मसौ ॥ गौरवादिरा-
गे ॥ व्याख्यायिकायाम् । मन्यवि
शेषस्यव्याख्यायाम् ॥ स्त्रोवकल्पी
म् ॥ वर्ण॰ । चौरादिक : । ततः
ण्वुल् । प्रत्ययस्यादित्वं ॥

वर्णित : । त्रि॰ स्तुतियुक्ते । अभि
हिते । ईडिते । वर्ण्यतेस्म । वर्णव
र्णक्रियाविस्तारगुणवचनेषु । क्त : ॥

वर्णी । पुं॰ लेखके ॥ चित्रकरे ॥ ब्रह्म
चारिणि ॥ वर्ण : अष्टविधमैथुनाऽ
भावरूपास्तुति :सास्यास्ति । वर्णो
ब्रह्मचारिणीति॰इनि : । त्रि॰ व
र्णवति ॥

वर्णिनी । स्त्री॰ वनितायाम् ॥ हरि
द्रायाम् ॥

वर्णिलिङ्गी । पुं॰ ब्रह्मचारिवेशधर्ति
॥ वर्णीब्रह्मचारी॰ तस्यलिङ्गंचि
ह्नमस्यास्ति । इनि : ॥

वर्णु : । पुं॰ सूर्ये ॥ नदविशेषे ॥ व
र्णोति । हञ्॰ । अजिवरीभ्यानि
र्द्धेतिणु : ॥ देशविशेषे ॥ वर्णु
नदसमीपदेशोवर्णु : । अदूरभवश्च
त्यर्थे॰ सुवास्त्वादिभ्योजनपदेलुबि-
तिलुप् ॥

वर्ण्य : । त्रि॰ वर्णनीये । श्लाघ्ये ॥
व्याख्यातव्ये ॥

वर्त्तक : । पुं॰ अश्वस्यखुरे ॥ व्याघ्र
इयचिर्षि । भारद्व इ॰ गौ॰
दे॰ भा॰ प्र॰ ॥ अश्वमांसगुणाय
था । वर्त्तकोऽग्निकर : शीतोज्वर
दोषत्रयापह : । सुरुच्य : शुक्रदो
बल्योवर्त्तकाल्पगुणास्तत: ॥ वर्त्तते
ततुवर्त्तने । ण्वुल् । न॰ वर्त्तलो
हे । लौहलोहे । बिद्र॰ इ॰
भा॰ इ॰ केचित् ॥

वर्त्तका । स्त्री॰ वर्त्तिकायाम् ।
व्याघ्राटपक्षिणी । बटेर॰ इ॰ भा॰
प्र॰ खगे ॥ वर्त्तकाशकुनौप्राचा
मितीत्त्वं न ॥

वर्त्तकी । स्त्री॰ अश्वस्यखुरे । व्याघ्राटे ॥

वर्त्तजन्मा । पुं॰ अम्बुदे । मेघे ॥

वर्त्तन : । पुं॰ वामने ॥ न॰ वृत्तौ
। जीविकायाम् ॥ षड्वेवर्त्तना
पायास्तृपिभि : परिकीर्त्तिता : ।

वर्द्धकिः । पुं० त्वष्टरि । रथकारे तक्षणि । बढ़ई० इ० तखान० इ० भा० प्र० । वर्द्धते । वर्द्धच्छेदने । अच् । वर्द्धं कषति । कष हिंसायाम् । बाहुलकादिः ॥

वर्द्धकी । पुं० बढ़ई० इ० भा० प्र० वर्णसङ्करजातौ । त्वष्टरि । सूत्रधारे । रथकारे । काष्ठतक्षके ॥

वर्धनम् । न० वृद्धौ ॥ छेदने । वर्धच्छेदनपूरणयोः ; ल्युट् ॥ त्रि० वर्धिष्णौ ॥ वर्धनशीलः । वृध् वृद्धौ । अनुदात्तेतश्चेति युच् । वर्धयति । नन्द्यादित्वाल्ल्युर्वा ॥

वर्धनी । स्त्री० गलन्तिकायाम् । सनालजलपात्रे । बधना० बधनी० इ० भा० सम्मार्जन्याम् । बढनी० इ० भा० ।

वर्धमानः । पुं० प्रश्नभेदे ॥ शरावे । एरण्डे । पौरजिने । चरमतीर्थङ्कृति । महावीरे । विष्णौ । नारायणे । स्वस्तिके । राजगृहविशेषे । दक्षिणाकाररचितो वर्द्धमानो धनप्रदः ॥ वर्धते । वर्धच्छेदनपूरणयोः । शानच् । स्वनामप्रसिद्धदेशविशेषे । त्रि० वृद्धिमति ॥

वर्धमानकः । पुं० शरावे ॥ वर्धते । वृधु० । शानच् । शप् । सुक् । संज्ञायां कन् ॥ त्रि० वृद्धिविशिष्टे ॥

वर्धापनम् । न० नाडीच्छेदने ॥

वर्धितः । त्रि० प्रवृद्धे ॥ छिन्ने ॥ पूरिते ॥

वर्धिष्णुः । त्रि० वर्धने । वृद्धिशीले ॥ वर्द्धते० तच्छीलः । वृधु० । अलङ्कृञिति इष्णुच् ॥

वर्ध्रः । पुं० न० चर्मणि । सीसे ॥ वरत्रायाम् ॥ वर्द्धते० दृढबन्धनेन दीर्घीभवति । वृधु० । ऋधिवृधिभ्यां रन् । लघूपधगुणोरपरः ॥

वर्ध्री । स्त्री० नद्ध्राम् । वरत्रायाम् । चर्मरज्जौ । बद्धी० इ० भा० । वर्द्धते । वृधु० । रन् । गौरादित्वान् ङीष् । यद्वा । औणादिकः ष्ट्रन् । गुणोऽरपरः । प्रत्ययतकारस्य० झषस्तथोर्धोऽध इति धत्वे० षित्वान्ङीष् ॥

वर्पः । न० रूपे ॥ वृणोति । वृङ् सम्भक्तौ । वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् चेत्यसुन्० प्रत्ययस्य पुट् ॥

वर्मकण्टकः । पुं० पर्पटे ॥

वर्मकषा । स्त्री० चर्मकषायाम् । सप्तलायाम् ॥

वर्मा । पुं० क्षत्रियस्य पद्धतौ ॥ यथा । शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य च । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ न० कवचे

वर्हिण: । पुं० मयूरे ॥ वर्हमस्यास्ति । फलवर्हाभ्यामिनच् ॥

वर्हिणवाहन: । पुं० षडानने ॥

वर्हिर्ध्वजा । स्त्री० पार्वत्याम् ॥

वर्ही । पुं० मयूरे ॥ वर्होऽस्यास्ति । इनि: ॥

वर्हिपुष्पम् । न० ग्रन्थिपर्णे ॥

वर्हिर्ज्योति: । पुं० अग्नौ ॥

वर्हिर्मुख: । पुं० गीर्वाणे । देवे ॥ वर्हिरग्निर्मुखं यस्य: ॥

वर्हिषद् । पुं० दैत्यदानवादीनां पितृषु ॥ यथा । दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् । सुपर्णकिन्नराणाञ्च स्मृता वर्हिषदोपिता: ॥

वर्हिष्ठम् । न० वाले । ह्रीवेरे । वाला० । भू० मा० प्र० ओषधौ । वर्हिषि कुशे तिष्ठति । सुपिस्थ इति क: । अम्बाम्बेतिषत्वम् ॥

वर्हि: । पुं० हुताशने । चित्रके ॥ वह्नौ ॥ दीप्तौ ॥ न० ग्रन्थिपर्णे ॥ पुं० न० कुशे । दर्भे ॥ वर्हिर्द्विविधम् । मुख्यं गौणञ्च । तत्र मुख्यं कुशकाशादिदशदर्भमयम् । गौणन्तु० तत्सदृशं तृणान्तरम् । वृंहति वृहिवृद्धौ । चोष्यादि: । वृंहेर्नलोपश्चेति० इसि: । वर्हि: सान्त: ॥

वलम् । न० सैन्ये ॥

वलक्ष: । पुं० शुक्लवर्णे । धवले ॥ त्रि० तद्वति ॥ वलते । वलसंवरणे संचरणे च । क्विप् । वलमस्त्यस्मिन् । अच्० । घञ् ॥ अथवलक्ष वेषा । अकारलोप: ॥

वलक्षगु: । पुं० चन्द्रे ॥ वलक्षा: गावो यस्य स: । गोस्त्रियोरिति ह्रस्व: ॥

वलभी । स्त्री० गोपानस्याम् । कुड्ये पुष्करान्तार्थं दत्तवक्रकाष्ठे । वडभ्याम् ॥ पटलाधारवंशपञ्जरे ॥ वलति । वल० । वाहुलकादभच् । गौरादि: ॥

वलय: । पुं० कण्ठरोगे ॥ वेलायाम् ॥ पुं० न० कङ्कणे । कटके । प्रकोष्ठाभरणे ॥ वल्यते । वल० । वलिमलितनिभ्य: कयन् ॥ अस्थिविशेषे ॥ यथा । पार्श्वो: पार्श्वद्युगपृष्ठे वक्षोजठरपायुषु । पादयोरपि चास्थीनि वलयानि वभाषिरे ॥ वाघ्रादिविकलि० । ऽ ऽ ० ॥ शुष° खरे पुं० ॥

वलयित: । त्रि० वेष्टिते । नद्यादिमारुद्धे ॥ वलयं जातमस्य । तारकादित्वादितच् ॥ यद्वा । वलयवत्कृतम् । तत्करोतीति णिच् ॥ क्त: ॥

वला । स्त्री० वलायाम् । वाट्यालके ॥ विद्याविशेषे ॥

वलाक: । पुं० क्षुद्रवके । वलायाम् ॥

मतिवल्गुजगदेतदतिफल्गु। घनलोभमपहायनयपद्मनयनाय। वल्गति। वल्ग०। वल्गुकपिल्गुः। वाचालि॥

वल्गुकम्। न० चन्दने॥ विपिने॥ पणे॥ त्रि० रुचिरे॥

वल्गुपत्रः। पुं० वनमुद्गे॥

वल्गुला। स्त्री० वाल्गुल्याम्॥ पक्षिविशेषे। वल्कविद्धायाम्। बादुड० इतिभाषा॥

वल्गुलिका। स्त्री० तैलपायिकायाम्॥

वल्गुली। स्त्री० स्वविष्ठादेपक्षिविशेषे॥

वल्भनम्। न० भक्षणे॥

वल्मीकः। पुं० न० वामलूरे। वल्मीकी॥ तन्मृत्तिकायामौषधिविशेषोयथा। वल्मीकस्य मृत्तिकोत्पातांस्तद्भवन्त्यंशांतया। शोथायविष्टम्भिनांच नाड्याणिप्रसक्तस्थाम्। वक्तः प्राप्यमपनाङ्क हलीनृखातानबाहुमास्।

वल्लरिः। स्त्री० मञ्जर्याम्॥ वल्लते। वल्ल०। क्विप्। ऋच्छति। ऋगतौ अच्‌इः। वल्लश्चासावरिश्च॥ मेथिकायाम्॥ चित्रमूले॥

वल्लवः। पुं० गोदोग्धरि। गोपे॥ भीमसेने॥ त्रि० सूपकारे॥ वल्लनम्। वल्लसंवरणे संचरणे च। वल्लिः सौचोवाप्रीतौ। भावेघञ्। वल्लोऽस्यास्ति। अन्येभ्योऽपीतिवः॥ वल्लं वाति० वायतिवा। वागतिगन्धनयोः। वैशोषणे वा। आतोनुपसर्गेकः॥

वल्लवी। स्त्री० आभीर्याम्। गोपिकायाम्। महाशूद्राम्॥

वल्लिः। स्त्री० वल्ल्याम्। लतायाम्। पृथिव्याम्॥ वल्लते। वल्ल०। सर्वधातुभ्य इन्॥

वल्लिकण्टकारिका। स्त्री० अग्निदमनीक्षुपे॥

वल्लिदूर्वा। स्त्री० मालादूर्वायाम्॥

वल्लिशाकटपोतिका। स्त्री० मूलपोत्याम्॥

वल्लिसूरणः। पुं० अत्यम्लपर्ण्याम्॥

वल्ली। स्त्री० लतायाम्। गुडूच्याद्विलतायाम्॥ याभूमिष्ठंसमारोहन्तितावल्ल्यः॥ अजमोदायाम्॥ कुसुमान्तरे। वैद्यक० भा० प्र०॥ कृदिकारादक्तिन इति ङीष्॥

वल्लीगडः। पुं० मत्स्यविशेषे॥ भोला० वालिकडा० इ० व० गौ० दे० भाषाप्रसिद्धे॥

वल्लीजम्। न० मरिचे। वेल्लजे॥

वल्लीबदरी। स्त्री० भूबदर्याम्॥

वल्लीमुद्गः। पुं० मकुष्ठके॥

वल्लीवृक्षः। पुं० सालवृक्षे॥

वल्लूरम्। न० शाद्वले॥ घने॥ गहने॥ औषधे॥ कुञ्जे॥ सञ्ज

र्याम् । घोपधे । निर्लक्ष्याने ॥ विश्वधरणिशब्दरत्नावलिषु॰वक्षरमितिपाठ : ॥

वक्षूरम् । त्रि॰ आतपादिनाशुष्कमांसे ॥ वनतेजे ॥ वाहने ॥ ऊषरभूमौ ॥ क्षीलमांसे ॥ वक्षति॰वल्ल्य तेवा । वक्ष॰ । खर्जादित्वादूरः ॥

वल्ल्या । स्त्री॰ धात्रीवृक्षे ॥

वल्वजा : । पु॰ भूम्नि॰उलपे । वच-ची॰दृ॰प्र॰लण ॥ वलते । वल॰ । क्विप् । वलति । वलगतौ । अच् । वल्चासौवजश्च । एकोवल्वज इतिभाष्यादेकत्वे पि ॥ यथा । वलतीभुवंवेष्टयतिविग्रादित्वाद्यप्रत्यये॰ वल्व् : पर्वत : तत्रजाता : वल्वजा : । हुस्वन्वे । स्वभावा बहुत्वेवल्वजा : ॥ अतएव॰सुमनोऽस्परोवल्वजादेर्वैतिपाणिनवहुत्वोऽर्थेकमदोष्वरसूत्रम् ॥

वल्वजा । स्त्री॰ तृणविशेषे । हढपत्या [illegible] । तृणेरणौ मौञ्जीपत्रायाम् । सार वैवाणी॰दृ॰भा॰ ॥

वश : । पुं॰ एकाद्शकर्णान्तर्गतप्रथमकरणे ॥ तत्रजातस्यफलंयथा । वशाभिधानेजननंप्रियस्यशूरोतिधीरोमनुज : क्षतोस्यात् । पश्चात्तथा सन्निजयेनिषासंकरोतिनित्यंसुविचक्षण : स्यात् ॥

वशंवद : । त्रि॰ आयत्तकरवाक्यस्य करि । वृष्टवादिनि ॥ वशंवशकरंमधुरंवदति । प्रियवशेवद : खच् । मुम् ॥

वश: । पुं॰ कान्तौ । स्पृहायाम् । इच्छायाम् ॥ वेश्यागृहे ॥ आयत्ततायाम् ॥ योयस्यवशमापन्न : सतस्य किङ्कर : किल ॥ प्रभुत्वे ॥ जन्मनि ॥ न॰ आयत्तत्वे ॥ इच्छायाम् ॥ प्रभुत्वे ॥ त्रि॰आयत्ते ॥ वशनम् । वशकान्तौ । वशिरण्योरुपसङ्ख्यानमित्यप् ॥ वष्टि । कन्या ॥

वशका । स्त्री॰ वश्यायांनार्याम् ॥

वशक्रिया । स्त्री॰ वशीकरणे । संवदने ॥ मणिमन्त्रौषधैरायत्तीकरणे ॥ वशस्यकरणम् । सुष्ठु : शच ॥

वशग : । त्रि॰ वशीभूते ॥

वशा । स्त्री॰ वन्ध्यायाम् ॥ सुतायाम् । दुहितरि ॥ योषायाम् । नार्याम् ॥ वन्ध्यगव्याम् । करिण्याम् । हस्तिन्याम् ॥ वष्टि । वश॰ । पचाद्यच् । उद्गलेश्वर । वशिरण्योरुपसङ्ख्यानमित्यप् ॥

वशाव्यक : । पुं॰ शिशुमारे ॥

वशापाथी । पुं॰ कुक्कुरे ॥

वशि । न॰ वशित्वे ॥

वशिक. । त्रि॰ रिक्ते । शून्ये । उश्यते । वश॰ । सर्वधातुभ्यइन् । संज्ञायांकन् ॥

वशिका । स्त्री॰ अगुरौ ॥

शेषे ॥ यथा । प्रवालरसमौक्तिका
स्वरमिदं चतुर्भागभाक् पृथक् पृथ
गस्मै तैरजतहेमतीक्ष्णं शके । अथो
भुजगरङ्गकं चिल्वकं विमर्द्यांखिलं-
शुभेह्नि विभावयेद्भिषगिदं धिया
सप्रग : ॥ द्रवैर्वृषनिशेक्षवैः क
मलमालतीपुष्पजैः पय : कदलि
कन्दजैर्मलयजैर्घनाभ्युक्षैः । व
सन्तकुसुमाकरो रसपतिर्हिं नेह्रोचि
त : समस्तगदहृद्भवेत् किलमिताऽनु
पानैरयमिति तद्वयोगतरङ्गिणी ॥
वसन्तधा । स्त्री॰ वासन्तीलतायाम् ॥
वसन्ततिलकम् । न॰ शर्करीछन्दः १४
प्रभेदे । सिंहोद्धतादयः ॥ यथा ।
ज्ञेयं वसन्ततिलकं तभजाजगौ ग : ।
यथा फुल्लं वसन्ततिलकं तिलकं वना
ल्या लीलापरं पिककुलं कलमत्र वौति ।
वात्यं वपुष्पसुरभिर्मलयाद्रिवाती-
यातो हरि : समथुरां विधिनाहता
स्म : ॥ पुष्पविशेषे । औषधविशे
षे । यथा । भवारसूदनसैन्धवषि
ष्टशकमर्पकरसहितमधिवेगपी
सम । नैवं प्रदीहतिपुनर्वृद्धः स्व
ईतीस्तस्मै वसन्ततिलकेरपि कस्यचि
त्स्यम् ॥
वसन्ततिलका । स्त्री॰ वसन्ततिलके ॥
यथा । उक्ता वसन्ततिलका तभजा
जगौ ग : ॥
वसन्तदूत : । पुं॰ चैत्रे ॥ पिके । पञ्च
मरागे । आम्रे ॥
वसन्तदूती । स्त्री॰ पाटलीवृक्षे ॥ अ
तिमुक्ते । माधवीलतायाम् ॥ ग
णिकारीम् । कोकिलायाम् ।
पिक्याम् ॥
वसन्तद्रु : । पुं॰ आम्रवृक्षे ॥
वसन्तद्रुम: ।
वसन्तमालिका । स्त्री॰ विषमवृत्तप्र
भेदे ॥ यथा । विषमे ससजा गुरुस
मे चेत् सभरा यय वसन्तमालिका सा ॥
वसन्तसख : । पुं॰ कामदेवे ॥
वसन्तोत्सव : । पुं॰ होलाकायाम् ॥
वसा । स्त्री॰ मांसप्रभवधातुविशेषे ।
स्नायुकीडे । मेदसि । वपायाम् ॥
वसति॰ दशेयां । वसनिमासि॰ ।
वसत्याच्छादनेवा । पचाद्यच्॰ भि
दादयङ् वा ॥ मांसरोहिण्याम् ॥
वसाढ्य : । पुं॰ शिशुमारे ॥
वसादनी । स्त्री॰ सिंहमुख्याम् । वा
सके ॥
वसान: । त्रि॰ आच्छादयति ॥ वस॰
। शानच् ॥
वसापायी । पुं॰ कुक्कुरे ॥
वसि : । पुं॰ वसने ॥ वसं॰ वसतेवा
वसत्याच्छादने । खनिकष्यज्यसी
त्यादिनाइ : ॥
वसिरम् । न॰ यवक्षीरे । सामुद्रलव
णे । वशिरे । वसे वस॰ । वा
हुलकात् किरच् ॥ यद्वा । वसनम् ।

। वसुस्तम्भे । द्रुन् । वसिरंशति । रात्राने । चातीनुपेतिक : । कारिपिप्पल्यामू ॥
वसिष्ठः । पुं॰ वसिष्ठमुनौ । अरुन्धतीजानौ । अरुन्धतीनाथे ॥
वसु : । पुं॰ देवभेदे । गणदेवताविशेषे ॥ यथा । धरोध्रुवश्चसोमश्च विष्णुश्चैवानिलोऽनल : । प्रत्यूषश्चप्रभासश्चवसवोऽष्टौक्रमात्स्मृता : ॥ धनाधिपे ॥ आपाम् । दीप्तौ ॥ अग्नौ ॥ योक्त्रे ॥ वकवृक्षे । शिवमल्ल्याम् । पाशुपते ॥ राजनि ॥ साधौ ॥ पीतमुद्गे ॥ शिवे ॥ सूर्ये ॥ षट्सङ्ख्यायाम् ॥ धनिष्ठानक्षत्रे ॥ पुष्करिण्याम् ॥ क्लीबे ॥ वृद्धौषधे ॥ चक्रे ॥ पिष्टौ ॥ वसन्तिसर्वभूतान्यत्र॰ तेष्वयमपिवसतीतिवावसु : ॥ न॰ रत्ने ॥ धने । वारि ॥ शाटके ॥ जले ॥ स्त्री॰ दीप्तौ । वृद्धौषधे ॥ त्रि॰ मधुरे ॥ शुष्के ॥ वसतिसर्वत्र॰ उच्यतेवासुर्ण : सर्वमोच्यतेऽनेनवा॰ वस्ते॰ वस्तेवा । वसनिवासे॰ वसआच्छादनेवा शृस्वृस्निहि त्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च : ॥
वसुक : । पुं॰ शिवमल्ल्याम् । वकपुष्पे । सुरेष्टे ॥ अर्कपर्णे । रक्तार्के । मन्दारे ॥ न॰ रौमके । साम्भरिलवणे ॥ पांशवे ॥ वासुकी ॥ स्वार्थेकन् ॥ वसुकायतिवा । कै॰ । आतोनुपेतिक : । अलिंव । यावा दिश्वात्कान् वा ॥ वसत्यस्मिन् । औणादिकोऽक ॥ वसुखिति-कौवा ॥
वसुकीट : । पुं॰ याचके ॥
वसुचरणम् । न॰ भगणे॰ ॥ ॥
वसुच्छिद्रा । स्त्री॰ मणामेदावृक्षे ॥
वसुद : । पुं॰ धनाधिपे । कुबेरे ॥ हरौ ॥ त्रि॰ धनदातरि ॥ वसुदयते । देङ् पालने । वसुददातिवा । डुदाञ्॰ । आतङ्कातिक : ॥
वसुदान : । त्रि॰ सर्वप्रसदे ।
वसुदेव : । पुं॰ श्रीकृष्णजनके । आनकदुन्दुभौ । शूरे । वसुपुत्रमेपुरी व्यतिमेदशे । दिगु॰ । मधाद्यच ॥
वसुदेवता । स्त्री॰ धनिष्ठानक्षत्रे ॥
वसुदेवभू : । पुं॰ श्रीकृष्णे ॥
वसुधा । स्त्री॰ क्षितौ ॥ वसुदधाति । डुधाञ् । ॰ । आतङ्कातिक : ॥
वसुधाखण्डूरिका । स्त्री॰ भूखर्जूरिकायां ॥
वसुधाधिप : । पुं॰ भूपतौ ॥ अग-णे॰ । ऽ । ॰ ॥
वसुधान : । पुं॰ कोषे । वसुधीयतेस्मिन् ।
वसुधारा । स्त्री॰ वृद्धिश्राद्धपूर्वकर्त्तव्ये ऽपि रालवसुदे श्रयकऊडालगघृत

धारायाम् । यथा । कुन्दालम्नांव सोधारांसप्तवारान् धृतेनतु । कारयेत्पञ्चवारान् वानातिनीचांनचोच्छ्रिताम् ॥ आयुष्मानितिशान्त्यर्थंजप्त्वातत्रसमाहित : । षड्भ्य : पितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥ इतिकात्यायन : । अपिच । देवस्थानाभिमायांप्राग्देशपरिमाणत : । सप्तवापञ्चवाविन्दून्दद्यात् सिन्दूरचन्दनै : । प्रत्येकाविन्दुंमतिमान् कासंमायांस्मरन् । घृतधारामविच्छिन्नांदद्यात्तद्वसुयत्नत् । कुबेरपुर्याम् ॥ धनसम्पत्तौ ॥ जिनयक्षिविशेषे । तारायाम् ॥ वसोश्चेदिराजस्यधारा ॥ भीमेतीर्थविशेषे ॥

वसुनन्दक : । पुं० खेटके । धनवृद्धिऔषधौ ॥

वसुन्धरा । स्त्री० गोलायाम् । उर्व्याम् ॥ वसूनिधारयति । संज्ञायांभृतृजिधारीतिखच् । खचिहस्व : । अरुर्द्विषदितिमुम् ॥

वसुप्राण : । पुं० वह्नौ ॥

वसुमती । स्त्री० भुवि ॥ यथासप्तद्वीपावसुमतीति । वसुधनमस्त्यस्याम् ॥ मतुप् । ङीप् ॥

वसुमना : । पुं० विष्णौ ॥ वसुशब्देनप्राधस्त्यंलक्ष्यते । वसुप्रशस्तंमनोयस्य । रागद्वेषादिभि : क्लेशैर्मदादिभिश्चपञ्चभिश्चयतोनकलुषितंचित्तंततस्तन्मन : प्रशस्तम् ॥

वसुरोचि : । न० यज्ञे ॥ वसव : रोचन्तेऽस्मिन् । कषदीसौ । वसौ रुचे : संज्ञायामिति० इसिन् ॥

वसुल : । पुं० देवतायाम् ॥

वसुश्रेष्ठम् । न० रूप्ये ॥

वसुसेन : । पुं० कर्णे । चम्पाधिपे ॥

वसुस्थली । स्त्री० कुबेरपुर्याम् ॥

वसुरुट् : । पुं० बकद्रुमे ॥

वसूक : । पुं० बकवृक्षे ॥ न० साम्भरिलवणे ॥

वसूत्तम : । पुं० भीष्मपितामहे ॥

वस्क्रय : । पुं० वष्कये ॥

वस्क्रयनी । } स्त्री० वष्कयिण्याम् ।
वस्क्रयिनी । }

चिरप्रसूतायांधेनौ ॥ वस्क्रयिन्याच्छिदोषनंतपर्यायवल्लक्ष्मय : ॥

वस्कराटिका । स्त्री० वृश्चिकायाम् । कालिकापुषे ॥

वस्त : । पुं० छागे ॥ वस्तयति । वस्त अर्दनेषु रादि : । पचाद्यच् ॥

वस्तकम् । न० कृत्रिमलवणे ॥ वस्तकुव । अतागन्धित्वात् । इवेप्रतिकृताविति कन् ॥

वस्तकर्ण : । पुं० शालवृक्षे ॥

वस्तगन्धा । स्त्री० अजगन्धायाम् ॥ वस्तस्येवगन्धोऽस्या : । वस्तशब्द :

स्वगन्धेलाप्यभिधाः ॥

वस्तमोदा । स्त्री० अजमोदायाम् ॥ वस्तं मोदयति । मुद० । अण्न्तः कर्मण्यण् ॥

वस्तान्त्री । स्त्री० छगलान्त्रीक्षुपे । वृषगन्धायाम् । मेषान्त्र्याम् ॥ वस्तस्येवान्त्रमस्याः । गौरादिः ॥

वस्तिः । पुं० स्त्री० नाभेरधोभागे । नाभिलिङ्गयोरन्तरे ॥ मूत्राशयो धनुर्वंशो वस्तिरित्यभिधीयते ॥ नाभेरधस्तादलाबूसदृशमधोनालमनेकच्छिद्रं मूत्रभाजनं वस्तिरुच्यते ॥ तस्यालक्षणं यथा । विस्तीर्णामांसपात्रशिराधावस्तिः पुंसांप्रशस्ते । निर्मांसात्कर्कशात्तु : खदादिग्धदाक्षुता । गोमायुसदृशायस्यवस्तिहमस्विनश्च । समवेदुः स्त्रियाः नित्यं धनहीनस्वमानयः ॥ वसति मूत्रमत्र । यद्वा । वस्ते० वस्ते वा । वस० निवासे० आच्छादने वा । वस्तिः । बहुलार्थे । वस्तिः । चिकित्साविशेषे । यथा । वस्तिर्दिधातुवासात्योनिरूहश्च तत्परः । यः स्नेहैर्दीयते स स्यादनुवासननामकः । कषायक्षीरतैलैर्यो निरूहः स निगद्यते । वस्तिभिर्दीयते यस्मात्तस्माद्वस्तिरिति स्मृतः । वस्तिभिः मृगादीनां मूत्राशयैः । भूमि० वस्तयः –

वस्त्रान्तावयवेषु । दशासु ॥

वस्तिकर्माढ्यः । पुं० अरिष्टवृक्षे । फेनिले ॥

वस्तिमलम् । न० मूत्रे ॥

वस्तु । न० द्रव्ये । पदार्थे ॥ जगति वस्तुद्वयं भावोऽभावश्चेति न्यायशास्त्रम् ॥ वस्तु० सच्चिदानन्दाद्वयं ब्रह्मेति वेदान्तशास्त्रम् ॥ वसति । वस० । वसेस्तुन् ॥ तथापि मायामर्थाद्धि वस्तुसिद्धिं भवतीति ख्यातारः ॥

वस्तुकम् । न० वास्तूके ॥

वस्तुकी । स्त्री० श्वेतचिल्लीशाके ॥

वस्तुपरिच्छेदः । पुं० सजातीयभेदो विजातीयभेदः स्वगतभेदश्चेति त्रिविधभेदे । जीवेश्वरभेदः० जीवजगद्भेदः० जीवपरस्परभेदः० ईश्वरजगद्भेदः० जगत्परस्परभेदश्चेति पञ्चविधभेदे ॥ वस्तुनः परिच्छेदः परिच्छिन्नत्वम् ॥

वस्तुविवेकः । पुं० अनित्यान्नित्यस्य पृथक्करणे ॥ नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम् । एवं यो निश्चयः सम्यक् विवेको वस्तुनः स वै ॥ वस्तुनो विवेकः ॥

वस्ता । पुं० वासयितरि ॥ वसति । वस० । तृच् ॥

वस्त्यम् । न० निशान्ते । गृहे ॥ वसनम् । वस० वसेस्तिः ॥ तत्रसा

स्तोत्रे ॥

वहि : । पु० यानो ॥ वहति । वह० । ड्स् ॥

वहुल : । पुं० अग्नौ ॥ कृष्णपक्षे ॥ न० आकाशे ॥ सितमरिचे ॥ त्रि० प्राज्ये । प्रचुरे ॥ कृष्णवर्णे ॥ बहू नर्थान् लाति । ला० । आतदूति- क : ॥ वहति । वह० । वाहुलका दुलच् ॥ वंहुलायांजाते ॥ सन्धिवे लाद्युतुलपर्वभ्योऽण् । सैषाप्रथिता पाठे तिलुक् ॥

वहुला । स्त्री० नीलिकायाम् ॥ एलाया म् ॥ गवि ॥ मानसाचलस्यदेवी- विशेषे ॥

वहुला : । स्त्री० भूमि० कृत्तिकासु ॥

वहेड्क : । पुं० विभीतकवृक्षे । व- हेडा० इ० भा० प्र० ॥

वह्नि : । पुं० भैल्लातके । चीतिकोर्षे । धनञ्जये । अग्नौ ॥ स्वाहादेवीवह्नि पत्नो ॥ चित्रकाख्यौषधौ ॥ भल्लात के ॥ निम्बूके ॥ वहतिहव्यम् देवा न्प्रतिहवि : प्रापयतिवा । वहनाय ते । वहिश्रिस्रुयुद्रुग्लाहात्वरिभ्यो निरिति० नि : ॥

वह्निकारी । स्त्री० धातकीपुष्प्याम् । धा तक्याम् ॥

वह्निकाष्ठम् । न० दाहागुरुणि । दा रुकाष्ठे ॥

वह्निगन्ध : । पुं० यक्षधूपे ॥

वह्निगर्भ : । पुं० वंशे ॥

वह्निगर्भा । स्त्री० शमीद्रुमे ॥

वह्निचक्रा । स्त्री० कलिकारीवृक्षे ॥

वह्निज्वाला । स्त्री० धातकीवृक्षे ॥ वह्नेरिवज्वालाऽस्या : । वह्नेर्ज्वालेव वा । रक्तपुष्पत्वात् ॥

वह्निदमनी । स्त्री० अग्निदमनीक्षुप

वह्निदीपक : । पुं० कुसुम्भे ॥

वह्निदीपिका । स्त्री० अजमोदायाम्

वह्निनामा । पुं० चित्रके ॥ भल्लात के ॥

वह्निनी । स्त्री० जटामांस्याम् ॥

वह्निपुष्पी । स्त्री० धातक्यां ॥

वह्निभोग्यम् । न० घृते ॥

वह्निमन्थ : । पुं० गणिकारिकावृ क्षे ॥

वह्निमन्थना : । पुं० अग्निमन्थे ॥

वह्निमारकम् । न० जले ॥

वह्निमित्र : । पुं० वायौ ॥

वह्निरेता : । पुं० शिवे । कृशानुरेत सि ॥ वह्नौरेतोऽस्य ॥

वह्निलोहकम् । न० कांस्ये ॥

वह्निवक्त्रा । स्त्री० कलिहार्याम् । लाङ्गल्याम् ॥

वह्निवधू : । स्त्री० अग्नाय्याम् । स्वाहायाम् ॥

वह्निवर्णम् । न० रक्तोत्पले ॥

वह्निवल्लभ : । पुं० सर्जरसे । धून के ॥ अग्निके ॥ वह्नेर्वल्लभ : ।

वाचः । पुं॰ मत्स्यविशेषे । वाचा॰ इ॰गौ॰दि॰भा॰ ॥

वाचंयमः । पुं॰ मुनौ । मौनव्रतिनि ॥ वाचंयच्छति । यमउपरमे । वाचि यमोव्रतइतिखच् । वाचंयमपुरन्दरौचेत्यमन्तत्वम् ॥

वाचकः । पुं॰ शब्दे ॥ यथा । शास्त्रे शब्दस्तुवाचकः । शास्त्रे व्याकरणादौयोवाचकः साधुशब्दः सएवनियमपदेनशब्दशब्देनव्यवह्रियते ॥ वर्णव्यतिरिक्तस्यपदस्यवाक्यस्यवावाचकत्वमिच्छन्तिवैयाकरणाः । वर्णानांप्रत्येकंवाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादितिकैयटः ॥ कथके । पुराणादिपाठके ॥ सचब्राह्मणएवभवति । यथा । ब्राह्मणंवाचकंविद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकंव्रजेदिति ॥ त्रि॰वक्तरि ॥ वक्ति ॥

वाचक्नवी । स्त्री॰ वचक्नोर्दुहितरि । गार्ग्याम् ॥

वाचनम् । न॰ कथने ॥ पठने ॥ यथा । शुचिनानन्यचित्तेनपठितव्यंप्रयत्नतः । नकार्योसक्तमनसाकार्यस्तोत्रस्यवाचनमितिवाराहीतन्त्रम् ॥

वाचनकम् । न॰ प्रहेलिकायाम् ॥ वायने । व्रतोपायने । सूपविशेषे ॥

वाचनिकः । त्रि॰ वचनप्राप्ते ॥ वचनादागतः । ठक् ॥

वाचनीयः । त्रि॰ वाचयितुमर्हे ॥

वाचस्पतिः । पुं॰ जीवे । बृहस्पतौ ॥ वाचः समस्तविद्यारूपस्यवचसः पतिः । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्वितिसत्वविधानात् ॥ षष्ठ्याअलुक् ॥

वाचस्पतिवल्लभः । पुं॰ पुष्परागमणौ । पोखराज॰ इतिभाषाप्र॰ ॥

वाचस्पत्यम् । न॰ वाग्मित्वे ॥ ब्राह्मणादित्वात्ष्यञ् ॥

वाचा । स्त्री॰ वाचि । वाच्याम् ॥ क्विबन्ताद्वाचे॰भागुरिमतेटाप् ॥

वाचाटः । त्रि॰ जल्पाके । वाचाले । बहुगर्ह्यवाचि ॥ कुत्सितंबहुभाषते । आलजाटचौबहुभाषिणि । कुत्सितइतिवक्तव्यमितिवाक्शब्दादाटच् ॥ सुबहुभाषिण्यपिकल्पात्वाचाटवाचालयोर्वृत्ते । वाचाटोवाचालोजल्पाकः सुबहुभाषीत्यादितिहेमाख्यपर्यायैर्वाभाषितः । नित्यप्रगल्भवाचालामुपतिष्ठेसरस्वतीमितिमुरारिः ॥

वाचारम्भणम् । न॰ अनृतजडानात्मरूपे ॥ निरूप्यमाणेऽसतः सत्ताहीनमपिवद्परोक्षव्यवहारगोचरतयागम्यतेतद्विषयः ॥

वाचालः । त्रि॰ वाचाटे ॥ कुत्सितंबहुभाषते । वाचोयुक्तोऽस्त्यसन्तिरा । आलजाटचौबहुभाषिणि । कुत्सित

इतिवक्तव्य मितिवाचस्पत्यम् ॥

वाचिकम् । न॰ सन्देशवाचि ॥ वाचोव्याहृतार्था मितिठक् ॥ वाचिकंतद्वदेत्थदूतत्वे नाभिशंसन मितिशब्दरत्नावली ॥ पुं॰ वाक्यारम्भे ॥ यथा । आलापश्चविलापश्च संलापश्चविलापकः । अनुलापोपलापश्चसन्देशश्चातिदेशिकः ॥ अपदेशोपदेशौचनिर्देशोव्यपदेशकः । कीर्त्तितावचनारम्भा द्वादशामी मनीषिभिरित्युज्ज्वलनीलमणिः ॥ त्रि॰ वाचा॰ वचसाकृते ॥ यथा । वाचिकंवाचिकंवापिमानसंवायथामति । आराधनंपरेशस्यभावशुद्धिविधीयते ॥

वाचिकहारकः । पुं॰ लेखे । पत्रदूते ॥

वाचोयुक्तिः । त्रि॰ वाग्मिनि ॥ वाचोयस्य : युक्तिः सद्युक्तिमत्त्वम् । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरे ष्वितिवाअलुक् ॥

वाचोयुक्तिपटुः । त्रि॰ सुवक्तरि । वाग्मिनि । वाचोयुक्तिषुपटुः ॥

वाच्यम् । न॰ प्रतिपादने । दूषणे । त्रि॰ कुत्सिते । हीने ॥ वचनार्हे ॥ अभिधेये ॥ यदस्माच्छब्दान्नियमतः प्रतीयते॰ तत्तस्यवाच्यम् । यथा । गामानयेत्यस्मिन्वाक्ये॰ गोशब्दस्यगोत्वम् ॥ उच्यते । वचपरिभाषणे । ण्यत् । वचोऽशब्दसंज्ञायामितिनकुत्वम् ॥ अर्थोवाच्यश्चलक्ष्यश्च व्यङ्ग्यश्चेतित्रिधामतः । वाच्योऽर्थोऽभिधयाबोध्योलक्ष्योलक्षणयामतः । व्यङ्ग्योव्यञ्जनयाताः स्युस्तिस्रः शब्दस्यशक्तयः ॥

वाच्यमानः । त्रि॰ प्रस्तूयमाने ॥ वचेरीरादिकात्कर्मणिशानच् ॥

वाजः । पुं॰ निस्वने । शब्दे ॥ पक्षे ॥ शरपक्षे ॥ वेगे ॥ मुनौ ॥ न॰ घृते । यज्ञे ॥ अन्ने ॥ वारिणि ॥ वजत्यनेन । वजगतौ । इत्यस्मात्तिवञ् । निघायासिट्त्वात्कुत्वम् ॥ वाजयतिवा । यद्वा : । पचाद्यच् ॥

वाजपेयः । पुं॰ न॰ अन्नसुराप्रधाने यज्ञविशेषे ॥ वाजमेवपेयमस्मिन्निति यस्ये ॥

वाजपेयिकः । पुं॰ वाजपेययागविदितरि ॥ वाजपेयप्रतिपादकग्रन्थाध्येतरि ॥ वाजपेयमधीते॰ वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥

वाजभोजी । पुं॰ वाजपेययज्ञे ॥

वाजश्रवाः । पुं॰ अन्नदानादिनिमित्तयशोविशिष्टे ॥ वाजमन्नंतद्दानादिनिमित्तंश्रवोयशोयस्यसः ॥

वाजश्रवसः । पुं॰ वाजश्रवसोऽपत्ये ॥

वाजसनेयः । पुं॰ जनमेजययज्ञवेदा

वाचः । पुं० मत्स्यविशेषे । वाचा० इ०गौ०दे०भा० ॥

वाचयमः । पुं० मुनौ । मौनव्रतिनि ॥ वाचंयच्छति यमउपरमे । वाचि यमोव्रतइतिखच् । वाचंयमपुरन्दरौचेत्यमस्तत्त्वम् ॥

वाचकः । पुं० शब्दे । यथा । शास्त्रे शब्दस्तुवाचकः । शास्त्रे व्याकरणादौयोवाचकः साधुशब्दः सएवनियमपदेनशब्दशब्देनव्यवह्रियते ॥ वर्णव्यतिरिक्तस्यपदस्यवाक्यस्यवावाचकत्वमिच्छन्तिवैयाकरणाः । वर्णानांप्रत्येकंवाचकत्वेद्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादितिकैयटः ॥ कथके । पुराणादिपाठके ॥ सचब्राह्मणएवभवति । यथा । ब्राह्मणंवाचकंविद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकंव्रजेदिति ॥ त्रि०वक्तरि । वक्ति ॥

वाचक्नवी । स्त्री० वचक्नोर्दुहितरि । गार्ग्याम् ॥

वाचनम् । न० कथने । पठने । यथा । श्रुतेनानन्यचित्तेनपठितव्यंप्रयत्नतः । नकार्यंसततंमनसाकार्यंस्तोत्रस्यवाचनमितिवाराहीतन्त्रम् ॥

वाचनकम् । न० प्रहेलिकायाम् ॥ वायने ,व्रतोपायने । पूपविशेषे ॥

वाचनिकः । त्रि० वचनप्राप्ते ॥ वचनादागतः । ठक् ॥

वाचनीयः । त्रि० वाचयितुमर्हे ॥

वाचस्पतिः । पुं० जीवे । बृहस्पतौ ॥ वाचः समस्तविद्यारूपस्यवचसः पतिः । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्वितिसत्वविधानात् ०षष्ठ्याअलुक् ॥

वाचस्पतिवल्लभः । पुं० पुष्परागमणौ । पोखराज० इतिभाषाप्र० ॥

वाचस्पत्यम् । न० वाग्मित्वे ॥ ब्राह्मणादित्वात्ष्यञ् ॥

वाचा । स्त्री० वाचि । वाक्याम् । क्विबन्ताद्वाचो०भागुरिमतेटाप् ॥

वाचाटः । त्रि० वाग्मिनि । वाचाले । बहुगर्ह्यं वाचि । कुत्सितं बहुभाषते । वाचाटोबहुभाषिणि । कुत्सितबहुतिवक्तव्यमितिवाक्शब्दादाटच् । सुबहुभाषिण्यपिजल्पाकवाचाटवाचालावर्त्तन्ते । वाचाटोवाचालोजल्पाकः सुबहुभाषीत्यादितिश्लोकार्द्धपर्य्यायेषुपालितः । किन्तुप्रगल्भवाचासुपठितेसरस्वतीमितिमुरारिः ॥

वाचारम्भणम् । न० अनृतजल्पनात्मरूपे । निरूप्यमाणेस्वतः सत्ताहीनमपियद्परीक्ष्यव्यवहारगोचरतयागम्यतेतदित्यर्थः ॥

वाचालः । त्रि० वाचाटे ॥ कुत्सितंबहुभाषते । वाचोबहुत्वेऽस्यसन्निवा । वाचलाटचौबहुभाषिणि । कुत्सित

वाडव्यम् । न० विप्रवृन्दे ॥ वाडवानां समूहः । ब्राह्मणमाणववाडवाद्यत् ॥ वाडवतायाम् ॥ वाडवस्य कर्म भावो वा । ब्राह्मणादित्वात् ष्यञ् ॥

वाड्वलिः । पुं० वाड्वालस्यापत्ये ॥ अपत्ये० अतइञ् । वाचोवाडिष्ट्वं बहुभावश्चोत्तरपदस्येति ॥

वाढम् न० दृढे । भृशे । अतिशये ॥ प्रतिज्ञायाम् ॥ त्रि० अतिशयविनि ॥ आविष्टके । बाधते । वाहप्रयत्ने० चोढ्यादि : । गत्यर्थेतिक्त प्रत्यये० अनुबन्धान्ते तिनिपातितम् ॥ उदात्तैस्वरः । बहुप्रायणे । क : । अनुबन्धान्ते तिसाधु : ॥

वाढम् । अ० स्वीकारे । अङ्गीकृतौ ॥

वाण : । पुं० काण्डे । शरे । पृषत्के । विशिखे । अजिह्मगे । खगे । कलम्बे । मार्गणे ॥ गोस्तने ॥ किणे ॥ अग्नौ ॥ शरस्यावयवे ॥ वृक्षविशेषे ॥ भद्रमुञ्जे ॥ दैत्यविशेषे । बलिज्येष्ठपुत्रे ॥ कविविशेषे ॥ मुक्ते ॥ नीलझिण्ट्याम् ॥ ध्वनौ । त्रि० ध्वनियुक्ते ॥ वाणयति० रोषमुत्पादयति शत्रुम् । वणशब्दे । स्वार्थेण्यन्तः । पचाद्यच् ।। वण्यते । कर्मणि घञ् वा ॥ वणनम् । भावे घञ् वा ॥ वाण : शब्दोऽस्त्यस्य । अर्श आद्यच् वा ॥

वाणगङ्गा । स्त्री० रावणबाणनिर्भिन्नसोमेश्वरगिरिप्रभवनदीविशेषे ॥ यथा । सोमेशाद्दक्षिणे भागे वाणे-नाद्रिं विभिद्य वै । रावणेन प्रकटिता जलधारातिपुण्यदा । वाणगङ्गेति विख्याता यास्नाता दशहारिणी । स्नात्वा तु वाणगङ्गायां दृष्ट्वा वाणे-श्वरं विभुम् । गङ्गास्नानफलं प्राप्य मोदते दिवशक्रवि ॥

वाणदण्ड : । पुं० वापदण्डे । वेमनि ॥

वाणपुङ्खा । स्त्री० शरपुङ्खायाम् ॥

वाणपुरम् । न० देवीकोटे । शोणितपुरे ॥ वाणस्य असुरविशेषस्य पुरम् ॥

वाणभट्ट : । पुं० ग्रन्थकारविशेषे ॥

वाणयुद्धम् । न० वाणासुरेण सह श्रीकृष्णस्य युद्धे ॥ यदैवधे ॥

वाणलिङ्गम् । न० नर्मदानद्युद्भवशिवलिङ्गे ॥ यथा । नर्मदाजलमध्यस्थं वाणलिङ्गमितिस्मृतम् । वाणलिङ्गं स्वयंभूतं चन्द्रकान्ताश्मयं स्थितम् ॥ चान्द्रायणशतं चापि शक्योर्नैवेद्यभक्षणात् । याम्यायाम्यविभागीयं वाणलिङ्गं भविष्यति ॥ तदपि तं जलं वाऽपि याम्यं प्रासादसंज्ञया । शिवनाममयं लिङ्गं सदा पूज्यं महर्षिभि : ॥ यतश्च सर्वलिङ्गेभ्यस्तद्धि पूज्यतमं मतम् । चतुरङ्गुल

सर्वं वार्द्धुषिकोनाम हव्यकव्यवहिष्कृतः ॥ तथा वृद्धिग्रहणनियमो यथा । अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शतात् । द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् ॥ द्विकं शतञ्च गृह्णानो न भवत्यर्थकिल्विषीति । शतकार्षापणेऽशीतिभागं विंशतिपणाः । द्विकं पुराणद्वयम् । एवं विधं नियममतिक्रम्य अनापदि० स्वयमन्यद्वारा वा स्वाम्यनयोर्व्यवहरतस्तत्रैव प्रायश्चित्तम् । आपदि तु स्वयङ्करणे० नियमातिक्रमेऽपि न दोषः । इति प्रायश्चित्तविवेकः ॥ वृद्ध्यर्थं द्रव्यं वृद्धिः । तां प्रयच्छति । प्रयच्छति गर्ह्यमिति ठक् । वृद्धेर्वृधुषिभावो वक्तव्यः ॥

वार्द्धुष्यम् । न० धान्यवर्द्धने ॥

वार्धेयम् । न० द्वीपीलवणे ॥

वार्द्ध्रम् । न० स्त्री० चर्म्मणि ॥ अर्द्धवृद्धम् । चर्म्मणोऽञ् । त्रि० वर्ध्रस्य विकारे । तस्य विकारइत्यण् ॥

वार्ध्री । स्त्री० चर्म्मरज्जुः । वद्धी० इ० भा० । वार्ध्रान् ० ङीष् ॥

वार्ध्रीणसः । पुं० वार्ध्रीणसे । छाग विशेषे ॥ यथा । त्रिपिवन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसमिति प्राहुर्याज्ञिका पितृकर्म्मणीति निगमे । एकचरे । गण्डके, गण्डा० इ० भा० ॥ पक्षिविशेषे । यथा । नीलग्रीवो रक्तशीर्षः कृष्णपादः सितच्छदः । वार्ध्रीणसः स्यात्पक्षीशो मम विष्णोरतिप्रियः । रोहितश्च तु मत्स्यश्च मांसैर्वार्ध्रीणसस्य च । तृप्तिमाप्नोति वर्षाणां शतानि श्रीथिमत्प्रिया ॥ भक्षिणाप्युत्तखड्गानां रुधिरैः शतवार्षिकीम् । तृप्तिमाप्नोति परमां माघादूर्ध्व रुधिरैस्तथा ॥ इति कालिकापुराणे ९९ अध्यायः ॥ वार्ध्री नासिकाऽस्य । अञ् नासिकायाश्चेत्यच् ० नसादेशश्च । पूर्वपदादिति णत्वम् ॥

वार्भटः । पुं० नक्र । कुम्भीरे । वारि जले० भटः ॥

वार्म्मणम् । न० वर्म्मसमूहे ॥ वर्म्मणां समूहः । भिक्षादिभ्योऽण् ॥

वार्म्मिणम् । न० वर्म्मिणां समूहे ॥

वार्मुक् । पुं० अम्भोदे । मेघे ॥ वाः मुञ्चति । मुच्लृ० क्विप् ॥

वार्य्यः । पुं० ऋत्विजि ॥ व्रियते । वृङ् सम्भक्तौ । वरत् । क्यप् तु० ह लन्पश्च —०— ॥

वार्य्यः । त्रि० वरणीये ॥ वारिसम्बन्धिनि ॥

वार्य्युद्भवम् । न० पद्मे ॥ त्रि० जलजे ॥

वार्राशिः । पुं० समुद्रे । इति पुराणम् ॥

वार्व्वटः । पुं० वहित्रे ॥

वार्ष्वंया । स्त्री॰ सर्वंयायां ।

वार्षकम् । न॰ सुमुमक्तपृथिवीद्ध्रभागान्तर्गतभागविशेषे ॥

वार्षगण्यः । पुं॰ पतञ्जलौ ॥ वृषगणस्यगोत्रापत्यम् । गर्गादित्वात् यञ् ॥

वार्षभाणवी । स्त्री॰ वृषभाणुकन्यायाम् । श्रीराधायाम् ॥ यथापरात्पर : कृष्णस्तथैव वार्षभाणवीति पद्मपुराणम् ॥

वार्षलम् । न॰ वृषलकर्मणि ॥ यथा । नकथञ्चनकुर्वीतब्राह्मण : कर्म्म वार्षलम् । वृषल : कर्म्मचब्राह्मणं पतनीयेहितैतयो : ॥

वार्षिकम् । न॰ त्रायमाणायाम् । यवभद्रिकायाम् ॥ वृष्टिकाले ॥ यथा । वार्षिकं तद्ध्वृष्टं भूमिसमहितं जलम् । सिद्धान्तमुपितं तत्तु प्रसन्नमन्नतोपमम् ॥ त्रि॰ वर्षाभवे ॥ वर्षासुभवम् । जातम् साधु वा । वर्षाभ्यष्ठक् । ठञ्येक : ॥ वर्षंभवे । वात्सरिके । वर्षासम्बन्धिनि ॥ यथा । वार्षिकांश्चतुरोमासान् दुर्गमा : पथिसर्वदा । तस्मादेकत्रविबुधै : स्थातव्यमितिनिश्चय : ॥ चष्टौमासांस्तुप्रवसेत्सदाकार्यवशा- हिज : । वर्षाकालेनगन्तव्यं प्रवासेसुप्राभिच्छति लिभागशो नारद : ॥

वार्षिकी । स्त्री॰ त्रायमाणायाद्मौषधौ ॥ वेलट्ट॰ स॰ पुष्पविशेषे ॥ यथा । श्रीपदोपट्पदानन्दाश्वार्षिकीमल्लनस्यनेतिभावप्रकाश: । वार्षिकीशीतलालध्वीतिक्तादोपत्रयापहा । कर्णाक्षिमुखरोगघ्नी॰तत्तैलं सद्धुपंसूतम् ॥ इतिच ॥ वर्षर्त्त्व्यपुष्पादौ ॥ वर्षासुभवा । ठञ् । ङीप् । कालाट्ठञ्वा ॥

वार्षिला । स्त्री॰ करकायाम् ॥

वार्ष्णेय : । त्रि॰ वृष्णिवंशोद्भवे ॥

वार्हतम् । न॰ वृहतीफले ॥ वृहत्या: फलम् । प्रचादिभ्योण्विधानसामर्थ्यात्तस्यफलेनलुप् ॥

वार्हद्रथ : । पुं॰ } जरासन्धे ॥ वृहद्रथस्यापत्यम् । यञ् इञ्वा ॥
वार्हद्रथि । पुं॰ }

वार्हस्पत्य : । पुं॰ नास्तिके ॥ यथा । स्वास्त्रादवाधार्हत : स्या॰ पञ्चवादीतुसौगत: । नैयायिकस्त्वक्षपादो॰ योग: साङ्ख्यस्तुकापिल: ॥ वैशेषिक॰ स्याद्यौलूक्यो॰ वार्हस्पत्यस्तुनास्तिक: । चार्वाकलौकायतिकावैतेपडपितायि॰का: ॥ शैवेये । कस्याञ्चिदित्याचार्यासेधे वार्हस्पत्य: स्मृत: ॥ न॰ नीतिशास्त्रे ॥ वृहस्पतिर्देवताकर्म्मणि ॥ त्रि॰ वृहस्पतिसम्बन्धिनि ॥ वृहस्पतिर्देवताऽस्य॰ वृहस्पतेरिदंवा । दित्य

दिव्यादिव्यपत्युत्तरपदाच्च : ॥
वालक : । पुं० न० पारिहार्ये ॥ त्रि० अङ्गुरीयके ॥ वालकोऽस्त्रीपारिहार्ये० त्रिपुस्यादङ्गुरीयके । इ० मेदिनि : ॥ वालके ॥
वालव : । पुं० द्वितीयकरणे । तत्र जातस्य फलं यथा । कार्यं प्रसक्ताख जनस्य भक्तसिनाग्रणेताक्षमीचयुक्त : । उदारबुद्धिर्बलवान्मनुष्यो वालवाख्ये जननं प्रियस्य ॥
वाल्कम् । न० चौमादिवस्त्रे ॥ त्रि० वल्कभवे ॥ वल्कस्य वल्कलस्य० विकार : । तस्य विकारइत्यण् ॥
वाल्कलम् । त्रि० वल्कलनिर्मिते ॥ वल्कलस्येदम् । अण् ।
वाल्कली । स्त्री० मदिरायाम् ॥
वाल्मिकि : ।
वाल्मीक : । पुं० } कविज्येष्ठे ॥
वाल्मीकि : ।
प्राचेतसे भृगुवंशीयमुनिविशेषे ॥
वाव । अ० अवधारणार्थे ॥ प्रसिद्धौ ॥
वावदूक : । त्रि० वाचोयुक्तिपटौ । वाग्मिनि । वक्तरि ॥ कुर्यादिषु वावदूकशब्दपाठसामर्थ्याद्दिदूक : ॥ यद्वा । पुन : पुनरतिशयेनवाव दति० इति० वदेर्यङन्तात्० उलूकादयश्चेत्यूक : ॥
वावय : । पुं० तुलसीविशेषे । वाबुइ० इ० भा० ॥ इतिशब्दचन्द्रिका ॥
वावृत : । त्रि० कृतवरणे । वृते । वृतवृते । स्वयंवरादिनास्त्रीकृतवरा दौ ॥ वावृत्यतेस्म । वावृतुवर्त्तने । क्त : ॥
वाशा । स्त्री० वासके ॥ वाश्यते । वाशृशब्दे । गुरोश्चहल: । टाप् ॥
वाशि : । पुं० छेदनसाधने । कुठारभेदे ॥ अग्नौ ॥ वाश्यते । वाशृ० । वसिवपीत्यादिना इञ् ॥
वाशिका । स्त्री० वासके ॥ वाश्यते । वाशृ० । गुरोश्चहलइत्य : टाप् । क : ॥ यद्वा । उश्यते, वशकान्तौ । संज्ञायामित्यनेन० ण्वुल् ॥
वाशितम् । न० पक्षिपश्वादिशब्दे ॥ वाश्यतेस्म । वाशृ० भावे क्त : ॥
वाशिनायनि : । पुं० वाशिनीपत्ये ॥ उदीचां वृद्धादगोत्रादिति० फिञ् दाण्डिनायनेति० टिलोपाभाव : ॥
वाशिष्ठ : । त्रि० वशिष्ठसम्बन्धिनि ॥
वाशिष्ठी । स्त्री० । गोमत्यांनद्याम् ॥ तीर्थविशेषे ॥ यत्र वशिष्ठपिकुल्या तीर्थम् ॥ वशिष्ठसम्बन्धिन्याम् ॥
वाशुर : । पुं० गर्दभे ॥ वाश्यते । वाशृ० । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥
वाशुरा । स्त्री० रात्रौ ॥ वाश्यन्तेऽस्याम् । वाशृ० । मन्दिवाशि

ण्युरच् । टाप् ॥
वाश्र : । पुं॰ दिवसे ॥ शकुनौ ॥ रासभे ॥ न॰ मन्दिरे ॥ चतुष्पथे ॥ वाश्रयते । वाश्र॰ । स्फायितञ्चिव ञ्चीत्यादिना - रक् ॥
वाष्प: । पुं॰ न॰ नेत्रजले ॥ भाफइ॰ भा॰ प्र॰ ॥ ऊष्मणि ॥ वाधति । बाधृ लोडने॰ बाधिता । बाधत्यो ष्टौ । खष्पशिल्पशष्पवाष्परूपपर्प तल्पाः ॥ इतिसाधु : । बाधतेनैव मितिपा । वाधते : घोनिपातनात् ॥ लोहे ॥ इतिमेदिनीकर : ॥
वाष्पका : । पुं॰ मारिषे ॥ यथा । मा रिषोवाष्पकोमार्ष : शीतोरक्तस सर : ॥
वाष्पका । स्त्री॰ हिङ्गुपत्र्याम् ॥
वाष्पायमाण : । त्रि॰ वाष्पमुद्वमति ॥
वाष्पिका । स्त्री॰ हिङ्गुपत्र्याम् । कार व्याम् ॥ वाष्पमिव । इवेप्रतिकृता विति कन् ॥
वाष्पी । स्त्री॰ वाष्पिकायाम् ॥
वाष्पीका । स्त्री॰ लक्ष्मपत्र्याम् । वाष्पि कायाम् । रांधुनी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ वाष्पमिव । कन् । टाप् । पृषोदरादि : ॥
वास : । पुं॰ वेश्मनि ॥ वसस्थाने ॥ धारके ॥ वसन्त्यत्र । वसनिवासे । एलरेतिघञ् ॥ अघ्वादिविश सि॰ । ऽ॰ ॥
वासकोष : । पुं॰ वस्त्रपेटके ॥
वासक : । पुं॰ वैद्यमातरि । वृषे । अटरूषे । सिंहास्ये । बांसा॰ वासू टी॰ इ॰ भा॰ प्र॰ इयं ॥ यथा गुणायथा । वासकोवातकृत स्वर्यः कफपित्तास्रनाशन : । तिक्तस्तुवर कोहृद्योलघु : शीतल स्तृड्गदस्त् ॥ ष्वासकासज्वरच्छर्दिमेहकुष्ठक्षया मह : ॥ नानाङ्गविशेषे ॥ त्रि॰ गन्ध कृति ॥ वासयति । वसु ल ॥ यहा । वस्त्रं॰ आच्छादयति । वसपा च्छादने । ण्वु ल् ॥
वासकर्णी । स्त्री॰ यज्ञशालाया म् ॥
वासकसज्जा । स्त्री॰ स्त्रीयादिनायिका भेदे ॥ भवतीप्रियवासर : ॰ मृत्यं निश्चित्य॰ या॰ सुरतसामग्रीसज्जी करोतिसा॰ वासकसज्जा । वास कोवासर : ॥
वासका । स्त्री॰ वासकवर्ष ॥
वासगृहम् । न॰ गर्भागारे । गृहमध्य भागे ॥ शयनगृहे ॥ स्थितिगेहे ॥ वासाय॰ वासस्य वागृहम् ॥
वासतेयी । स्त्री॰ रात्रौ ॥ वसनम्॰ वसति : वसतीसाधु : । पथ्यति थिवसतिस्वपतेर्ढञ् ॥
वासनम् । न॰ धूपने ॥ वारिधान्या म् ॥ वस्त्रे ॥ निक्षेपाधारे ॥ वासे ॥ ज्ञाने ॥ त्रि॰ वसनेनक्रीते ॥

वाह्य : । त्रि० आच्छाद्ये । वस्त्राच्छादने । यान्म'यिश्रत् ॥

वाह : । पुं० भुजे ॥ धान्यमानभेदे यथाहुः । पलंप्रकुञ्चकंमुष्टि : कुडवस्तच्चतुष्टयम् । चत्वार : कुडवा : प्रस्थश्चतुः प्रस्थमथाढकम् । अष्टाढकोभवेद्द्रोणोद्विद्रोण : सूर्प उच्यते । सार्धसूर्पोभवेत् खारीद्वे खार्य्यौगोण्युदाहृता ॥ तामेवभारं जानीयाद्वाहोभारचतुष्टयमिति । अश्वे ॥ वृषे ॥ वायौ ॥ वहति वहप्रापणे । एलादीतिघञ् ॥ ऊह्यतेऽनेनवा । वहे : कर्मणि कारणेवा० घञ् वाह्यतेवा । यस्य : । अच् ॥ वाहतेवा । वाहृप्रयत्ने । अच् ॥ रथादौ ॥ त्रि० वहनकर्त्तरि ॥

वाहक : । त्रि० वहनकर्त्तरि ॥ वहति । वह० ण्वुल् ॥

वाहद्विषन् । पुं० महिषे ॥ वाहानां द्विषन्० वाहिपुद्विषन्वा । समीतियोगविभागात्समास : ॥

वाहनम् । न० हस्त्यश्वरथादौ । याने युग्ये । पत्रे । धोरणे ॥ देव्यावाहनानियथा । विष्णुब्रह्मशिवैर्देवैर्ध्रियतेसाजगन्मयी । सितप्रेतो महादेवोब्रह्मालोहितपङ्कज : ॥ हरिर्हरिस्तुविज्ञेयोवाहनानिमहौजस । समूर्त्त्यावाहनत्वन्तुतेषांतस्मा दुच्यते ॥ तस्मान्मूर्त्त्यन्तरंकृत्वा वाहनत्वंगतास्त्रय : । यस्मिन् यस्मिन् महामायाप्रीयातिसततंशिवा ॥ तेनतेनस्वरूपेणभासनात्त्रयभवंस्त्रय : । भूतिकालिकापुराणम् ॥ वहत्यनेन । वह० । करणेल्युट् । वाहनमाहितादितिनिपातना द्दीर्घ : ॥ यद्वा । वाहयति । वहि : स्वार्थण्यन्तात् कर्त्तरिल्युट् ॥ वाहानांप्रेरणे ॥ यथा । वाहनंप्रति वाहानांषड्विधंप्रेरणंविदुः । रागाय वल्गाकशापार्ष्णिप्रतोदरवभेदत: ॥ चतुर्थभवने ॥

वाहनश्रेष्ठ : । पुं० अश्वे । हये ॥

वाहना । स्त्री० निर्वाहयितृत्वे ॥ स्त्रा समथ्योगुध् ।

वाहवेग : । पुं० पशुभेदे ॥

वाहस : । पुं० अनडुहि ॥ वहति । वह० । वहियुभ्याञ्छन्दसीत्य सुन्० णित् । योपाद्वयान्नवाह सा ॥

वाहस : । पुं० अजगरे । अर्थे । अथास्वौ ॥ जलनिर्याणे ॥ सुनिष ण्णके ॥ वहति । वह० । वहि युभ्यांणिदित्यसच् । णित्वाद्वृद्धि : । वाहंगतिंस्यतीतिवा । योन्तक र्मणि । आतोनुपेतिक : ॥

वाहा । स्त्री० वाहौ । भुजे ॥ अजा दित्वाट्टाप् ॥

वाहिकः । पुं० ढक्कायाम् ॥ गोवाहे । शकटादौ ॥

वाहितः । त्रि० खण्डिते ॥

वाहित्थम् । न० हस्तिकुम्भाधोभागे ॥ कुम्भोऽवयवात्तकुम्भः । वाहित्थं वा तत्कुम्भाधस्तिभागुरिः । सचचला टाधोभागः । अवग्रहं वहति । वह० । वाधग्रहीत्यादिभिः । ततिस्थश्च । यन्त्रयेक्तः । पृषोदरादित्वात् साधुः ॥

वाहिनी । स्त्री० तरङ्गिण्याम् । शैवलिन्याम् ॥ सेनायाम् ॥ सेनाविशेषे । त्रिगुणगणेषु ॥ यथा । इभाः ८१ । रथाः ८१ । अश्वाः २४३ । पदातयः ४०५ । एततपरिमाणपरिमितायां सेनायामित्यर्थः । समस्तसङ्ख्या ८१० ॥ वहति । वह० । ग्रहादित्वात् णिनिः ॥ वाहाः सन्त्यस्यां वा । इनिः ॥

वाहिनीपतिः । पुं० सेनापतौ । सेनान्याम् ॥ समुद्रे ॥ वाहिन्याः सेनायाः । वाहिनीनां नदीनां वा पतिः ॥

वाहीकः । पुं० देशविशेषे ॥ अश्वजातौ गाट० जट० द्र० मा० प्र० जातौ ॥ यथोक्तं कर्णपर्वणि २०० अध्याये । तत्रत्यः पुरातनाः कथाः कश्चिद् द्विजोत्तमः । वाहीकदेशं मद्रांश्च कुत्सयन् वाक्यमब्रवीत् ॥ पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः । तान् धर्मबाह्यानशुचीन् वाहीकान् परिवर्जयेत् ॥ शाकलं नाम नगरमापगा नाम निम्नगा । जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितमिति ॥ शतद्रुविपाशैरावतीवितस्ताचन्द्रभागेति पञ्चमः सिन्धुः षष्ठः तन्मध्यदेशो वाहीक इति व्याख्यातारः ॥ अश्वप्रभेदे ॥ गवि ॥ वाहि ॥ वहति । वह० । गण्डीकादित्वात् ईकन् । वहतेर्णिच्च ॥ त्रि० बाह्ये ॥ प्राग्दीव्यतीयेष्वर्थेषु ईकक् चेति वार्त्तिकेन ईकक् । बहिषष्टिलोपश्च ॥ वाहीकाः । पुं० भूम्नि० देशविशेषे । टक्कनामसु ॥ वाहीकाष्टक्कनामानो वाह्लीकाश्चेत्याहुरिति हेमचन्द्रः ॥

वाहुवारः । पुं० श्लेष्मातके । बहुवारे ॥

वाह्यम् । न० याने । युग्ये । पत्रे । वाहने । वर्षे ॥ त्रि० वहनीये । बलीवर्दादौ ॥ बहिरर्थे ॥ बहिर्भवे ॥ वाहयितुं योग्यः । वहेर्ण्यत् ॥ वाहिर्भवो वा । बहिषष्टिलोपो यञ् चेति यञ् ॥

वाह्यप्रपञ्चः । पुं० आन्तरप्रपञ्चातिरिक्ते ॥ यथा । पृथिव्यादिपञ्चभूततज्जन्यब्रह्माण्ड तदन्तर्भूतप

द्वयोर्मध्ये ॥ यथा । चक्रादीनां पु
रेतिष्ठन्स्य शङ्ख्यं धनुरन्वयम् । वि
कर्णौ तौ विकर्णस्त्वन्यौ नीयान्
हेपुरेतथेति विष्णुपुराणम् ॥ दुर्यो
धनानुजे ॥ त्रि० कर्णरहिते ॥

विकर्णिकः । त्रि० कर्णिकारहिते ॥
पुं० भूमि० सारस्वतदेशे ॥ यथा ।
काश्मीरास्तु माधुमताः सारस्वता
विकर्णिकाः । इति हेमचन्द्रः ॥

विकर्णी । स्त्री० पथ्याद्धृग्धर० उदा
रेऽम्लशारिणि ॥

विकर्त्तनः । पुं० अर्के । आर्कवृक्षे ।
सूर्ये ॥ विकर्त्तयति भक्तानां रागान्
प्रतीक्षिदृगे । णिजन्ताल्ल्युट् ॥
यद्वा । विशिष्टकर्त्तनं यस्य । वि-
श्वकर्मणोयस्कोटीकृतत्वात् ॥ अर्क-
वृक्षे ॥

विकर्म्मकृत् । त्रि० निषिद्धकर्म्मका
रिणि ॥

विकर्म्म । न० शास्त्रप्रतिषिद्धे व्या
पारे ॥

विकर्म्मस्थः । त्रि० निषिद्धकृति ।
चौर्यादिविकल्पकर्म्मणो विरोधीनि
यानि कर्म्माणि० अगम्यागमनादीनि
तत्कारिणि ॥

विकर्षः । पुं० । कर्षणे ॥ विकर्षणम् ।
कृष० । घञ् ॥ बाणे ॥

विकर्षणम् । न० आकर्षणे ॥

विकलः । त्रि० क्रमे ॥ विह्वले ॥ स्व
भावहीने ॥ विगता कला यस्य ॥
निष्कले ॥

विकलपाणिकः । पुं० कुणौ । कुण
रे । विकृतकरे ॥ विकलः पा
णिर्यस्य ॥

विकला । स्त्री० ऋतुहीनायाम् ॥ रा
श्यादिकलायाः षष्टितमांशे ॥

विकलाङ्गः । त्रि० स्वभावतोन्यूना
धिकाङ्गे । अपोगण्डे ॥ विकल
मङ्गमस्य ॥

विकली । स्त्री० ऋतुहीनायाम् ।
गौरादित्वान्ङीष् ॥

विकल्पः । पुं० भ्रमे । भ्रान्तौ ॥ क
ल्पने ॥ सङ्कल्पविपर्यये ॥ वित
र्के । संशये ॥ तुल्यबलरूपविरो
धे विकल्पोभवति ॥ यन्द्वानामु
पातीयस्तुयन्योविकल्पः ॥ विक
ल्पनम् । कृप् सामर्थ्ये । भावे घ
ञ् ॥ विविधकल्पे ॥ विशिष्टक
ल्पे ॥

विकल्पकः । त्रि० निर्मातरि ॥

विकल्पितः । त्रि० विपरीतत्वेनक
ल्पिते ॥

विकषा । स्त्री० मांसरोहिण्याम् ॥ म
ञ्जिष्ठायाम् ॥ विकषति । कषहिं
सायाम् । पचाद्यच् ॥

विकसः । पुं० सिन्धुनन्दने ॥ च
न्द्रे ॥

विकसत् । त्रि० जृम्भमाणे ॥

विचौ । स्त्री० वीच्याम् । तरङ्गे ॥ शु० द्विरूपकोष: ॥

विचेतन: । त्रि० चेतारहिते । विगताचेतना यस्य स: ॥ (०) ॥

विचेता: । त्रि० दुर्मनसि । अस्वमनसि । विमनसि । विगतचित्ते । भगवद्ध्यानजनितदुरितप्रतिबन्धविवेकविज्ञाने । विचित्रचित्ते । उद्विग्नचित्ते ॥

विचेय: । त्रि० मृग्ये ॥

विचेष्टनम् । न० अङ्गपरिवर्त्तने ॥

विचेष्टितम् । न० विरुद्धाचरणे । व्यापारे ॥

विच्छन्द: । पुं० विच्छन्दके । विशिष्टश्छन्दोऽत्र ॥

विच्छन्दक: । पुं० ईश्वरसद्मभेदे । विशिष्टश्छन्दोऽभिप्रायोऽत्र । यद्वा । विशिष्टान् छन्दयति अभिलाषान् करोतीति । छदि० । ण्वुल् । वुन् वा । उपर्युपरिविक्षेपं तद्विच्छन्दकसंज्ञकमिति भरत: ॥

विच्छर्द्दक: । पुं० विच्छन्दके । उच्छृदिर् दीप्तौ ॥ ण्वुल् ॥

विच्छाय: । पुं० मणौ ॥ न० पक्षिणां छायायाम् । त्रि० हतप्रभे । छायारहिते । विगताच्छाया यस्य ॥

विच्छाया । स्त्री० पक्षिच्छायायाम् ॥ क्लीबतोचिता० छायाबाहुल्यादतिश्चरत्वात् ॥

विच्छित्ति: । स्त्री० अङ्गरागे । विच्छेदे । हावभेदे ॥ यथा । मण्डनानादरन्यासो विच्छित्तीरूपदर्पत: । आभरणविलेपनादीनां कुशस्थितप्रियापराधादीर्ष्यया माद्रेषस्य कान्तानां सखीनां प्रयत्नेन धारणं विच्छित्ति: । प्रियेणार्पितमभिनीतिमिभरणं स्वल्पमपि विभूषणं विच्छित्तिरित्यन्ये । आकल्पकल्पनाल्पापि विच्छित्ति: कान्तिपोषकृदित्युज्ज्वलनीलमणि: ॥ विच्छेदनम् । छिदिर् द्वैधीकरणे । क्तिन् । छिदे० विनाशी० विच्छित्तिरिति विकाराद्यमिव: ॥ गौरायणी । इति हेमचन्द्र: ॥

विच्छिन्न: । त्रि० समालब्धे । कृते । काटा० बृ० भा० । विभक्ते । कुटिले । विशेषेणच्छिन्न: ॥

विच्छिन्नावस्था । स्त्री० विच्छेदावस्थायाम् । अभिव्यक्तस्यानिरतकार्यस्यापि० केनचिद्वस्तुनाभिभवे ॥

विच्छेद: । पुं० वियोगे । विरहे । कान्ताया: कान्तविच्छेदो मरणादतिरिच्यते ॥ विच्छेदनम् । छिदिर्० । घञ् ॥

विच्छेदावस्था । स्त्री० विच्छिन्नावस्थायाम् ॥

विच्युत: । त्रि० विचरिते ॥ विगते ॥

विच्युति: । स्त्री० वियोगे ॥

विजन: । त्रि० निर्जने । विविक्ते ।

स्यथ दुतिकल्पतरु : । अहमितिप्रत्य ये। विज्ञानस्कन्धदृत्यानन्दगिरि : ॥

विज्ञानोपसित : । त्रि० विज्ञानेननि श्चिते ॥

विज्ञानिक : । त्रि० वैज्ञानिके । प्रवी णे ॥ विज्ञानमस्यास्ति । व्रीह्यादि त्वान्मत्वर्थीयष्ठन् ॥

विज्ञापनम् । न० बोधने । समावना० ज्ञापना० इ० भा० प्र० ॥ विपूर्वाण् ज्ञाप्तज्ञानातिल्युट् ॥

विज्ञेयम् । न० परमात्मतत्त्वे ॥ त्रि० विज्ञातव्ये । इदमेवमितिविस्पष्ट ज्ञानार्हे ॥ विज्ञातुंयोग्य: । ज्ञा० । अनीयत् । इत्यति ॥

विज्यम् । न० निर्गुणे धनुषि ॥ विग ताज्यायस्मिन् ० यस्मात्० तत् ॥

विज्वर : । त्रि० विगतज्वरे ॥ विगत सन्तापे ॥ विगतोज्वरोयस्य ॥

विझर्झर : । त्रि० विषमे ॥

विञ्जामरम् । न० चक्षुष: शुक्लांशे ॥ इतिकश्चित् ॥

विञ्जोली । स्त्री० वीथ्याम् । पङ्क्तौ ॥

विट : । पुं० षिड्गे ॥ लवणविशेषे ॥ विङ्गे । स्तैर्ये ॥ मूषिके ॥ खदि रे ॥ कामुकानुचरे ॥ धूर्ते ॥ काम तन्त्रकलाकोविदे ॥ नारङ्गवृक्षे ॥ वे टति । विटशब्दे । इगुपधलक्षण : क : ॥

विटका । स्त्री० वीटिकायाम् ॥ इति कश्चित् ॥

विटङ्क : । पुं० न० गृहप्रान्ते रचितप क्षिस्थाने । कपोतपालिकायाम् ॥ विशिष्य टङ्क्यतेऽत्र । टकिबन्धने । घञर्थे कविधानम् ॥ तीरयस्तम्भयोरुप रितयङ् निर्मितेदारुणि ॥ त्रि० सु न्दरे ॥ यथा । तस्मिन्नतीत्यमुनय: षडुत्तमाना : कला : समाभव यसायघसप्तकायाम् । देवायचरित गृहीतगदौपरार्द्धामीयूरक्रुपचलक्ष्मि रीटविटङ्कवेषौ ॥ इतिभा० तृ० स्क न्धे १५ अध्याय : ॥

विटक्षित : । त्रि० अलङ्कृते ॥

विटप: । पुं० विटाधिपे । पारदारिकश्रे ष्ठे ॥ आदित्यपत्रे ॥ पुं० न० शाखा पल्लवसमुदाये । विस्तारे ॥ स्तम्बे । गुल्मे ॥ शाखायाम् ॥ पल्लवे ॥ सु ष्काण्डवृषणयोरन्तरे महावीर्य्ये ॥ विटान्पाति । पा० । आतोनुप सर्गे क : ॥ यद्वा । विटान्पानम् । पा० । घञर्थेक : ॥ वेटति० विश्व देवा । विटपाकोप्रि० शब्दे च । वि टपविष्टपविशिपोलपा : ० इ० सौ त्र : ॥

विटपी । पुं० पादपे । तरौ । वृक्षे ॥ वटे ॥ विटप : शाखाविस्तारोऽस्या स्ति । अतइनि : ॥

विटप्रिय. । पुं० मुद्गरवृक्षे । मोगरा० इ० भा० प्र० ॥ विटानांप्रिय : ॥

विट्माक्षिकः । पुं॰ धातुविशेषे । ताप्ये । नदीजे चामारे ॥

विटिः । स्त्री॰ पीतचन्दने ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । गोराख्याम् ॥

विट्खदिरः । पुं॰ दुर्गन्धिखदिरे । खदिरभेदे ॥ विड्गन्धिः खदिरः ॥

विट्चरः । पुं॰ ग्राम्यशूकरे ॥ विषं विष्ठां चरति । चर॰ । पचाद्यच् । मूलविभुजादित्वात् साधुः ॥ विण्चरो वा ॥

विट्ठलः । पुं॰ पश्चानुयाज्ञीदेवे ॥ यद्वा कुरवो चौमादागतो यथाख्याः । विदा ज्ञानेन ठान् शून्यान् लाति अदत्तमात्मीयतया गृह्णाति । ला॰ । आतोऽनुपसर्गे इति कः । विदा ज्ञानेन ठान् शून्यान् लाति गृह्णाति यः स्वयम् । अज्ञानुग्रहहेतुर्वा विट्ठलः कथ्यते बुधैरिति प्रक्रियाप्रसादः ॥

विट्पतिः । पुं॰ जामातरि ॥ यथा । मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ एतान् मातामहादीन् दश मुख्यश्रोत्रियाभावे भोजयेत् गुरुर्विद्यागुरुराचार्यादिः । विट् दुहिता तस्याः पतिः । इति कुल्लूकभट्टः ॥ भोजयेत् श्राद्धे इति शेषो बोध्यः ॥ नृपतौ ॥ वैश्यपत्यौ ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । कुषष्याम् । गुयासालिक॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥

विठरः । पुं॰ वाग्मिनि ॥

विडम् । न॰ कृत्रिमलवणे । पांशवे । खारीलु॰ इ॰ भा॰ ॥ अस्य गुणा यथा । विडं सक्षारमूर्द्ध्वाधः वातवातानुलोमनम् । लघु कफमथोपाते सज्वरेदिशयः । दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च । विबन्धानाहविष्टम्भशूलगौरवशूलनुत् । विडति । विड भेदने । इगुपधज्ञाप्रीकिरः कः ॥

विडङ्गः । पुं॰ न॰ वैद्ये । चित्रतण्डुलायाम् । क्रिमिघ्ने । विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु । शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत् ॥ त्रि॰ अभिज्ञे ॥ विडति ॥ विड॰ । विडयाक्रोशिवा । विडादिभ्यः किदिष्यङ्गच् ॥

विडम्बनम् । न॰ अनुकार दुःखप्रतारणे ॥

विडम्बना । स्त्री॰ विडम्बने । अनुकृतौ ॥

विडम्बमानः । त्रि॰ अनुक्रियमाणे ॥

विडम्बितः । त्रि॰ अनुकृते ॥ व्यस्ते ॥ दुर्गते ॥ उपहसिते ॥

विडम्ब्यः । त्रि॰ उपहासास्पदे ॥

। तडिघवाते । गुरीसे त्य : ॥

वितत : । त्रि॰ विस्तृते ॥ विशेषेणत स : ॥

वितति: । स्त्री॰ विस्तारे ॥

वितथम् । न॰ अनृतेवचसि ॥ त्रि॰ तद्वति ॥ विगतंतथासत्यंयस्मात्॰ तत्॰वितथम् । अजितियोगविभा गात्समासान्तोऽम् ॥

वितन्द्र : । त्रि॰ जागरुके ॥ तन्द्रार हिते ॥ विगतातन्द्रायस्य स : ॥

वितन्यमान : । त्रि॰ वितायमाने ॥ तनोतेः कर्मणिलट : शानजा देश : ॥

वितन्वन् । त्रि॰ विस्तारयति ॥

वितमा : । त्रि॰ तमोगुणरहिते ॥

वितरणम् । न॰ दाने ॥ तृप्लवनतरण यो : विपूर्वः । भावेल्युट् ॥

वितर्क : । पुं॰ ऊहे ॥ संशये ॥ विप रीततर्के ॥ वितर्कणम् । तर्कभा षायांचुरादी । भावेघञ् । ज्ञानसू चवी ॥

वितर्कणम् । न॰ वितर्के ॥ तर्क॰ । ल्युट् ॥

वितर्द्दि : । स्त्री॰ वेदिकायाम् ॥ वि गतार्द्दिःहिंसाऽस्याः । तर्द्दहिंसाया म् । सर्वधातुभ्यइन्नितीन् ॥

वितर्द्दिका । स्त्री॰ वेदिकायाम् ॥ स्वार्थेक : ॥

वितर्द्दी । स्त्री॰ वेदिकायाम् ॥ कृदि कारादितिङीष् ॥

वितलम् । न॰ पातालप्रभेदे ॥

वितस्ता । स्त्री॰ नदीविशेषे ॥ तीर्थ विशेषे ॥ काश्मीरेवितस्ताख्यनाग सद्नमस्ति ॥

वितस्ति : । पुं॰ स्त्री॰कनिष्ठयासह वितताङ्गुष्ठे । द्वादशाङ्गुलपरिमा णे ॥ वितस्यति॰वितस्यतेवा । तसु उपक्षये । वीतसेरितिति : ॥

वितान : । पुं॰ न॰यज्ञे ॥ क्रतुकर्म णि । गार्हपत्यकुण्डस्य गामन्नोना माग्वनीयदक्षिणाग्निकुण्डयोर्विस्ता रे ॥ चाट्वी । उल्लोचे चन्द्रातपे ॥ विस्तारे ॥ न॰वृत्तविशेषे ॥ अवसरे त्रि॰मन्दे । तुच्छे ॥ शून्ये ॥ म न्दे ॥ विततनम्॰वितन्यतेवा । तनुविस्तारे । घञ् ॥

वितानक : । पुं॰ माडवृक्षे ॥ पुं॰न॰ चन्द्रातपे ॥

वितानतलिका । स्त्री॰ पटमण्डपर ज्वौ ॥

वितानमूलकम् । न॰ उशीरे ॥

वितायमान : । त्रि॰ वितन्यमाने । वि स्तीर्यमाणे ॥ वितनोति : कर्मणि लट: शानजादेशः । तनोतेर्यक्वीति॰ धा॰ आकारादेश : ॥ विटङ्किते । अखण्डकृते ॥

वितिष्ठमान : । त्रि॰ अवतिष्ठमाने ॥ समवप्रविभ्यःस्थ इत्यात्मनेपदम् ॥

न्दरि । दर्पणंटहस्तयासासिविशिष्टं
कार्यमस्तिमे । विदारदेहिसमौख्या
घगसांप्राणवलभे ॥ इतिब्रह्मवैवर्त्ते
श्रीराधांप्रतिश्रीकृष्णवाक्यम् ॥

विदार : । पुं॰ जलोच्छासे॰ चाजौ
। युधि ॥ दारणे ॥ विदार्यते । दृ॰
। कर्म्मणिघञ् ॥

विदारक : । पुं॰ शुष्कनद्यादौवार्य्यर्थक्ष
तगर्त्ते । कूपके ॥ नद्यादौस्रोतोद्
धकारिपितृशिलादौ । कूपके ॥
पाशायोगान्तरे ॥ यथा । मार्गेश :
शनिसंयुक्त : सप्तमे ऽष्टमगोऽथवा
॥ विदारकमिमंमन्ये प्राहु : पक्षीवि
नाशनम् ॥ पुनश्च । मार्गे प्रातृतस्त
सेभानु : पञ्चमेअष्टमेश्वर : । विदा
रकाख्यएवासौभार्य्यामरिष्यमनयेत्
॥ त॰ भद्रबाहु ॥ विदारयति । दृ वि
दारणे । णिच् । णाण्वलात्कर्म्म
णिण्वुल् ॥ यद्वा । विदार्यते । क
र्म्मणिघञ् ॥ ततस्तितोविदार : ।
स्वार्थे क : ॥ त्रि॰ विदारणकर्त्त
रि ॥ विदृणाति । दृ॰ । ण्वुल् ॥

विदारकसमाख्य : । पुं॰ याधायांनि
विष्टयोगान्तरे ॥ यथा । मार्गेशाच्च
यगोनीचयुक्तश्चेच्छनैश्चर : । विदा
रकसमाख्योऽयंयातु : पत्नीनिहन्तिवै
॥ विदारकेपसमाख्यायस्य : ॥

विदारण : । पुं॰ कर्णिकारवृक्षे ॥
न॰ विडम्बे । विडम्बने ॥ भेदे ॥
भेदने ॥ पुं॰ स्त्री॰ रणे । सम्परा
ये । समीके ॥ विदार्यतेऽनेन दृ॰
। ण्यन्त : । ल्युट् ॥ विदारय
तिवा ॥

विदारिका । स्त्री॰ शालपर्ण्याम् ॥
विदार्य्यर्थे ॥ विदार्येव । स्वार्थे क ॥

विदारिगन्धा । स्त्री॰ अंशुमत्याम् ।
शालपर्ण्याम् ॥ विदार्या: गन्ध. वि
दारिगन्ध : । सोऽपीरितिह्रस्व : ।
सोऽस्त्यस्या : ॥

विदारिणी । स्त्री॰ काश्मर्य्याम् ॥

विदारित : । त्रि॰ भेदिते ॥ विदार्य्य
तेस्म । दृ॰ । ण्यन्त : । क्त : ॥

विदारी । त्रि॰ विदारणकर्त्तरि ॥
विपूर्वाद्दृणाते: कर्त्तरिणिनि : ॥

विदारी । स्त्री॰ शालपर्ण्याम् । अष्टा
दशप्रकारकण्ठरोगान्तर्गतरोगवि
शेषे ॥ यथा । सदाहतोदश्वयथुंसु
ताम्रमन्तर्गलेपूतिविशीर्णमांसम् ।
पित्तेनविद्याद्वदनेविदारींपार्श्वेविशे
षात्सतुयेनशेते ॥ सपुरुषोयेनपा
र्श्वेन॰ विशेषाद्बाहुल्येनशेते॰ त
स्मिन्पार्श्वेसाविदारीभवतीत्यर्थ :
। कुचु गन्धायाम् । पश्चात् भूकुष्मा
ण्डे ॥ विदारीक्षीरशुक्लेघ गन्धा
क्रोष्ट्रीचेत्यमर : ॥ अस्या गुणास्तु ।
विदारीमधुरास्निग्धाबृंहणीस्तन्यशु
क्रदा । शीतास्वर्य्यामूत्रलाचक्षीव
नीबलवर्णदा ॥ गुरु पित्तास्रपव

नदीकूलनिरसाकमीति । विदारय ति । दृ विदारणे ० ल्यन्त : । पचाद्यच् । गौरादि: । विदार्यां :कर्षमूलक० विदारी । अनुदात्तादेर्ञ्य: ०पुष्पमूलेषुबहुलमिति० लुपि० युक्तवद्भाव : ।

विदाल : । पुं० कच्छपादे । क्षवथासे ॥

विदाहि । न० परिणामेऽम्लपाकमुपयाति० दाहजनकद्रव्ये ॥ विदाहिद्रव्यमुद्गारमम्लं कुर्यात्तथातृषाम् । हृदिदाहञ्चजनयेत्पाकंगच्छतिचचिरात् ॥

विदिक्चक्र : । पुं० षट्विदाडगवक्षिणि

विदित : । पुं० कवौ ॥ त्रि० बुधिते । अवगते । ज्ञाते । विदिक्रिययाप्रियमैनामे । विदिक्रियाकर्मभूते । यथा । तस्मिन्नब्रह्मविदिविसेनिपतनमभिभवेदिष्टविदितम् । श्वाश्वमुदिविदितावाघटकर्यादा-ययाऽवगम्यन्ते ॥ ७५ । श्रुते । प्रार्थिते ॥ प्रतिज्ञानावगते ॥ अभ्युपगते ॥ व्याहृते ॥विज्ञातेऽस्मा । विदज्ञाने । क्त : । यस्यविभाषेतीट् ॥ विदितंवेदनमस्यास्तीत्य । अर्शआद्यच् ॥

विदिश् । स्त्री० अपदिशं । अपदिशे । दिशोर्मध्ये । अग्निनिर्ऋतिवायव्यैशानकोणचतुष्टये ॥ दिग्भ्यां विनिर्गता० प्रान्तादिविदिक् ॥

विदिशा । स्त्री० नगरीविशेषे ॥

विदीर्ण : । त्रि० क्षतविदारणे । चीरा० फाडा इ० भा० ॥ दृ० । कर्मणि क्त : । ऋदुपधात्० रदा : रदाभ्यामितिनत्वम् । णत्वम् ॥

विदु : । पुं० हस्तिकुम्भयोर्मध्यभागे ॥ कुम्भौतुपिण्डौशिरसस्तयोर्मध्ये विदु : पुमान् ॥ वेत्तिसंज्ञामनयासेन । विद० । बाहुलकात्कु : ।

विदुर : । पुं० नागरे । धीरे । धृतराष्ट्रानुजे । कौरवपाण्डवमन्त्रिणि ॥ त्रि० ज्ञानशीले ॥ वेदनशील : । विदिभिदिच्छिदे : कुरच् ॥

विदुल : । पुं० अम्लवेतसे ॥ वेतसे ॥ गन्धरसे । बोले । वेत्तिविद्यते वा । बाहुलकाद्दुलच्० गुणाभावश्च ॥ जलवेतसे ।

विदुषी । स्त्री० पण्डितायांनार्याम् । वेत्ति । विदे : शतुर्वसु : । उगितश्चेतिङीप् ॥

विदुष्मती । स्त्री० पण्डितपत्न्यांयु- यांग् ॥

विदून : । त्रि० परितप्ते ॥ विदूयते स्म । टुदुउपतापे । क्त : । ल्वादिभ्यइतिनिष्ठानत्वम् ॥ विशेषेणदूनेवा ॥

विदरम् । न० देशविशेषे । वाल्हा

शे ॥ वाणवाव्याद्रेः समीपवर्त्ति नगरे ॥ त्रि० अतिदूरस्थदेशादौ । विप्रकृष्टे ॥

विदूरजम् । न० वैदूर्यमणौ ॥

विदूरथः । पुं० राजविशेषे ॥

विदूरभूमिः । स्त्री० विदूरदेशे ॥

विदूराद्रिः । पुं० रोहणपर्वते ॥

विदूषकः । पुं० क्रीडनीयकपात्रे । पिङ्गे । विटे । व्यलीके । कामकेलौ । चाटुवटौ । वासन्तिके । वैहासिके । प्रहासिनि । परनिन्दाकरे । खले । अभीरौ । सूचके । वाण्टवी । परद्वेषिणि ॥ नायकविशेषे ॥

विदेशः । पुं० परदेशे । कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥

विदेहः । पुं० जनकान्वयभूमिपे । मैथिले ॥ विदेहाः पुं० भूम्नि । देशविशेषे । तीरभुक्तौ । तिरहुत इ० भा० प्र० ॥ यथा । गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे । विदेहभूः समाख्याता तीरभुक्त्यभिधः स तु ॥ त्रि० कायशून्ये । निर्देहे ॥

विदेहमुक्तिः । स्त्री० मुक्तिविशेषे ॥ सा यथा । ततः कालवशादेव प्रारब्धे तु क्षयं गते । वैदेहीमामकीमुक्तिं याति नास्त्यत्र संशय इति ॥ स तु जीवन्मुक्त्यनन्तरम् ॥

विदेहा । स्त्री० मिथिलायाम् ॥

विद्धः । त्रि० वेधिते । कृतच्छिद्रे ॥ क्षिप्ते । सदृशे । बाधिते । ताडिते ॥ विध्यते स्म । व्यधताडने । क्तः । ग्रहिज्येति सम्प्रसारणम् ॥

विद्धकर्णः । पुं० विद्धकर्णाम् ॥ त्रि० कृतकर्णवेधे ॥ विद्धौ कर्णौ यस्य ॥

विद्धकर्णा । ) विद्धकर्णिका । ) स्त्री० विद्धकर्णाम् ॥

विद्धकर्णी । स्त्री० पाठायाम् । अम्बष्ठायाम् ॥ विद्धौ कर्णौ यया । यस्या वा । द्व्यर्थे ङीप् ॥

विध्यर्थः । पुं० विधिफले ॥ इति साध्यत्वमर्थहेतुत्वमनर्थहेतुत्वञ्चेति तार्किकाणां दर्शनम् ॥ भाट्टमते विध्यर्थस्तु श्येनफलस्याभिचारस्यानर्थहेतुत्वादधर्मत्वम् । श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव । अर्थपदव्याख्यानं तु फलस्य मरणादेर्निषिद्धत्वादिति । फलतोऽनर्थहेतुत्वेन तु हिंसांशेनाधर्मत्वं न व्यवहारः । तदुक्तम् । फलतोऽपि यत् कर्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात् तद्धर्म इति कथ्यते ॥

विध्वंसः । पुं० विनाशे ॥ विधि

टोध्वंस : ॥

विद्यमान : । त्रि॰ वर्त्तमाने ॥

विद्या । स्त्री॰ उमायाम् । शिवायाम्
। दुर्गायाम् ॥ मन्त्ररूपायाम् । दे
वताज्ञाने । उपासनायाम् । विज्ञा
ने ॥ श्रेयोविषयायाम् ब्रह्मविद्या
याम् ॥ अनाहतसंविदाद्यात्मापञ्च
र्यान्तब्रह्माकारान्त : करणवृत्तौ ॥ आ
त्मसाक्षात्कारे ॥ वेदार्थपरिज्ञाने ॥
शास्त्रे ॥ आन्वीक्षिकीत्रयीवार्त्ताद
ण्डाख्यासुचतसृषु ॥ यथा । आन्वी
क्षिकीत्रयीवार्त्ता दण्डनीतिश्चपार्थि
व: । तद्विधैस्तत्क्रियोपेतैश्चिन्तयेद्वि
नयान्वित : ॥ आन्वीक्षिक्यात्मवि
ज्ञानं॰धर्माधर्मौत्रयीस्थितौ । अर्था
नर्थौतुवार्त्तायांदण्डनीत्यांनयानयौ
॥ विद्याचतस्रएवैतायोगक्षेमायदे
हिनाम् । विद्याविनीतोन्नृपतिर्न
कृच्छ्रं व्यवसीदति ॥ इति ॥ पुराणा
दिचतुर्दशसु ॥ यथा । पुराणन्याय
मीमांसाधर्मशास्त्राङ्गमिश्रिताः । वे
दा : स्थानानिविद्यानांधर्मस्यच
तुर्दश ॥ इति ॥ अष्टादशविद्यासु
॥ यथोक्तं विष्णुपुराणे । अङ्गानिवे
दाश्चत्वारोमीमांसान्यायविस्तर : ।
धर्मशास्त्रंपुराणञ्चविद्याह्येताश्चतु
र्दश । आयुर्वेदोधनुर्वेदोगान्धर्वश्चे
तितेत्रय : । अर्थशास्त्रं चतुर्थञ्चवि
द्याह्यष्टादशैवता : ॥ इति ॥ तत्रा



ङ्गानिषट्॰यथा । शिक्षाकल्पोव्या
करणं निरुक्तं छन्दोज्योतिषमिति ।
ऋग्यजु : सामाथर्वाख्या : वेदाश्च
त्वारईरिता : । विचारोवेदवाक्या
नांमीमांसाप्रोच्यतेबुधै : ॥ साचपू
र्वोत्तरभेदाद्द्विधा । तथाहि । कर्म
प्रतिपादनपराजैमिनिप्रणीताद्वाद
शाध्यायी॰पूर्वमीमांसा । ब्रह्मप्रति
पादनपराव्यासप्रणीताचतुरध्यायी॰
उत्तरमीमांसेति । पदार्थनिर्णयप
रंतर्कशास्त्रं न्याय: ॰अत्रैववैशेषिक
नयस्यान्तर्भाव : । मन्वादिविष्णुहा
रीतादिप्रणीतंधर्मशास्त्रम् । कापिलपा
तञ्जलपाशुपतपाञ्चरात्रादीनामाग
मानामपिधर्मशास्त्रएवान्तर्भाव : ।
सर्गादिपञ्चलक्षणलक्षितम् ॰ब्राह्म
मार्कण्डेयभविष्यभागवतब्रह्मवैवर्त्त
ब्रह्माण्डब्रह्मवैवर्त्तवायुवामनविष्णुवरा
हाग्निनारदीयपद्मलिङ्गगरुडकूर्मस्क
न्दभेदादष्टादशविधं पुराणम् । तदु
क्तम् । मद्वयंभद्वयञ्चैव॰ब्रत्रयं वचतु
ष्टयम् । नालिपाग्निकूस्कानिपुराणा
निविदुर्बुधा : ॥ उपपुराणानामप्य
त्रैवान्तर्भाव : । रोगोपशमपूर्वका
नन्दफलकोऽष्टस्थानसंयुतआयुर्वे
द : । शस्त्रास्त्रप्रयोगोपसंहारप्रति
पादकमन्त्रसहित : पादचतुष्टयात्म
कोधनुर्वेद: । षड्जादिस्वरतानपरि
च्छेदप्रयुक्तावधानेपृथक्षड्जादि

एतानविभाज्यतत्प्रतिग्रहादिनाल ब्धम् । वादादिलब्धस्यार्थमाह० तथे ति । तथा दूषैः शास्त्रज्ञानविवादे० अन्यथाऽपि यत्कुत्रचिदन्योन्यज्ञान- विवादे० निर्जित्यलब्धम्० नि र्जित्य० पक्षकोटिव्यवस्थापनेन वि वादमपनीय० लब्धम्० वादिपवि तंराज्ञावाप्रसादद्दत्तमित्यर्थः । प्रा ध्ययनादित्यस्याचष्टे० तथेति० स चैकस्मिन्देये बहूनामुपगते० येन प्रकृष्टमधीत्य० यल्लब्धम् । शिष्ये ष्वपीत्यस्यार्थमाह० तथेति० तथा शिल्पादिविद्यया० चित्रकारसुवर्ण कारादिभिर्यल्लब्धम्० शिल्पगुणेन यदधिकंलब्धम् । तथा द्यूतेनापि परंनिर्जित्यपणलब्धं० तत्सर्वंविद्या धनमविभाज्यमितरैरित्यर्थः । त स्मादन्यथापि विद्यालब्धमर्श- भाक्षेवतन्नेतरेषामिति० प्रदर्शना र्थमुक्तंकात्यायनेनविस्तारितमितिदा- यभागः ॥ अथ नारदः । कुटुम्बं- विभृयाद्भ्रातुर्योविद्यामधिगच्छतः । भागंविद्याधनात्तस्मात्समलभे ताश्रुतोऽपिसन्निति ॥ विभृयादित्य स्य वचननिर्देशान्नपक्षः । यदिवि द्यामस्यस्यातिभ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीरायासाभ्यांसं- वर्धयति० तदा तद्विद्यार्जितधने तस्याधिकारः० अश्रुतोऽपि मूर्खः ॥

विद्याधरः । पुं० देवयोनिविशेषे । जीमूतवाहनपुष्पदन्तादौ० कामरू पिणि० खेचरे ॥ विद्यायागुटिका ञ्जनादिविषयविद्यायाः० धरोधारकः ॥ रतिबन्धविशेषे ॥ यथा । नारीज ङ्घायुगंधृत्वाकराभ्यांताडयेत्पुनः । कामयेन्निर्भयंकामीबन्धोविद्याधरो मतः ॥ शब्दविशेषे ॥ यथा ॥

विद्याधरयन्त्रम् । न० कुमरयन्त्रे ॥

विद्याधारः । पुं० वर्णवृत्तान्तरे ॥ यथा । नागाधीशैर्नीतं वृत्तं विद्या धारम्० वह्निः कर्णैः शेषैः पूर्णैर्भू मौसारम् । सादस्मिन्निश्रामौवेदे र्वेदैर्वेदैः० कृत्वायस्मात्पूर्वैर्धीरैः की र्त्यायुक्तः ॥ यथा । मन्दोपादाम्भो जन्निर्व्यसीतागर्तुः कृत्वासिन्धौ सेतुंरक्षोनाथंहत्वा । पौलस्त्याप्नी श्वासाप्राप्तं राज्यंधातुः सौर्यैः स र्वैर्वीरैः सार्द्धनार्थयातः ॥ वि द्यां धरति । धृञ्० । कर्म ण्यण् ॥

विद्याधिकारी । त्रि० उपनिषन्निषेव णेनाऽसौ ॥ विद्यायाः ब्रह्मविद्या याः अधिकारी ॥ सद्विविधः० कृतोपास्तिरकृतोपास्तिश्च । तत्रो पास्तिमाधात्कारपर्यन्तामुपासनां कृत्वायोज्ञानेप्रवर्त्ततेसमुख्योविद्या धिकारी । इदानीन्तनस्तुप्रायेण कृतोपासनएवोत्सुक्यमात्रात्सहसा

विद्यायांप्रवर्त्तितेसतुगौणोधिकारी। तस्यज्ञानस्यसत्वात्प्रदेशप्रदीपवत्तु च्छत्वानिवर्त्तनात् । ननु सर्वेषाम पि विदुषामात्मनोनित्यप्राप्तिरूपो मुख्याधिकारः किन्नस्यात्विशेषा द्विद्यानिवृत्ते रितिचेत्। श्रृणु। स्वायम्भावः । यस्तु पाश्वदेवतासा साक्षात्कारपर्यन्तं सगुणोपासनं वि धायविद्यायांप्रवृत्तस्तस्यविचारेणज्ञा नोत्पत्तावपि बाधाभावात्। आत्मयो निंष्प्राप्तैव । यः पुनरुपासनमकृ त्वाश्रवणाद्यनुष्ठायतत्त्वं निश्चिनोति तस्य चित्तवशीकरणाभावेपि चिरं पर कत्वात्तस्यास्तिनियमविधिः । नच तत्त्वज्ञानिनांज्ञानस्यनष्टत्वादिविवे चनीयमितिवाच्यम्। वशीकरणा भावे। शास्त्रेष्वनर्थोत्पत्परमार्थं बुद्धिरि त्यत्रापिपरमार्थंरूपज्ञानाश्रितदेहस्य वैत्वज्ञाननाशायोगात् । अन्यथा विद्वान्विषुपास्तिविधीनामैकान्त्यद्वा ताऽद्वितीयब्रह्मपरत्वंनस्यात् । अ तस्तत्प्रांशुरिप्रसिद्धप्रणवोच्चारणपूर्व कमप्रतियत्नसाक्षात्कारायनिरन्तरं निर्गुणब्रह्मभावनाकार्या । अतएव शास्त्रे। विदुषोविधिर्नास्तीत्युक्त्वा। पुनर्विद्वानत्रवहिर्धिमर्दतीतिब्रह्म भिद्याविधीयते। इत्यादावपिनविरु ध्यते । अधिकारिभेदेनव्यवस्थास म्भवात् ॥

विद्यानिधिः । पुं। विद्यासम्प्रदाय प्रवर्त्तके ॥

विद्यानैपुण्यकामः । त्रि। विद्याति शयमात्रार्थिनि ॥

विद्याप्रयोजनम् । न। आत्मज्ञानसं सारनिवृत्तीमक्षप्राप्तिलक्षणायाम् ॥ विद्यायाः प्रयोजनम् ॥

विद्याभीप्सी । त्रि। विद्यार्थिनि ॥

विद्यारम्भः । पुं। प्राप्तेतुपञ्चमेवर्षे विद्यारम्भञ्चकारयेदितिवचनबोधि तेविद्यायाः प्रारम्भे ॥

विद्यार्थी । त्रि। विद्याभीप्सिनि ॥ विद्यैवार्थः सोस्यास्तीति। इ- नि ॥

विद्यावान् । त्रि। विद्याविशिष्टे ॥ पण्डिते ॥ विद्यास्त्यस्य । म- तुप् ॥

विद्याविषयः । पुं। परब्रह्मणि। प्र पञ्चात्मभूते ॥ विद्यायाः विष यः ॥

विद्युज्जिह्वः । पुं। राक्षसविशेषे ॥ त्रि। तडिद्वासजिह्वे ॥

विद्युज्ज्वाला । स्त्री। कलिकारीवृ- क्षे ॥ तडित्प्रभायाम् ॥

विद्युत् । स्त्री। मेघे गुहस्थे। दीर्घाका रे। ज्योतिषि । तडिति । सौदा मिन्याम् । चञ्चलायाम् ॥ साचतु र्विधायथा । याताधक्कपिलाविद्युदा तपायातिलोहिता । पीतावर्षायवि

तत्र तदुद्देशेन गुणमात्रं विधत्ते । यथा दध्ना जुहोतीत्यत्र• होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वात्तद्धोमोद्देशेन• दधिमात्रविधानं• दध्ना होमं भावयेदिति । यत्तूभयमप्राप्तं •तत्र विशिष्टं विधत्ते । यथा• सोमेन यजेतेत्यत्र• सोमयागयोरप्राप्तत्वात्• सोमविशिष्टयागविधानम् । सोमपदेन त्वर्थलक्षणया• सोमवता यागेनेष्टं भावयेदिति• वाक्यार्थबोध : । नचोभयविधाने वाक्यभेद : •प्रत्येकमुभयस्याविधानात्• किन्तु• विशिष्टस्यैकस्य विधानात् ॥ विधिश्चतुर्विध : नियोगविधिरधिकारविधि : प्रयोगविधिश्चेति ।। विधिरत्यन्तमप्राप्तौ नियम : पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयते ॥ अप्राप्तप्रापको विधिरिति वैयाकरणा : ॥ न्यायमते विधिर्यथा । प्रवृत्ति : कृतिरेव प्रयत्ना वेत्यातीयतस्मात् । तज्ज्ञानविषयस्तस्य विधि• तज्ज्ञापको वा ॥ विधित्वन्यत्रात्• प्रवृत्तिहेतुमयते• सा• इच्छात : •चिकीर्षात : •चिकीर्षा च कृतिसाध्यत्वेष्टसाधनत्वज्ञानात्• तज्ज्ञानस्य विषय : कार्यत्वमिष्टसाधनत्वञ्च विधिरिति प्राचीनमतम् । स्वमतमाह• तज्ज्ञापको घयेति । इष्टसाधनत्वानुमापकप्राप्ताभिप्रायो विधिप्रत्ययार्थ :। इति

कुसुमाञ्जलि : ॥ विधिर्विधायकस्तदित्यायसूत्रम् । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधि : •अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि ॥ विधीयते नेन सुखदु : खे । कुधाज : •उपसर्गे घो : कि : • ॥ विधत्ते इति विधिर्वा । बाहुलकात् कर्त्तरि कि :॥ यद्वा । विधविधाने । इत् । इगुपधात् कित् इति कित्वात् गुण : ॥ विधानमनेन वा । पूर्ववत् कि : ॥

विधिगोचर :। त्रि• विधिनिरूपहरे ॥

विधिज्ञ :। त्रि• शास्त्रज्ञे ॥

विधित्समान :। त्रि• विधातुमिच्छति ॥

विधित्सा । स्त्री• विधातुमिच्छायाम् ॥ विधत्थाहिधाती : सनिमीमेत्यादिना• इत्वात् । अत्रलोपोऽभ्यासस्येत्यभ्यासलोप : तत :स्त्रियामित्यनुवृत्तौ• अप्रत्ययादिति अप्रत्यये टाप् ।

विधित्सित :। त्रि• विधातुमीप्सिते । कर्त्तुमिष्टे ॥

विधित्सु :। त्रि• विधातुमिच्छौ ॥ विपूर्वाद्दधाते : सन्नन्तादुप्रत्यय : ॥

विधिदर्शी । पुं• सदस्ये । न्यूनाधिकविचारकेऽष्टस्विविशेषे ॥ विधिं द्रष्टुं शीलमस्य । णिनि : ॥

विधिदृष्ट :। त्रि• यथाशास्त्रं निश्चिते ॥ विधिनादृष्ट : ।

विधवा । स्त्री॰ रण्डायाम् । मृतभर्तृकायाम् । विश्वस्तायाम् । पतिहीना च या नारी कामं सम्भवतु पुत्रिणी । धनधान्यसमृद्धापि विधवेत्युच्यते बुधैः । विगतो धवो भर्त्ता यस्याः ॥

विधा । स्त्री॰ गजाशने । समृद्धौ । ऋद्धौ । विधौ । विधानम् । डुधाञ् धारणपोषणयोः । आतङ्क तिकः ॥ वेतने ॥ कर्म्मणि विधौ । यन्तेऽनया ॥ प्रकारे ॥ वेधने ॥

विधाता । पुं॰ वेधसि । द्रुहिणे ॥ स्मरे । कामदेवे ॥ विशेषेण दधाति । डुधाञ्॰ । तृच् । विरन्योपसर्गनिग्रहश्च ॥ मदिरायामिति राजनिर्घण्टः ॥ ब्रह्मणि : पुंसि ॥ विधौ कर्म्मणि दर्शपूर्णमासादौ त्रि॰ तत्फलानि स्वर्गादीनि विदधाति सम्पत्ति । पूर्ववत्तृच् ॥

विधातृभूः । पुं॰ नारदमुनौ ॥

विधातायुः । पुं॰ सूर्यशोभायाम् ॥ ब्रह्मणो वयसि ॥

विधात्री । स्त्री॰ पिप्पल्याम् ॥ मद्ये ॥ विधानकर्त्र्याम् ॥

विधानम् । न॰ हस्तिकवले ॥ विधौ ॥ करणे ॥ अप्रवृत्तप्रवर्त्तने ॥ वेदे ॥ विधीयन्तेऽनेन कर्म्माण्यग्निष्टोमादीनि । डुधाञ्॰ । ल्युट् ॥

विधानगः । पुं॰ पण्डिते ॥ विधानं गायति । गै शब्दे । गाथोष्टक् ॥

विधानोक्तः । त्रि॰ विधिशास्त्रबोधिते ॥ विधानेनोक्तः ॥

विधाय । अ॰ कृत्वेत्यर्थे ॥

विधायकः । त्रि॰ विधेर्ज्ञापके । विधानस्य कर्त्तरि ॥ विपूर्वो धाञो ण्वुल् ॥

विधायी । त्रि॰ विधानकर्त्तरि ॥

विधावकः । पुं॰ विधरणे ॥

विधिः । पुं॰ ब्रह्मणि । परमेष्ठिनि । काले ॥ दैवे । नियतौ ॥ विधाने ॥ विधिवाक्ये ॥ प्रकारे ॥ कल्पे ॥ क्रमे ॥ नियोगे ॥ विष्णौ ॥ वैद्ये ॥ यागोपदेशग्रन्थे ॥ कर्म्मणि ॥ हिंसाद्यर्थे ॥ वेदे ॥ कुर्य्यात् क्रियेत कर्त्तव्यं भवेत् स्यादिति पञ्चमम् । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणमितिसिन्यायविद्याप्रकरणम् ॥ तथाच॰ मुक्ताय॰ सुहित्य॰ कर्म्मोपासनाज्ञानात्मककार्यस्य विधायको वेदो॰ विधिरिति फलितोऽर्थः ॥ अज्ञातज्ञापको वेदभागो॰ विधिरिति मीमांसकाः । स च तादृशप्रयोजनवदर्थविधानेनार्थवान्॰ यादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते । यथा॰ अग्निहोत्रं जुहुयात् स्वर्गकाम इति विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते॰ अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः । यत्र कर्म मानान्तरेणाप्राप्तं॰

विधिदेशक : । पुं॰ सदस्ये । विधिद र्शिनि ॥

विधियज्ञ : । पुं॰ विधितोऽनुष्ठीयमा नेवाग्नयज्ञे । दर्शपौर्णमासादौ ॥ विधिविषयोयज्ञ : ॥

विधिवत् । अ॰ यथाविधि । विध्यनु सारेणेत्यर्थे ॥

विधिविषय : । त्रि॰ विधिजन्यप्रय त्नभाव्ये । विधेर्विषय : ॥

विधिहीन : । त्रि॰ यथाशास्त्रबोधित विपरीते । विधिनाहीन : ॥

विधु : । पुं॰ सुधांशौ । सोमे । चन्द्रे ॥ कर्पूरे । अच्युते । हरौ । ब्रह्म णि ॥ राक्षसे । विध्यतिविरहिणम् । विध्यत्यसुरान्वा । व्यधताडने । पृभिदिव्यधिगृधिधृषिभ्य : कु : । ग्रहिज्येतिसम्प्रसारणम् ॥

विधुक्षय : । पुं॰ अमावास्यायाम् ॥

विधुत : । त्रि॰ त्यक्ते । निरस्ते ॥ क म्पिते ॥ विशेषेणधुत : ॥

विधुति : । स्त्री॰ कम्पने ॥

विधुन्तुद : । पुं॰ राहौ । सैंहिकेये । विधुंतुदति । तुद॰ । विध्वरुषोस्तु दइतिखश् । मुम् ॥

विधुपञ्जर : । पुं॰ खड्गे ॥

विधुप्रिया । स्त्री॰ चन्द्रपत्न्याम् ॥ दा क्षायिण्योविधुप्रिया : । इतिकोषा न्तरम् ॥

विधुरम् । न॰ प्रविश्लेषे । वैकल्ये त्रि॰ विकले । विगतधू : कार्यभा र : । ऋक्पूरित्यप् । धुरोविगतइ तिप्रादिसमासोवा । न॰ प्रत्यवाये ॥ कष्टे ॥

विधुरा । स्त्री॰ रसालायाम् । शु॰ मे॰ ॥

विधुरित : । त्रि॰ विह्वलिते ॥

विधुवनम् । न॰ विधूनने । कम्पने ॥ धूविधूनने । ल्युट् । गाङ्कुटादि भ्योञ्णिन्ङित्वाद्गुणाभाव : ॥

विधूत : । त्रि॰ कम्पिते ॥ त्यक्ते ॥ वि धूयतेस्म । धूञ्कम्पने । क्त : । य स्विभाषेतिनेट् ॥

विधूननम् । न॰ कम्पने । विधुवने । धूञ्कम्पनेचुरादि : । ल्युट् । धू ञ्प्रीञोर्नुग्वक्तव्य : । पक्षादीनां स्वगात्रकम्पने ॥

विधूनित : । त्रि॰ व्याहते ॥ कम्पिते ॥ धूञोण्यन्तात्कर्मणि क्त : । धूञ् प्रीञोरितिनुगागम : ॥

विधूम्र : । पुं॰ धूसरे । कृष्णरक्तमिश्रि तवर्णे ॥ त्रि॰ तद्वति ॥

विधृत : । त्रि॰ विधारिते ॥ विशेषेण धृते ॥ विरुद्धे ॥

विधृति : । स्त्री॰ विधरणे ॥

विधेय : । पुं॰ मन्त्रे ॥ विधीयतेवि नियुज्यतेसाध्यवाक्येनकर्माङ्गत्वे नेतिहरिहरभाष्यम् ॥ त्रि॰ विनय ग्राहिणि । वचनेस्थिते । विधित्व न्यायोपविषये । यथा । अनुवाद्यम

विनयस्थः । त्रि० विधेये । आश्रवे । वचनेस्थिते । आज्ञाकारिणि ॥ विनयेतिष्ठति । स्था० । कः ॥

विनया । स्त्री० बलौषधौ । वाट्यालके ॥

विनयी । त्रि० विनयान्विते ॥ विनयोऽस्यास्ति । इनिः ॥

विनर्द्दः । पुं० ऋषभकूजितसमेश्वर विशेषे ॥ विशिष्टो नर्द्दः ॥

विनशनम् । न० तीर्थविशेषे । कुरुक्षेत्रे । सरस्वत्याः प्रथमादर्शनस्थले ॥ विनाशे ॥

विनष्टः । त्रि० अन्तर्हिते ॥ विनश्यति स्म । अदर्शने । गत्यर्थेति क्तः ॥ छिन्ने । भिन्ने । नाशाश्रये । ध्वंस विशिष्टे । पतिते ॥

विनष्टिः । स्त्री० विनाशे ॥ नशेर्भावे क्तिन् ॥

विनसः । त्रि० विगतनासिके ॥

विना । अ० वर्जने । पृथक् । अन्तरेण । ऋते । हिरुक् । विनञ्भ्यां नानाञौ नसहेति० निषेधार्थाद्विशब्दा ना ॥

विनाकृतः । त्रि० विरहिते । भिन्ने ॥ दू० त्रि० ॥

विनाभः । पुं० शरीरस्तनस्तनायाम् । व्ययथावपृथग्भावे ॥ विनमनम् । भाव । घञ् ।

विनामकः । पुं० अधिमासे ॥

विनायकः । पुं० विघ्नराजे । गणाधिपे । हेरम्बे ॥ तार्क्ष्ये ॥ विघ्ने ॥ ॥ जिने ॥ गुरौ ॥ विनयति हितमनुशास्ति । वि+नी० । ण्वुल् ॥ विशिष्टो नायकइतिवा ॥ विगतो नायको नियन्ताऽस्येतिवा ॥ त्रि० नायकवर्जिते ॥

विनायिका । स्त्री० तार्क्ष्यपत्न्याम् ॥

विनारुहा । स्त्री० विषपर्णिकायाम् ॥

विनाशः । पुं० अदर्शने । विनष्टे ॥ ध्वंसे ॥ विनशनम् । अदर्शने । घञ् ॥

विनाशकः । त्रि० विनाशकर्त्तरि ॥ विनाशयति तत्त्वोशादिः । णिच्० । विपूर्वोऽहेतुमण्ण्यन्तः । निन्दहिंसक्लिशखादविनाशपरिक्षिपेत्यादि नावुञ् ॥

विनाशी । त्रि० अनित्ये । देशकालत स्त्वात्मकविविधपरिच्छेदवति ॥ विनष्टुं शीलमस्य । णिनिः ॥ विनाशवार्थागीति ॥

विनाशोन्मुखः । त्रि० पक्वे ॥ नाशोद्यते । विनशनं विनाशः । भावे घञ् । उद्गतंमुखमारम्भोऽस्य । विनाशेउन्मुखः ॥

विनासकः । त्रि० अनासिके । गतनासिके ॥ विगतानासायस्य सः ॥

विनाहः । पुं० कूपाननपिधानके ॥ आच्छादने । हलश्चेति घञ् ॥

विनिगमक : । त्रि॰ विशेषेणनितरां बोधके । ज्ञापके ॥

विनिगमना । स्त्री॰ एकतरपक्षपातिन्यां युक्तौ । यैकस्मिन्नेवसुन्येक स्मिन्नवधारणशक्तौ ॥

विनिद्र : । त्रि॰ उन्मीलिते । विकसिते । स्फुटिते । निद्रारहिते ॥ विगतानिद्राऽस्य ॥

विनिद्रत्वम् । न॰ निद्रारहित्ये ॥ प्रबोधे ॥

विनिनीषु : । त्रि॰ विनेतुमिच्छौ ॥

विनिपात : । पुं॰ निपाते । अवपाते । देवादिव्यसने । दैविकानर्थे ॥ विशिष्टोनिपात : ॥ अवसाने ॥

विनिमय : । पुं॰ परिदाने । प्रतिदाने ॥ व्यतिहारे ॥ व्यत्यये । अन्यस्मिन्नन्यावभासे ॥ बन्धके ॥ यथा । विक्रयैर्विनिमयैर्दत्त्वागोमां सखादकः । व्रतं चान्द्रायणं कुर्याद्वि साधाद्यधीभवेत् ॥ इति गोभिलवचनम् ॥ विशेषेणनिर्णीयते । मीञ् हिंसायाम् । एरच् ॥

विनियोग : । पुं॰ विनियोजने ॥ यस्मिन्नद्भुतकर्मण्यं विनियोग : प्रकीर्तित : ॥ विशिष्टोनियोग : ॥ विभजने । विनियोगोऽर्पणे फले॰ इ॰ हेमचन्द्र : ॥

विनियोगविधि : । पुं॰ अङ्गप्रधानसम्बन्धबोधकेविधौ ॥ यथा । दध्ना जुहोतीति । तत्तृतीयाप्रतिपन्नाङ्ग भावस्य दध्नोहोमसम्बन्धं विधत्ते॰ दध्ना होमं भावयेदिति । गुणविधेश्च सम्बन्धस्य साध्यत्वे नैवान्वय : । आश्रिताश्रयत्वे नापि । यथा दध्नेन्द्रियकामस्य जुहुयादित्यत्र॰ दधिवारणे इन्द्रियं भावयेत् । तत्र विनियोगमिथ्याङ्गोपाया॰ सन्निधिप्राप्त होम आश्रयत्वे नान्वेति । एतच्च विधे : सहकारिभूतानि॰ श्रुतिलिङ्ग वाक्यप्रकरणस्थानसमाख्यारूपाणि षट्प्रमाणानि । एतत्सहकृतेनानेन विधिनाङ्गत्वं परोद्देश्यसाध्यप्रवृत्तिसाध्यस्वरूपं पाराथ्यापरपर्याय ज्ञाप्यते ॥

विनियोजित : । त्रि॰ प्रवर्त्तिते । विनियुक्ते ॥

विनिर्णीत : । त्रि॰ विचार्य स्थापिते ॥ विशेषेणनिर्णीत : ॥

विनिर्देश्य : । त्रि॰ वक्तव्ये ॥

विनिर्धूत : । त्रि॰ दूरतस्स्थापिते ॥ विशेषेणनितरांधूयते ॥ समुन्मूलिते ॥ परित्यक्ते ॥

विनिर्भय : । पुं॰ साध्यगणविशेषे । त्रि॰ भयरहिते ॥

विनिर्मुक्त : । त्रि॰ वियुक्ते ॥

विनिर्मोक : । पुं॰ विनिर्मुक्तौ ॥

विनिर्वृत्त : । त्रि॰ निष्पन्ने । समाप्ते ॥

विनिवृत्तः । मवृत्तविशिष्टे । निरस्ते । शान्ते ॥
विनिवृत्तकामः । त्रि॰ विवेकवैराग्यद्वारात्यक्तसर्वकर्मणि । विशेषेणनिवृत्तः कामोऽस्य ॥
विनिवेशितः । त्रि॰ प्रतिष्ठापिते । स्थापिते ॥
विनिश्चितः । त्रि॰ प्रमाणतोनिर्णीते ॥
विनिष्कलः । त्रि॰ निरवयवे ॥ विशेषनिर्गताः कलाः यस्मात् ॥
विनिहतः । त्रि॰ विनष्टे ॥
विनीतः । पुं॰ सुवहाश्वे । साधुवाणिजि । वणिजि ॥ दमनकवृक्षे । शिक्षितसभ्यादौ ॥ त्रि॰ जितेन्द्रिये । अपनीते । हृते । निभृते । विनयान्विते । अनुद्धते । नम्रे । शिक्षिते ॥ क्षिप्ते । कृतदण्डे ॥ व्यनायि॰ विनीयतेस्मया । णीञ् प्रापणे । क्तः ॥
विनीतकः । पुं॰ दमनकवृक्षे ॥ पुं॰ न॰ वैनीतके । परम्पराबाहने ॥
विनीयः । पुं॰ पिष्टौषधिविशेषे । कल्के ॥ कपटे । विनीयतेसिद्धिं प्राप्यते । णीञ्॰ । विपूर्वाद्घ्न्येति क्यप् ॥ पा॰ ॥
विनीयमानः । त्रि॰ शिक्ष्यमाणे ॥
विनेता । पुं॰ देशके । नियामके ॥ राजनि ॥ हे॰ मे॰ ॥ विशिष्टोनेता ॥ दैशिके ॥ इ॰ ई॰ चन्द्रः ॥

विनेयः । त्रि॰ नेतव्ये ॥ विनेतुं योग्यः । णीञ्॰ । अचोयत् ॥ दण्ड्ये ॥
विनेयकः । पुं॰ आदेशके ॥ राज्ञि ॥
विनोक्तिः । स्त्री॰ अलङ्कारविशेषे ॥ यथा । विनोक्तिश्चेद्विनाकिञ्चित् प्रस्तुतंहीनमुच्यते । विद्याहृद्यापि सावद्याविनाविनयसम्पदम् । किञ्चित्॰ विनाप्रस्तुतं यद्यहीनं दुष्टं उच्यतेचेत्तदाविनोक्तिर्नामालङ्कारः कथ्यते । प्रकारान्तरमपि । तत्र किञ्चिद्विनारम्यं विनोक्तिः सापि कथ्यते । विनाखलैर्विभात्येषा राजेन्द्रभवतः सभा । तत्प्रस्तुतं किञ्चिद्विनारम्यञ्चेत्सापि विनोक्तिर्नामालङ्कारः कथ्यते ॥
विनोदः । पुं॰ क्रीडायाम् ॥ यथा । विनोदायचैतन्यमेकंविभज्यद्विधादेवि॰ स्त्रीस्वरूपेतिनाम्ना । शिवस्याशिवत्त्वमापादयन्तीपुनर्भावयन्तंशिवंभावयेति ॥ [illegible] ॥ चमत्कारविशेषे ॥ अपनोदे ॥ राजगृहविशेषे ॥ आलिङ्गनविशेषे ॥ तद्यथा । नायकोनायिकायाद्विचपार्श्वंवामपादंतस्यमध्यदेशे॰ स्वदक्षिणपादंवामपादंवा॰ नायिकामध्यदेशेनिधाय॰ वक्षसिवक्षः . ॰चोटेघोषंदद्याद्यदास्यात्तदितिकामशास्त्रम् ॥
विनोदितः । त्रि॰ अपनीते ॥ सन्ता

प्रविभीदे ॥ तारकादित्वादितच् ॥

बिन्दः । पुं॰ विजयाख्ये मुहूर्ते ॥ विन्दति । विद्लृ लाभे । अनुपसर्गाल्लिम्पविन्दधारीत्यादिना शः । शेमुचादीनामिति नुम् ॥

बिन्दुः । पुं॰ जलकणायाम् । विप्रुषि । पृषति ॥ दन्तक्षतान्तरे ॥ भ्रुवोर्मध्ये । रूपकार्थप्रकृतौ । लवे । अनुस्वारे ॥ नादोद्भवे ॥ त्रि॰ वेदितरि । ज्ञातरि । विज्ञानयोग्ये ॥ विन्दति॰ विदि अवयवे । बाहुलकात् उः । अवर्गीयादिः ॥ यथा । वित्तात्सप्तोत्तः । बिन्दुरिच्छुरितिसाधुः ॥ दातरि ॥ वेदितरि ॥

बिन्दुचित्रकः । पुं॰ मृगविशेषे ॥ बिन्दुभिश्चित्रः ॰स एव कः ॥

बिन्दुजालम् । न॰ बिन्दुजालके ॥

बिन्दुजालकम् । न॰ नागगजमुखादिस्थबिन्दुसमूहे । पद्मके ॥ बिन्दूनां जालकमिव ॥

बिन्दुतन्त्रः । पुं॰ शारिफलके । तुरङ्गके ॥

बिन्दुपत्रः । पुं॰ भूर्जवृक्षे ॥

बिन्दुरेखकः । पुं॰ पक्षिविशेषे ॥

बिन्दुसरः । न॰ हैमवते॰सरोविशेषे ॥ यथा । अथ उत्तरेण कैलासं शिवं सर्वौषधिं गिरिम् । गौरन्तु पर्वतश्रेष्ठं हरितालमयं प्रति ॥ हिरण्यशृङ्गः ॰सुमहान् दिव्यौषधमयो गिरिः । तस्य पादे महद्दिव्यं सरः काञ्चनसन्निभम् ॥ रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः । गङ्गार्थे स तु राजर्षिरुवास बहुलाः समाः ॥ दिवं यास्यन्ति मे पूर्वे गङ्गातोयपरिप्लुताः । तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता ॥ सोमपादात् प्रसूता सा सप्तधा प्रविभज्यते । यूपा मणिमयास्तत्र चितयश्च हिरण्मयाः । तत्रेष्ट्वा क्रतुभिः सिद्धः शक्रः सुरगणैः सह । दिव्यच्छायापथस्तत्र नक्षत्राणान्तु मण्डलम् ॥ दृश्यते भास्वरो रात्रौ देवी त्रिपथगा तु सा । अन्तरीक्षं दिवञ्चैव भावयित्वा भुवङ्गता । भवोत्तमाङ्गे पतिता संरुद्धा योगमायया । तस्या ये बिन्दवः केचित् क्रुद्धायाः पतिता भुवि ॥ कृतन्तु तैर्बिन्दुसरस्ततो बिन्दुसरः स्मृतम् । इति मात्स्ये १२१ अध्यायः ॥

विन्ध्यः । पुं॰ अचलविशेषे । विन्ध्याचले ॥ व्याधे ॥ विरुद्धं ध्यायति । ध्यै चिन्तायाम् । आतश्चोपसर्गे इति कः पृषोदरादिः ॥ यथा । विघूर्ण्यते । शिखरैर्दीप्तैर्यस्मात् । अगस्त्यभावित्वाद्यर्थः । भक्तगुप्तादिः । पयोष्ण्यादिर्वा । नर्मदा सुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः ॥

विन्ध्यकूटः । पुं॰ अगस्त्यमुनौ । विन्ध्याद्रिशृङ्गे ॥

। पादमेकमुरौकृत्वा द्वितीयस्कन्धसं स्थितम् । कामिन्याः कामयेत्का मौयन्थः स्याद्विपरीतकः ॥

विपरीतभावना । स्त्री॰ असस्मिंस्तद् बौ ॥ यथायाथसंसेतस्मातत्त्व हित्वा ऽन्यथात्वधीः । विपरीताभावना स्यात्पिशादावधिधीर्यथा ॥

विपरीता । स्त्री॰ कामुक्याम् ॥

विपर्णः । त्रि॰ पर्णरहिते ॥

विपर्णक : । पुं॰ पलाशवृक्षे ॥ त्रि॰ पत्ररहिते ॥

विपर्य्यय : । पुं॰ व्यतिक्रमे । व्यत्या से । विपर्यासे । व्यत्यये ॥ मिथ्या ज्ञाने । यथाशुक्तौ रजतमिति ॥ अन्यथाभावे । देहादिष्वात्माभि मानलक्षणे । यथार्थानिश्चये । अ तत्त्वज्ञाने ॥ विपर्ययाद्विष्यतेबन्धः । अविद्यास्मितारागद्वेषाभिनिवे शा : यथासङ्ख्यंतमोमोहमहामो हतामिस्रान्धतामिस्रसञ्ज्ञाः पञ्च विपर्ययभेदाभवन्ति ॥ लक्षणञ्चयथा । किञ्चित्सामान्यतोऽन्यत्रमतिरन्या विपर्ययः । किञ्चित्साधारण्यादन्य स्मिन्नन्यारोपोहि विपर्यय : । मरु मरीचिकास्विवजलारोपगति : । अ पिच । विपर्ययस्तमोवोनिर्मिथ्या रूपतयासच । सामान्यबाधकाभा सात्सन्त्यात्मे तिविनिश्चितः ॥ वि पर्ययस्यमिथ्यारूपत्वात्तम : प्रभ

वत्वम्॰ सचविपर्यय : साधारण्य मात्रप्रधनात्मकाशरूप : सत्त्वात्म कोविनिश्चित : ॥ विपर्ययणम् । इ ण्गतौ । एरच् ॥

विपर्य्यस्त : । त्रि॰ मिथ्याज्ञानविशि ष्टे ॥ विपरीते ॥

विपर्य्याय : । पुं॰ विपरीतमवने । अन्यथान्यरूपग्रहणे ॥

विपर्य्यास : । पुं॰ विपर्यये । व्यत्य ये । व्यतिक्रमे । अतस्मिंस्तद्बौ । अविवेके ॥ विपर्य्यसनम् । अ सु॰ । घञ् ॥

विपल्य : । त्रि॰ [illegible]

विपश्चित् । त्रि॰ [illegible] पण्डिते । [illegible] । मे धाविनि ॥ सर्वं [illegible] विपरिष्लवं [illegible] नि ॥ विप्रकृष्टं चिनोति॰ चेतति॰ चिन्तयतिवा । पृषोदरादि : ॥

विपाक : । पुं॰ पचने ॥ स्वादे ॥ कर्मणोविसदृशफले ॥ कर्मण : परिणामे । दुर्गतौ । जात्यायु र्भोगात्मकेकर्मफले ॥ पचनपा क : विशिष्टपाक : विरुद्ध : पा कोऽस्यवा ॥ विपच्यतेवा । घ ञ् ॥ विपाकस्तु यत्कर्मनतच्छ क्तिपण्डिता : ॥ जाठरेणा ग्निनायोगाद्यदुदेतिरसान्तरम् । रसानांपरिणामान्ते सविपाकइति

स्म तद्वतिसुश्रुत : ॥ अपिच । वि
ट : कटुकमधुरमम्लोऽम्लं पच्य
ते रस : । कटुतिक्तकषायाणांपा
क : स्यात्प्रायश : कटु : ॥ तथा
चवाग्भट : । त्रिधारसानांपाक :
स्यात्स्वाद्वम्लकटुकात्मक : । प्रा
य : पदेन• व्रीहि : स्वादुरम्लविपा
क : मिषाकषायामधुपाका । शु
ण्ठीकटुकमधुरपाकेत्यादि : ॥
विपाकानांगुणायथा । श्लेष्मलम
धुर : पाकोवातपित्तहरोमत : ।
अम्लस्तुकुरुतेपित्तंवातश्लेष्मगदा-
पह : ॥ कटु : करोतिपवनंवाफ
पित्तसमानयेत् । विज्ञेयएवरसतो
विपाकानांनिदर्शित : ॥

विपाकघ्नम् । न• नरके ॥

विपाट : । पुं• वाणे अस्त्रकण्टके
। शरे ॥ विपाटयति । पचाद्यच् ॥

विपाण्डु : । पुं• शुभ्रे ॥ अति
शुभ्रे ॥ त्रि• तद्वति ॥

विपादिका । स्त्री• । पादस्फोटे । वि
वाइ• इ• भा• ॥ प्रहेलिकायाम् ॥
वैपादिकंपादिवपादिस्फुटनंतीव्रवेद
नम् । कण्डूमद्भि : सरागैश्च ग
ण्डैरत्सक चितम् ॥ विपादिका
चोतस्यांफोदयेविसाधव : । अयंकु
ष्ठरोग : ॥

विपाट् । स्त्री• विपाशायाम् ॥ पा
शं विमोचयति । तस्यापपाशोऽस्या
दिना• पाशान्मोचनदतिविच् ।
क्विप्चेतिक्विप् ॥

विपाश : । त्रि• पाशरहिते ॥

विपाशा । स्त्री• नदीविशेषे । विपा
शि ॥ पाशं विमोचयति । तस्या
पपाशेऽस्यादिना• पाशान्मोचनदति
णिच् । तत : पचाद्यच् । पुत्र
शोकादेयगविपाशं बद्धाप्रविष्टं वशिष्ठं
पायच्छेदात्विपाशितवतीमिमुक्त
पाशंकृतवतीतिविपाशा । अस्या
जलस्यगुणायथा । शतद्रोर्विपा
शायश्च : सिन्धुनद्या : सुशीतंच
लघुस्वादुसर्वामयघ्नम् । जलं निर्मलं
दीपनंपाचनश्चप्रदत्तेबलंबुद्धिमेधा
युपश्च तिरावनिघण्टु : ॥

विपिनम् । न• अरण्ये । गहने ।
वनि ॥ वेपन्ते इव । टुवेपृकम्पने ।
वेपितुक्षोद्दूस्वं चेतिनन् ॥ विशेषे
णपियस्थगनो । पिनतो । बाहुल
कास्प्यच् ॥

विपिनतिलकम् । न• अतिशक्वरी
छन्द : प्रभेदे ॥ तल्लक्षणंयथा ।
विपिनतिलकंनसनरेफयुग्मं भवे
त् । यथा । विपिनतिलकं विकसि
तं सितागमेऽमधुरतमदैर्मधुकरै :
कलक्वणितम् । मलयपवनतारचित
लास्यमालोक्य नन्नसुवतिमिर्विह
रतिम्मसुन्दोहरि : ॥

विपीड : । त्रि• निर्बाधे ॥

विपुल : । पुं० मेरुपश्चिमभूधरे । मेरो : स्थैर्यार्थंविष्कम्भाः पूर्वादिषु चतुर्षु विष्कम्भशैलेषु प्रतीच्यां विपुलो नाम विष्कम्भशैलो नीलवर्णः पश्चात् तस्यत्वश्वत्थोऽनोच्छायोऽस्ति । यथोक्तम् सप्तत्योन्नतिमानश्वत्थपादपोऽस्ति ॥ सुमेरौ ॥ हिमाचले ॥ त्रि० पृथुले । विशाले ॥ अगाधे । इत्थियमयिमीरसराशीरशे । विपोलति । पुलमहत्त्वे । इगुपधेतिक ॥ विशिष्टपुलकैः

विपुलपुलिना । स्त्री० नद्याम् ॥

विपुलरस : । पुं० इक्षौ ॥

विपुला । स्त्री० वोध्याम् । क्षितौ ॥ आर्याप्रभेदे ॥ यथा । पथ्याविपुला चपलामुखचपलाजघनचपलाच । गीत्युपगीत्युद्गीतयआर्यागीतिश्च नवधार्या ॥ संलङ्घ्यगणत्रयमादिमं शकलयोर्द्वयोः भवतिपाद : । यस्यास्तांपिङ्गलनागोविपुलामितिसमाख्याति ॥ पुंसांकलिकालव्यालदष्टानांनास्त्यपरतिरस्मापि । वीर्यं विपुलामखेचेत्सादृशीविन्दास्यमज्योति : ।

विपुलांस : । त्रि० मांसलोन्नतभुजशिरस्के ॥

विपुलासना । स्त्री० गन्धकुमार्याम् ॥

विपूय : । पुं० रज्ज्वादिकरणाय शोधयितव्ये मुञ्जे ॥ विपूयते । पञ्पवने । विपूयविनीयेतिक्यप । मुञ्जे ॥ यथा । वसानां वल्कलैराद्यैर्विपूयैः कृतमेखलाम् । वामामक्षनमिल्लाभोंदेरिक नौमजिनाक्षरामितिभट्टि : ॥

विपोथित : । त्रि० आघातेनाघातिते । आमर्दिते ॥

विप्र : । पुं० ब्राह्मणे ॥ तथाच यथा । जन्मनाब्राह्मणोज्ञेय : संस्कारैर्द्विजउच्यते । विद्यायातिविप्रत्वं त्रिभिः श्रोत्रियलक्षणमिति मायश्चित्तविवेक : ॥ विशेषेण प्रातिपूरयतिपट् कर्माणि । प्रा पूर्तौ । आतश्चोपसर्गं इतिक : ॥ उप्यतेधर्मबीजमत्रवा । टुवप् ० ऋज्रेन्द्रे तिसाधु. ॥ विप्रतिषा ० विपतिषा । विपर्द्धे ॥ अश्वत्थे ॥

विप्रकर्ष : । पुं० विप्रेष्टि ॥ विप्रिष्ट : प्रकर्ष : ॥

विप्रकार : । पुं० अपकारे । निकारे ॥ विप्रकरणम् । क्षोभावेयञ् । तिरस्कारे ॥

विप्रकाष्ठम् । न० तूलवृक्षे ॥

विप्रकृत : । त्रि० तिरस्कृते । निकृते । यस्यापकार : कृतस्तस्मिन् ॥ विप्राकारि । क्त : ॥ विप्रियकृते ॥

विप्रकृति : । स्त्री० विप्रकारे ।

विप्रलब्धम् । न० मात्सर्यसमर्पणे ॥

विरहोविसम्वादोवेतिस्वामी ॥ रागिणोविच्छेदे ॥ द्युतिसुभूति: ॥
विप्रलब्ध: । त्रि॰ वञ्चिते ॥ विप्रलभ्यतेस्म । लुलभप्राप्तौ । क्त: ॥
विप्रलब्धा । स्त्री॰ स्त्रीयास्त्रिनायिकाभेदे ॥ सङ्केतनिकेतमेप्रियममवलोक्य समाकुलहृदयाविप्रलब्धेतिलक्षणम् ॥
विप्रलब्धा । त्रि॰ प्रतारके ॥
विप्रलम्भ: । पुं॰ विसंवादे । अङ्गीकृतासम्पादने ॥ वञ्चने ॥ वियोगे । विरहे । रागियोर्वियोजने ॥ विप्रियप्रलम्भनम् । लुलभप्राप्तौ । घञ् । उपसर्गादितिनुम् ॥ विप्रलम्भि: । समेचलघा ।
विप्रलम्भन: । पुं॰ मिथ्यावचने : मरणावस्थोक्ति । ठगाइ॰भा॰प्र॰ ॥
विप्रलाप: । पुं॰ विरोधोक्तौ । अन्योन्यविरुद्धवचने ॥ यथा॰एकोब्रूते॰आगताकाव्यागौतिअन्योब्रूतेनहीति । तथाश्रुङ्गाररसविवन्द: । यथा सन्मधु सरोजमवेतिवक्त्रमन्य: सुधाकिरणविम्बमदोऽस्तयास्या: । यूनोर्मुहुर्विवदतोरिवंनिशम्य : सिद्धान्तभन् मधुकरालिगतागतानोति ॥ विरुद्ध : प्रलाप: ॥ अनर्थकवाक्ये । अपार्थवचने ॥
विप्रलिप्सा । स्त्री॰ वञ्चनेच्छायाम् ॥
विप्रलिप्सु: । त्रि॰ वञ्चके ॥
विप्रलुम्पक: । त्रि॰ अन्यायेनधनग्राहिणि ॥
विप्रलोभी । पुं॰ अशोकपादपे । किङ्किराते ॥
विप्रवसित: । त्रि॰ कृतदूरदेशगमने ॥
विप्रश्निका । स्त्री॰ जनानांलक्षणादिनाशुभाशुभनिरूपिकायाम् । ईक्षणिकायाम् । दैवज्ञायाम् ॥ विविध: प्रश्नोऽस्या: । ठन् ॥
विप्रसृत: । त्रि॰ विक्षिप्ते ॥ विप्रसरतिस्म । सृगतौ । गत्यर्थेति क्त: ॥
विप्रिय: । पुं॰ अपराधे । आगसि । त्रि॰ अप्रिये ॥
विप्रियकृत् । त्रि॰ शठे ॥
विप्रुट् । स्त्री॰ विन्दौ । जलकणे ॥ प्रुपुटादि । सम्पदादित्वात्क्विप् । विगताप्रुटाप्रुट्दाहोऽस्मात् ॥
विप्लव: । पुं॰ डिम्बे । धाकडलुरटनादौ ॥ अशस्त्रकलहे ॥ विप्लवनम् । प्लुङ्गतौ । स्वदेशस्य परचक्रादिभये ॥ राष्ट्रादुपद्रवे ॥ नाशे ॥ सतिसम्प्लोवे ॥
विप्लाव: । पुं॰ अश्वस्यप्लुतगतौ ॥
विप्लुत: । त्रि॰ व्यसनार्ते । विह्वले । खण्डिते ॥ विप्लवनम् । प्लुङ् । क्त: ॥
विप्लुताक्ष: । त्रि॰ अश्रुपूर्णनयने ॥

विस्रुति : । स्त्री॰ स्वभावच्युतौ ॥
विस्रुष्ट : । त्रि॰ निर्दग्धे । विशेषे चास्रुष्ट : ॥
विफल : । त्रि॰ निरर्थके । मोघे ॥ विगतं फलं यस्य ॥
विफला । स्त्री॰ केतक्याम् ॥ कस्तु रीकायाम् ॥
विबध : । पुं॰ पर्य्याहारे । उभयतो-बद्धशिक्यस्कन्धवाह्यकाष्ठे ॥ यष्टि नि ॥ भारे । विगतो बधोऽस्मा त् ॥
विबधिक : । त्रि॰ वैवधिके ॥ विब धेन हरति । विभाषाविवधादिति ष्ठन् । ङीषि॰ विबधकी ॥
विबन्ध : । पुं॰ आनाहे । आध्मा ने । मूत्रादिरोधे ॥ यथाऽऽचि कित्सा । तुल्यकारणकार्यत्वादुदा वर्त्तं न्यौ क्रियाम । आनाहविषयु कीं तु विशेषश्चाभिधीयते ॥ पिण्डत् क्याण्डीतस्योदिवनुल्यस्वभागि-का : । शुद्धं नतश्चावटिकावरच्या गाष्ठमुष्णयम् ॥ वर्त्तिं त्रिकटु क सैन्धवसर्षपवच्छ मङ्कुष्ठमदनफलैः । मधु निशुद्धे यावङ्गानि स्तिाङ्गु ष्ठपरिमाणा ॥ वर्त्तिं रियं दृष्टफलो शनैः प्रणिहिता गुदे घृताभ्यक्ते । आनाहोदावर्त्तौ शमयति जठरस्तथा गुल्मम् ॥ त्रिकटु क्वाथावर्त्तिं भावि प्रकाशे ॥ विबन्धनम् । बन्धबन्धने । घञ् ॥ करणे वा घञ् ॥
विबाधा । स्त्री॰ विवेठने ॥
विविध : । त्रि॰ नानाप्रकारे ॥
विबुद्ध : । त्रि॰ तत्त्वसाक्षात्कार-वति ।
विबुध : । पुं॰ बुधे । पण्डिते ॥ सु रे । देवे ॥ चन्द्रे । विशिष्टो बोधो यस्य । विशेषेण बुध्यते स्वमिति वा । बुधधरणने । इगुपधे ति क : ॥
विबुधाचार्य : । पुं॰ आचार्ये ॥ पण्डि ते ॥ देवे ॥
विबुधानुग : । पुं॰ किन्नरादिषु ॥
विबुभुक्षु : । त्रि॰ विविधभक्षितुमि च्छौ ॥
विबोध : । पुं॰ प्रबोधे ॥
विबोधनम् । न॰ प्रबोधने । जागा वना॰ स्त्र॰ भा॰ ॥
विभक्त : । त्रि॰ विभक्तस्थाविते । कृ तविभागे ॥ विभिन्ने । परस्पर व्यावृत्ते ॥ प्राप्तविभागे ॥ विभज्य तेस्म । भज॰ । आसंयोक्त : ॥ विभक्ताभ्रातरस्त्वथतु॰ विभक्ति ग्रामस्तोमिमध्यार्थयोऽर्थंयाद्यज्ञि-त्वन् । नतुकर्त्तरिक्त : । सकर्मके ष्वस्यविधानाभावात् ॥ न्यथेरा त्तरपदस्थोपेद्रष्टव्य : । विभक्तश्च नाविभक्ता : । गम्यार्थे साम्प्रयोगए वलोपोऽभिमत : । तेनविभक्ताभ्रा

तरङ्ग्यवधनस्यदिभक्तस्य सत्॰ भाह्व्यारोप्यते ॥ विभक्तं पिधने यस्तुस्वीयांशंप्रतिपादयेत् । पुनर्वि भज्यतद्द्व्यमप्रांशंभायदापयेत् ॥

विभक्तज : । पुं॰ विभागानन्तरंजाता पत्ये ॥ पुत्रे : सहविभक्तं नपि चायत्स्वयमर्जितम् । विभक्तजस्ततत् सर्वमनीशाः पूर्वजाः स्मृताः ॥

विभक्ति : । स्त्री॰ विभागे ॥ सुप्तिङौ : ॥ यथा । सङ्ख्यात्वव्याप्य सामान्यैः शक्तिमानूप्रत्ययस्तुयः । साविभक्तिर्द्विधाप्रोक्तासुप्तिङ्चेति प्रभेदतः ॥ सङ्ख्यात्वावान्तर व्याप्यवच्छिन्नशक्तिमान्यः प्रत्ययः साविभक्तिः । सुप्तिङिति भेदात्साद्विधेतिमुग्धद्योतिप्रकाशिका ॥ कारकशक्तिः ॥ विभज्यतेप्रातिपदिकार्थोऽनया । 'क्तिन्' ॥

विभजनीय : । त्रि॰ विभाज्ये । विभागयोग्ये ॥ भजनार्थे ॥

विभज्य : । त्रि॰ विभक्तव्ये ॥ ऋह लोप्यं तिप्राप्ते॰ विभजनविभज्योप पदे॰ इतिराद्यपवादोयन्निपात्यते । तेनविभाज्यमितिनभवति ॥

विभव : । पुं॰ राये । धने ऐश्वर्ये ॥ विभवति । भू॰ । यथा दाय ॥ भिक्षाशयनासनाथैंदन्या शीतनिवारणी । ऋचताविभवे भिक्षिर्विभवे : किंप्रयोजनमितिस श्नासिधर्म : ॥ निर्वृत्तौ ॥ मोक्षे ॥ विगत : भवोयस्मिन् ॥ प ष्टिवत्सराभ्यन्तरद्वितीयवत्सरे । यथाभविष्यविधैरवत्सरात । सुभिक्षं क्षेममारोग्यं सर्वव्याधिविवर्जिताः । प्रशान्तामानवास्तस्तत्रतुष्टाश्चवसुन्धरा । हृष्टास्तुष्टाजनाः सर्वेपि भवैवरानने ॥ २ ॥

विभवी । त्रि॰ ऐश्वर्यवति ॥ विभवोऽस्यास्ति ॥ इनि : ॥

विभा । स्त्री॰ शोभायाम् ॥ प्रकाशे ॥ किरणे ॥ उदीर्ष्यासामसुपर्याम ॥

विभाकर : । पुं॰ अग्नौ । यज्ञे ॥ सूर्ये । विभांकरोतिति । दिवाविभानिशेतिट : ॥ अर्कवृक्षे : चित्रकवृक्षे ॥

विभाग : । पुं॰ अंशे । भागे ॥ विवेके ॥ विविच्यप्रयोगे ॥ संयोगनाशकीभवद्व्यवर्तिनिर्गुणे ॥ स्वत्वनिर्णयानुकूलव्यापारे ॥ विभज्यते॰ विभजनंवा । भज॰ । भावेघञ् ॥

विभागी । त्रि॰ इंशग्रहिनि ॥ विभागोऽस्यास्ति । अतइनिठनावितीनि : ॥

विभाजित : । त्रि॰ विभागेनस्थापिते ॥

विभाव्य : । त्रि० विभावनीये । विभा गयोग्ये ॥ विपूर्वाण्ण्यन्ताद्भुवेर्चोय त् ॥
विभाण्डक : । पुं० ऋष्यशृङ्गपितरि० मुनिविशेषे ।
विभाण्डी । स्त्री० आवर्त्तकीलतायां ॥
विभान् । त्रि० भासमाने ॥ प्रचलन ॥
विभातम् । न० प्रभाते । प्रत्यूषे ॥ वि भातुं प्रवृत्तम् । आ० । चादिकर्म्म णि क्त : ॥
विभासकम् । न० प्रत्यूषे ॥
विभाव : । पुं० परिचये ॥ रसस्योद्दी पनादौ ॥ रत्यादीनांकारणेषु । ल लनोद्यानादिष्वालम्बनोद्दीपनकार णेषु ॥
विभावनम् । न० विभावनायाम् ॥
विभावना । स्त्री० अलङ्कारविशेषे ॥ विभावनाविनापिस्यात्कारणं का र्योदयश्चेत् । अप्यलाक्षारसासिक्तं रक्तंतच्चरणद्वयम् ॥ अत्रलाक्षारसा सेकरूपकारणाभावेपिरक्तिमाकथित : । स्वाभाविकत्वेनविरोधपरिहार : ॥
विभावरी । स्त्री० तमस्विन्याम् । रजन्याम् । यामिन्याम् ॥ नि शायाम् । हरिद्रायाम् । कुट्ट न्याम् ॥ वक्रयोषिति ॥ वि- वादवत्स्त्रियाम् । विभातिन क्षत्रादिभि : । क्वनिप् । वनो रचेतिङीब्रौ ॥ मौखर्यनिरलक्षि याम् ॥ मेदाख्ये ॥
विभावसु : । पुं० अग्नौ । सू र्ये ॥ अर्कवृक्षे ॥ पावके ॥ हारभेदे ॥ चित्रकवृक्षे ॥ चन्द्रे ॥ विभाप्रभावसुधनंयस्य ॥ असुरवि शेषे ॥ सर्पे ॥
विभाषित : । त्रि० अभ्युदिते । ख्याते ॥ वि.चलिते ॥ विशिष्योक्त्यादिषे ॥ विशेषेणप्राप्तिषे ॥ विभिन्नमिति ॥ विशिष्टभाषित : ॥
विभावि । त्रि० प्रभावसम्पन्ने ॥ विभा वोऽस्यास्ति । इनि : ॥
विभाव्य : । त्रि० संलक्ष्ये ॥
विभाषा । स्त्री० विकल्पे ॥ विभाष्यते ॰विकल्प्यते । भाषव्यक्तायांवाचि । गु रोश्चहलइत्यकार : । ततष्टाप् ॥
विभिन्न : । त्रि० मिश्रिते ॥ विदारि ते ॥ विदीर्णे ॥ विभक्ते ॥ समाच क्षे । पृथग्भिन्ने ॥ विकासिते ॥
विभीत : । त्रि० विभीतके ॥ विगतं भीतं रोगभयमस्मात् ॥ त्रि० निर्भ ये ॥
विभीतक : । त्रि० कर्षफले । भूतवा सि । कलिद्रुमे अक्षिद्रुमे । अक्षिद्रा० द्रुतिख्याते ॥ विभीतकंस्वादुपाकंक षायंकफपित्तनुत् । उष्णवीर्यंविम लस्याक्षिभेदनंकासनाशनम् ॥ रूक्षं नेत्रहितंकेश्यंकृमिवैस्वर्यनाशनम् । विभीतमज्जाचतृट्छर्द्दिकफवातहरी

लघुः ॥ कषायीमद्रत्वाययधाश्रम स्यापितञ्च या ॥ विगतंभीतरोगम यमस्मात् ॥ स्वार्थेक : स्त्रियां०जा तेरितिङीष् ॥
विभीषण : । पुं० रावणानुजे ॥ नल दर्भे ॥ वि०भयानके ॥ विशेषेणभी षयते । ञिभीभये । नन्द्यादित्त्वा ल्यु : । भियोहेतुभयेषुक् ॥ निर स्वाविषौ ॥ विगतंभीषणंभयंकरम स्मात्नंयस्यस : ॥
विभीषिका । स्त्री० भयप्रदर्शने ॥ य थो । स्वल्पाश्चविभोषिकाकातिप ययामिषु दीना : मला : ०मधुलो चिटजक्तितैरपक्ष्ता :चौचीभुतस्ते किल । निहसोमिवयंपरंभिन्नगतां सर्गस्थितिव्यापदामोमस्तत्परिचर्य यानगणितोवैरैयनारायण :॥ इति मिश्चयमिश्र : ॥
विभु : । पुं० शङ्करे । सदाशिवे ॥ प रमेश्वरे ॥ सर्वमूर्त्तसंयोगिनि । प रममहत्परिमाणवति ॥ सतु०चात्माद्वि वा । चात्मेन्द्रियाद्याधिष्ठासाकर्त्व विसकर्तृकम् । विभुर्बुद्ध्यादिगुणवा नबुद्धिस्तुद्विविधामतेतिभाषापरिच्छे द : । विभुरिति०विभुत्वपरममह त्परिमितिसिद्धान्तमुक्तावली ॥ काल खात्मदिशांसर्वगतत्वंपरमंमहदिति भाषापरिच्छेद : ॥चई॑ति ॥ नित्ये ॥ भृत्ये ॥ विपश्री ॥ वि०व्यापके ॥ प्रभौ ॥ सर्वगते । दृढेब्रह्मणि ॥ य था । नित्यः सर्वगतःस्थाणुरचलो ऽयं सनातनः । प्रभुरव्यय : । अद्वैत :सर्वभा वानांदेयस्तुर्योऽविभु : स्मृतइत्यागम : ॥ विविधभवतिपस्मात् । भू० । वि प्रसम्मादित्डु : ॥
विभुता । स्त्री० सामर्थ्ये ॥ भावेतल् ॥
विभूति : । स्त्री० भूतौ । ऐश्वर्ये । च णिमादिषु ॥ यथा । अणिमालघि माप्राप्ति : प्राकाम्यंमहिमातथा । ई शितावशिताचैवतथाकामावसायि तेति ॥ भस्मनि ॥ शिवधृतभस्मनि ॥ चंशे ॥ विविधभावे । विशेषेणभ वनम् । स्त्रियांक्तिन् ॥विभूतिरिति कथनमन्यपरादिनिवृत्त्यर्थम् ॥
विभूतिद्वादशी । स्त्री० विष्णोर्व्रतविशे षे ॥
विभूतिमत् । वि० ऐश्वर्ययुक्ते ॥ विभू तिर्विद्यतेऽस्य । मतुप् ॥
विभूमा । वि० परिपूर्णे ॥ विगतोभू मायस्मात् । यस्येच्छान्यनमहत्त्वं नास्तीति ॥
विभूषणम् । न० चलङ्कारे । चाभर णे ॥ विशिष्टंभूषणम् । विभूष्यते ऽनेनवा । भूषयलङ्कारे । ल्युट् ॥ पुं०मञ्जुघोषे ॥
विभूषा । स्त्री० शोभायाम् ॥ चाभर णे ॥
विभूषित : । वि० चलङ्कृते ॥

विभृत : । त्रि॰ धृते ॥ पुष्टे ॥
विभ्यत् । त्रि॰ भयंकुर्वति ॥
विभेद : । पुं॰ विशेषे ॥
विभ्रंश : । पुं॰ नाशे ॥
विभ्रत् । त्रि॰ धारणकर्त्तरि ॥ पोषणकर्त्तरि ॥
विभ्रम : । पुं॰ भ्रान्तौ ॥ संशये ॥ शोभायाम् ॥ भ्रमणे ॥ हावप्रभेदे । स्त्रीणां शृङ्गारभावजातक्रियाविशेषे ॥ तथाहि । मदरागहर्षजनितविपर्यासो विभ्रम : । यथा । अन्यनिमित्तमनसाद्व्याद्यान्यचगमनं • प्रियाख्यकथानाम्लिप्यसख्यासहालपन • सुखेर्ड सितक्रोधौ • पुष्पादीनांयाञ्चा • सच सैवतत्परित्याग : । वस्त्राभरणमाल्यानामकारणत: खण्डनंमानमत्र । यदुक्तम् । क्रोध: स्मितञ्चकुसुमाभरणादियोज्ञारत्र्यंगवस्त्रएवैवविसर्ज्जनञ्च । आहित्यकान्तवचनंवचनं सखीभिर्भिक्कारणो त्यलगतंपदवि भ्रमंतत् ॥ इति ॥ चित्तस्यानवस्थानं शृङ्गाराद्विभ्रमोमत: । इत्यन्यच ॥ अपिच । विभ्रमस्त्वरयाकालेभूषास्थानविपर्यय : । यथा । श्रुत्वायान्तंवहि: कान्तमसमापितभूषया । भालेञ्जनं दृशोर्लाक्षाकपोलेतिलक : कृत : । इति । योषितांयौवनजोविकारोविभ्रमइत्यके ॥ अपिच । वल्लभप्राप्तिवेलायांमदनावेशसम्भ्रमात् । विभ्रमोहारमाल्यादिभूषास्थानविपर्यय : ॥ विविधंभ्रमणम् । भ्रमु अनवस्थाने । घञ् । नोदात्तोपदेशेतिनवृद्धि : ॥

विभ्रमा । स्त्री॰ विस्रसायाम् । जरायाम् । वार्द्धक्ये ॥

विभ्राट्॰ड् । त्रि॰ भ्राजिष्णौ । दीप्यौ । अलङ्कारादिनाशोभमाने ॥ विशेषेणभ्राजते । भ्राजृदीप्तौ भ्राजभासेतिक्विप् ॥

विभ्रान्त : । त्रि॰ विभ्रमयुक्ते । यथा । विभ्रान्तशुभ्रसंकुलासुकार्यकार्यसम्भ्रान्त : । स्वामिदृष्टपरानिष्टजाथसेस्मात्पदेपदे ॥ इतिमहानिशीथतन्त्रम् ॥

विभ्रान्ति : । स्त्री॰ विभ्रमे ॥

विमत : । त्रि॰ विरुद्धमतिविशिष्टे ॥

विमति : । स्त्री॰ नानामतौ ॥ विरुद्धमतौ ॥

विमत्सर : । त्रि॰ मात्सर्य्यरहिते । अद्वितीयात्मदर्शनेननिर्वैरबुद्धौ । विगतोमत्सरोयस्मात् ॥

विमना : । त्रि॰ दुर्मनसि । अन्यमनसि । चिन्तादिनाव्याकुलचित्ते ॥

विमनस्क : । त्रि॰ विमनसि ॥

विमनीकृत : । त्रि॰ वैमनस्यप्रापिते ॥ अविमना : विमना : सम्पद्यमान : कृत : अभूततद्भावेच्वि : । च्वौचेतिदीर्घसंलोपश्च । इत्यच्विप्रत्ययसलोपौ ।

यस्यच्चावितोकार : ॥

विमथ : । पुं॰ परिवर्त्तने । विनिमये ॥ विमीयते । मीञ् । एरच् ॥

विमर्द्द : । पुं॰ कालहननद्रव्ये । चक्रमर्द्दे ॥ युद्धे ॥ व्यालोडने ॥ सङ्घर्षे ॥

विमर्द्दक : । पुं॰ चक्रमर्द्दे । वसौ॰टी तिप्रसिद्धंभ्यक्षे ॥

विमर्द्दनम् । न॰ कुङ्कुमादिनामर्द्दने । परिमले । स्वदनोदे । ल्युट् ॥

विमर्द्दना । स्त्री॰ कुङ्कुमादिमर्द्दे ॥

विमर्द्दोत्थ : । पुं॰ परिमले । मर्द्दनात्मासिसुगन्धादौ ॥ यथा । घनमन्दे परिमलोविमर्द्दोत्थेमनोहरे । दूरगामीमनोहारीगन्धव्यामोदईरितद्दति शब्दरत्नावली ॥

विमर्श : । पुं॰ विचारे ॥ न्यायमार्गे णविचारे ॥ संशयात्मिकायांवृत्तौ ॥

विमर्शनम् । न॰ परामर्शे । वितर्के ॥

विमर्शित : । त्रि॰ विचारिते । विमर्श : सञ्जातोस्य । तारकादित्वादितच् ॥

विमर्ष : । पुं॰ विचारणायाम् । इति जटाधर : । विशिष्टार्थामर्षायाम् ।

विमर्षणम् । न॰ ज्ञाने ॥ कर्मणाकर्मनिर्णरोनयत्नाद्यत्नितकथ्यते । यवित्तदधिकारित्वात्प्रायश्चित्तंविमर्षणम् ॥ इतिभागवतैकादशस्कन्ध : ॥

विमल : । पुं॰ सूर्यपरिवारे । वर्ष्ठेति । जिने ॥ न॰ तारवैमल्यधिक्कते॰उपरसविशेषे । निर्मले । स्वच्छधातुके ॥ त्रि॰ निर्मले । शोभ्रे ॥ विगतंमलंयस्मात् । चारौ ॥ रागादिशून्ये ॥

विमलतीर्थम् । न॰ तीर्थविशेषे । यथा वापिमीवर्णराजतमब्राहव्यन्ते ॥

विमलदानम् । न॰ नित्यनैमित्तिककाम्यदाने ॥ यथोक्तं गरुडपुराणे । नित्यंनैमित्तिकंकाम्यंविमलंदानमीरितम् । चेतनासत्त्वयुक्तं नदानंत विमलमुत्तमितिग॰पु॰ । ईश्वरप्रीणनार्थंदाने ॥

विमलमणि : । पुं॰ स्फटिके ॥

विमला । स्त्री॰ शीतलायाम् । सप्तलायाम् । सोतुगड्डप्रभेदे ॥ भुम : प्रभेदे । देवीप्रभेदे ॥ यथा । उत्कलेनाभिदेशस्तुविरजोदेश्चमुच्यते । विमलाचमदादेवीजगन्नाथस्तुभैरव : ॥

विमलात्मक : । त्रि॰ शोभ्रे । निर्मले । स्वभावनिर्मले ॥ विमलआत्मास्वभावोस्य ॥

विमलाद्रि : । पुं॰ शत्रुञ्जयपर्वते ॥

विमलेश्वर : । पुं॰ शिवे ॥ विश्वेशा देव्यधिष्ठिते पुण्यस्थाने ॥

विमाता । त्रि॰ गणयितरि ॥

विमाता । स्त्री॰ मातु : सपत्न्याम् ॥ विरुद्धामाता । प्रादयोगतेतिसमास : ॥

विमाटन : । पुं॰ तापसभाराठि ।

वैमात्रेये ॥ विमातुर्जात : । यद्वा स्यामजातादिति ढ : ॥

विमान: । पुं॰ न॰ देवतायाने । व्योमयाने । सार्वभौमगृहे॰ घोटके॰ यानपात्रे । विशिष्टं मानयन्त्यनेन । पुंसि संज्ञायामितिकरणे घ: ॥ विशेषेण मान्यन्ते स्मिन्निति वा । अधिकरणे ल्युट् ॥ विगतसंमानमुपमाऽस्येति वा । त्रि॰ मानहीने ॥

विमानक : । पुं॰ विमाने ॥

विमानता । स्त्री॰ तिरस्कारे ॥

विमानित : । त्रि॰ अनादृते ।

विमार्ग : । पुं॰ कुपथे ॥

विमिश्र : । त्रि॰ विमिश्रे ॥

विमुक्त : । त्रि॰ विरहिते ॥ पृथग्भूते ॥ सर्वपाशैर्विमुक्ते ॥ नित्यमुक्ते चिदानन्दरसे आत्मनि । विशेषेण अविद्याकामकर्माद्यादिभिर्मुक्तः परित्यक्त : ॥ त्रिमि ॥ जीवन्मुक्ते ॥ जीवन्नेव दृष्टपश्चात्कामादिविषयेभ्यो मुक्त : सन् देहपातेऽभाविबन्धादिभ्योऽपि मुच्यते । विमुक्तश्च विमुच्यत इति श्रुते : ॥

विमुक्ति : । स्त्री॰ मोक्षे । विमोचने । अनुध्यानरूपेऽनुग्रहे ।

विमुख : । त्रि॰ पराङ्मुखे ॥ विरुद्धं मुखं यस्य ॥

विमुद्र । त्रि॰ प्रस्फुटे । प्रफुल्ले ॥ मुद्रारहिते ।

विमूढ : । त्रि॰ विक्षिप्ते ॥ अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारे । दृष्टादृष्टविषयभोगवासनाक्रुष्टचेतस्तयात्मानात्मविवेकायोग्ये । अदूरदर्शिनि ॥ विगतमूढभावेऽतिचतुरे॰ सुस्थं विवेचनकुशले ॥

विमूढभाव: । पुं॰ व्याकुलचित्तत्वे ॥

विमूढात्मा । त्रि॰ रागद्वेषादिदूषितात्मा. करणे ॥ विमूढ आत्मा यस्य.॥

विमूढेन : । त्रि॰ मूर्खशिरोमणौ । देहात्मवादिनि । स्वयमनादरकारिणि ॥ विमूढानामिन : ॥

विमूल्य: । त्रि॰ अमोलविमोलत्वतिभार्यास्थाने । अनर्घे॥

विमृत्यु: । पुं॰ विगतकामाविधौ । वेदान्तविद्यात्मनि ॥

विमृश : । पुं॰ विमर्शे ॥

विमृष्ट. । त्रि॰ विभाविते ।

विमृश्य : । त्रि॰ विचार्ये । विमृषे : ऋदुपधाच्चाक्लृपिचृतेरिति क्यप् ॥

विमृश्यकारी । त्रि॰ विवेकिनि ॥ विमृश्यकरोति । णिनि : ॥

विमोक : । पुं॰ विमोचने ॥

विमोघ : । पुं॰ मुक्तौ ॥

विमोचनम । न॰ विमोचने । परित्यजने ॥

विमोचनम् । न॰ दूरीकरणे । विमुक्तौ । विपूर्वान्मुचेर्ल्युट् ॥ तीर्थविशेषे ॥

वियाम : । पुं॰ संयमे । विविधयमने ॥ वियमनम् । यम : समुपनिविषु चेति॰ अपभावेघञ् ॥
वियुक्त : । त्रि॰ वियोगविशिष्टे ॥
वियोग : । पुं॰ विच्छेदे । विप्रलम्भे । रागिणोर्वियोजने । विरहे ॥ अस्याविधोगसंदु : खंत्यजन्ते ंप्रिये जने । अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापिदह्यते ॥ वियोजनम् । युजि र्‌धोगे । घञ् । वियुज्यतेऽनेनवा ॥
वियोगभाक् । त्रि॰ विच्छेदयुक्ते ।
वियोगी । पुं॰ चक्रवाके । कोके ॥ त्रि॰ विरहिणि । वियोगयुक्ते ॥ वियोगोऽस्यास्ति । इनि : ॥
वियोगिनी । स्त्री॰ विरहिण्याम् ॥
वियोजित : । त्रि॰ पृथक्कृते । वियोगं प्रापिते
विरक्त : । त्रि॰ विरागवति ॥ सच॰ कुटीचकबहूदकहंसपरमहंसभेदाच्चतुर्विध : । विवर्णीकृत : ॥ अतिरक्तवर्णे ॥
विरक्ता । स्त्री॰ सांसारिकविषयेषुविरागविशिष्टायाम् ॥ दुर्भगायाम् ॥ अननुकूलायाम् ॥ यांचिन्तयामि सततंमयि सा विरक्ता ॥
विरक्ति : । स्त्री॰ वैराग्ये ॥ तीव्रातीव्रतराचेति विरक्तिर्द्विविधामता । तत्रसत्यांतुतीव्रायांन्यसेद्योगीकुटीचके । शक्तोबहूदकेतीव्रतरायांहंसं

क्षिते । मुमुक्षु : परमहंसे साक्षाद्विज्ञानसाधने ॥ रञ्जे : क्तिन् ॥
विरङ्गम् । न॰ कङ्कुष्ठे ॥
विरचनम् । न॰ निर्माणे ॥ विशेषेणरचनम् ॥
विरचित : । त्रि॰ निर्मिते ॥ विशेषेणरचित : ॥
विरजम् । न॰ तीर्थविशेषे ॥
विरजा : । त्रि॰ विगतधर्माधर्मे ॥ रजोगुणरहिते ॥ विगतं रजोयस्य स : ॥
विरजा : । स्त्री॰ विगतार्तवायाम् ॥
विरजस्तमा : । पुं॰ द्वयातिगे । निष्पन्नतमोगुणे ॥ रजस्तमोभ्यांविगत : । निरादयश्चेतिसमास : ॥ विगतेरजस्तमसीयस्मादितिवा ॥
विरजा । स्त्री॰ कपित्थपर्ण्याम् ॥ दूर्वायाम् ॥ ययातिमातरि ॥ गोलोकेश्रीकृष्णस्यसखीविशेषे ॥ दोषाविशेषे ॥ देवयानपथवर्तिन्यां नद्याम् ॥ जगन्नाथक्षेत्रे ॥ यथा । सुदर्शनस्योपवासस्सर्वतीर्थेष्वयं विधि : । सर्वंयित्वागयांगङ्गांविशालांविरजांतथा ॥
विरजाक्षेत्रम् । न॰ पुरुषोत्तमतीर्थे । यथा । उत्कलेनाभिदेशस्तु विरजाक्षेत्रमुच्यते । विमलासा महादेवीजगन्नाथस्तुभैरव : इति तन्त्रचूडामणौपीठनिर्णय : ॥

विरजाहोमः । पुं० ववध सत्वस स्यादसे० आगमप्रोक्तकर्मविशेषे ॥

विरञ्चः । पुं० द्रुहिणे । ब्रह्मणि ॥ विरचयति । रचप्रतियत्ने । पचाद्यच् । पृषोदरादित्वान्नुमागमः ॥

विरञ्चिः । पुं० स्रष्टरि । ब्रह्मणि ॥ विरचयति । रच० । स्वार्थण्यन्तादिच् । पृषोदरादित्वान्नुम् ॥

विरणम् । न० वीरणतृणे ॥

विरतः । त्रि० निवृत्ते । विरक्ते ॥

विरतिः । स्त्री० आरतौ । उपरामे । निवृत्तौ ॥ विरमणम् । रमु क्रीडायाम् । क्तिन् ॥

विरथः । त्रि० भग्नरथे ॥

विरमणम् । न० विरतौ ॥ विपूर्वाद्रमेर्ल्युट् ॥

विरमितः । त्रि० निरस्ते ॥

विरलम् । न० दध्नि ॥ त्रि० अवकाशे । पेलवे । तनौ । सान्तरे ॥ विरलति । रल दाने । बाहुलकात्कलन् ॥ पुं० मिश्रणे ॥

विरलजानुकः । त्रि० वक्रजानुविशिष्टे । पङ्गौ । प्रज्ञे ॥ इ० द्वि० चन्द्रः ॥

विरलद्रवा । स्त्री० अच्छयवाग्वाम् ॥ यथा । यवागुरूपिकाश्राणा सैव सुद्रुतसिक्थिका । विलेपीतरलाचस्यात्साप्रोच्या विरलद्रवा ॥

विरसः । त्रि० रसहीने ॥ विगतोरसोयस्मात् ॥

विरहः । पुं० विप्रलम्भे । वियोगे । विच्छेदे ॥

विरहिणी । स्त्री० वियोगिन्याम् ॥ विच्छेदविशिष्टायाम् ॥ नार्थस्मृतौ । ङीप् ॥

विरहितः । त्रि० त्यक्ते । विहीने विशेषरहितः ॥

विरही । पुं० वियोगिनि । विरहविशिष्टे ॥ विरहोऽस्यास्ति । अत इनिः ॥ रहतेराभीक्ष्ण्ये घिनुर्वा ॥

विरहोत्कण्ठिता । स्त्री० नायिकाविशेषे ॥ चिरमप्यच्युतागतौ विरहोत्कण्ठितोन्मनीतागतापात् ॥

विरागः । पुं० वैराग्ये । रागभिन्ने ॥ त्रि० गताभिलाषे ॥ विगतः रागोऽस्य ॥

विरागार्हः । त्रि० विरागयोग्ये । वैरङ्गिके ॥ अर्हति । अर्ह० । पचाद्यच् । विशिष्टोरागः विरागः । विरागस्यार्हः ॥ धक धति ॥

विरागी । त्रि० विरक्तिमति ॥

विराट् । पुं० विविधं राजमानत्वात् स्थूलसमष्टिपदितचैतन्ये भगवतः स्थूलरूपे ॥ यथा तत्कार्यं स्वविराड्देहः स्थूलदेहोयमात्मनदृति । पञ्चीकृतभूतानां तत्कार्यं तत्का-

यं विराट् देहोऽभवत्तिसचदेह : प
रमेश्वरस्य स्थूलदेह ॥ आत्मनोममम
गवत्त्वात् ॥ वे॰ दे॰ भो॰ ॥ विराडात्माना
म॰ स्थूलप्रपञ्चाभिमानीसूर्यमण्ड
लात्मक : समष्टिदेहयद्गोलकव
थानुयायीसोहिरण्यगर्भ : यं यज्ञा
ध्यामर्थान्तरमितिव्याख्यातार : ॥
विश्विगिराराजते ॥ राज् दीप्तौ । विवि
धं राजते । सत्सूद्विषेति क्विप् ।
च्वि विधौ ॥ स्त्री॰ दशाक्षरायांश्रुतौ ॥

विराज : । पुं॰ विराजि ॥

विराजमान : । त्रि॰ दीप्तिविशिष्टे ।
शोभमाने ॥

विराजित : । त्रि॰ शोभिते । दीप्ते ॥

विराट : । पुं॰ मत्स्यदेशे ॥ वैदर्भदे
शादूर्ध्वं त्विन्द्रप्रस्थाद्दक्षिणे । म
त्स्यदेशात्पूर्वभागे विराट : परि
कीर्तित : ॥ मत्स्यदेशाधिपे ॥
नगरविशेषे ॥

विराटक : । पुं॰ राजपट्टे ॥ इति
हेमचन्द्र : ।

विराटज : । पुं॰ विराटदेशोद्भवही
रके । राजपट्टे । राजावर्त्ते ॥ त्रि॰
विराटराजजाते ॥

विराधी । पुं॰ हस्तिनि ॥ इतिश-
ब्दमाला ॥

विराद्ध : । त्रि॰ विप्रकृते ॥ राधेर
निट : धार्मिक : ॥

विराध : पुं॰ रामायणप्रसिद्धराक्ष
सविशेषे ॥

विराधनम् । न॰ पीडायां ॥

विराध्यन् । त्रि॰ अपकुर्वाणे ॥

विराम : । पुं॰ अवसाने ॥ वितर्कवि
चारानन्दास्मितादिरूपचिन्तात्या
गे । सत्युपरमे ॥ विपूर्वाद्रमेर्भावे
घञ् ॥ विरमन्ते निवर्त्तन्तेऽस्मि
न्निति वा ॥

विराव : । पुं॰ शब्दे । ध्वनौ । आ
रावे ॥ विरवणम् । स॰ उपसर्गस
द्भूतिभावेघञ् ॥

विरिक्त : । त्रि॰ सञ्जातविरेके ॥

विरिञ्च : । पुं॰ वैकुण्ठे । विष्णौ ॥
परमेष्ठिनि ॥ शिवे ॥ इ॰ श॰ रत्ना
वली ॥

विरिञ्चन : । पुं॰ विरञ्चने । द्रुहि
णे ॥ इ॰ हे॰ चन्द्र : ॥

विरिञ्चि : । पुं॰ शिवे । विष्णौ ॥
विधातरि । परमेष्ठिनि । सुरज्ये
ष्ठे ॥ भूतानिविरचयति । रचप्र
तियत्ने । स्वार्थण्यन्तादच् : ।
पृषोदरादित्वादकारस्येत्त्वं नुमाग
मश्च ॥

विरिब्ध : । पुं॰ स्वरे ॥ रेभृशब्दे
सौत्र : । क्त : । सत्यस्मात्प्रध्माभ्ये
त्यादिनानिपातित : ॥

विरिष्ट : । त्रि॰ विच्छिन्ने ॥

विरुद्ध : । पुं॰ हेत्वाभासान्तरे । सा
ध्याभावव्याप्ते हेतौ ॥ यथाशब्दोनि

पुतरगहन्दमर्मघटनयात्नपटी । हिम पलीगोमकठिना : सतिभवतिकारा : सरीलकुसुमारा : ॥ येशलमपिख लपचन दृष्टमितरांमानसंसुमत्वपि द्याम् । परुषमपिसुजनवाक्यमलय जरसवत्प्रमोदयति ॥ क्रोधाद्विरुद्धा महपदटोयदम्मार्गेणामर्गलमातपो ति । पभुन्नवाद्योमदलामिजात : स भागेय : सत्यमपूर्वसर्गं : । परिच्छे दातीत : सकलवचमानामविषय : पुनर्जन्मन्यस्मिन्ननुभयपथ येनगत वान् । विवेकप्रध्वंसादुपचितमहा मोहगहनोविकार : किं यन्नजडय तितरतापयन्नकुरुते पयंदाराभिकोनि शयश्चतिरलाक्सर्पतिप्रतीऽसाभि मुखयाद्दलितमनोनिजर्मानिधि : । कपदंजानीर्नैनिजकरपुटीकोटरग तंक्षपादेनंतान्यन्तिनिमकरमापास्त तिमुनि : ॥ समदमतङ्गजमदजलनि स्यन्दतरङ्गीपरिप्लवात् । चिति तिलकस्यविसटमुनिशद्धरचूडापगा विशालिस्तो ॥ इति ॥ धर्मे अर्थे । विपरीतार्थे ॥ यथा । श्रुतिस्मृति विरोधितुश्रुतिरेवगरीयसी । पवि रोधसदापार्थेन्नासं वैदिकवत्सता ॥ यसामानाधिकरण्ये ॥ न्यायमते ॰साध्यव्यापकाभावप्रतियोगित्वमि तिचिन्तामणि : । साध्यासमानाधि करणमिति दीधिति : । पाहिनकु

लादेरन्यतरेणापरस्मरणे ॥ विरोध नाख्यवस्तुनि ॥

विरोधकृत् । पुं॰ वत्सरविशेषे । तत्फ लयथा । वासवीवृष्टिं देविदेशेषा खण्डमण्डले । पश्चिमे कान्यकु ब्जे विरोधीकृत्ननाथत् ॥ ४५ ॥ त्रि॰ विरोधकर्त्तरि ॥

विरोधन : । पुं॰ विद्विषि । न॰ प्रयंव स्यायाम् । विरोधे ॥ रुधिर॰ । ल्यु ट्युड् वा ॥

विरोधी । पुं॰ शत्रौ ॥ विरोधोस्यास्य इनि । इनि : ॥ वत्सरविशेषे ॥ यथा । पनभिप्रवकाशीकाशाधीन धिप्रपीडनम् । आयतिमानुविपाद विरोधिनिनसंशय : ॥ त्रि॰ विवा दिनि ॥ विरोधविशिष्टे ॥

विरोधिनी । स्त्री॰ विरोधकारिकाया म् ॥ विरोधविशिष्टायाम् ॥

विरोधोक्ति : । स्त्री॰ विप्रलापे । पर वचनविरोधिवचने ॥ विरोधवच क्ति : ॥

विल : । पुं॰ उच्चै : श्रवसि । इन्द्रस्य हये ॥ वेतसे ॥ न॰ छिद्रे । रन्ध्रे ॥ गुहायाम् ॥ विलतिभिनत्ति । वि लभेदने॰भीडादि : ॥ इगुपधेति क : ॥ विल्यतेवा । क्रत्यल्युटोब हुलमिति॰इगुपधेतिक : । घञर्थे कोवा । खनोघचेतिघे॰संज्ञापूर्वे कत्वाद्गुणाभावोवा ॥

विशदः । पुं० शुक्ले । शुभ्रे । श्वेते । पाण्डुरे । धवले ॥ त्रि० धवलवर्णयुक्ते ॥ प्रसन्ने । विमले । व्यक्ते । विविक्तावयवे । यथा० खद्विशदमभ्यवहार्यमत्यमिति ॥ विशीयते० शद्लृशातने । अच् ॥

विशदप्रभः । त्रि० निर्मलकान्तौ ॥

विशदनम् । न० प्रतिज्ञाने ॥ अर्थेन प्रकटीकृताभिप्राये ॥

विशस्वरा । स्त्री० पञ्जराम् ॥ कुतिराजनिर्घंटः ॥

विशयः । पुं० संशये अस्यायमर्थोऽनयेतिसन्देहे ॥ विविधशयनम् । शीङ्स्वप्ने । एरच् ॥

विशयी । त्रि० संशयिनि ॥

विशरः । पुं० वधे । मारणे ॥ विशरणम् । शृहिंसायाम् । ऋदोरप् ॥

विशरणम् । न० अवयवानांविश्लेषे ॥ मारणे ॥ भेदने ॥

विशल्यः । त्रि० शल्यरहिते ॥

विशल्यकरणी । स्त्री० ओषधिविशेषे ॥

विशल्यकृत् । पुं० अर्कोटके । भूपलाशे । शापरमालीति गौ० दे० भा० प्र० हने ॥ त्रि० विशल्यकारिणि ॥ विशल्यंकरोति । डुकृञ्० । क्विप् ॥

विशल्या । स्त्री० अग्निशिखायाम् लाङ्गलिक्याम् । मधुदन्त्याम् ॥ गुडूच्याम् ॥ त्रिपुटायाम् ॥ शल्यनरहितायाम् । दन्तपाल्योषधौ ॥ अजमोदायाम् ॥ कलिकायाम् ॥ विगताशल्यात् । विगतशल्यमनया० यस्यावा । तीर्थविशेषे ॥

विशल्यानदी । स्त्री० तीर्थविशेषे ॥

विशसनः । पुं० तरवारौ ॥ खड्गे । नरकान्तरे ॥ न० मारणे ॥ शसुहिंसायाम् । ल्युट् ॥

विशसितः । त्रि० मारिते ॥ विपूर्वःशसः क्तः ॥

विशसिता । त्रि० पशोरङ्गानांकर्त्रादिनापृथक्पृथक्कारके ॥

विशस्तः । त्रि० अविनीते ॥ शसु० । क्तः । धृषिशसीवैयात्ये । एतौनिपात्यावविनयएवानिटौस्तः ॥

विशस्ता । पुं० चाण्डाले ॥

विशाकरः । पुं० भद्रचूडे ॥

विशाखः । पुं० शिखिवाहने । कार्तिकेये षडानने ॥ विशाखति । शाखृव्याप्तौ । पचाद्यच् ॥ विशाखायांजाताद्विरिव । सन्धिवेलाद्यण् । श्रविष्ठाफल्गुनीत्यादिनात् अलुक । लुक तद्धितलुकि । धन्विनांसमरकाले । वितस्त्यन्तरेणस्थितेपादद्वयेसतिविशाखाख्यस्थानंभवति० तस्मिन् । याचके । तर्के । पुनर्नवायाम् ॥

विशाखलम् । न० योधानांपादविन्यासभेदे ॥

विशाखा । स्त्री॰ षोडशनक्षत्रे ।राधायाम् ॥ यस्यांजातस्यफलंयथा । सदानुरक्तोविविधक्रियायांसुरर्षिकादैरपिसख्यमेति । यत्प्रसूतश्चौभवेद्विशाखासज्ञानक्षत्रविभवेत्प्रसूत : ॥ पाक्षिकनेत्रवचनम् ॥ चक्रलाङ्गलम् ॥ कठिल्लके ॥

विशाय : । पुं॰ उपशाये । यामिनांक्रमाच्छयने ॥ यथा । उपशायोविशायश्चपर्यायशयनार्थकौ ॥ विशयनम् । शीङ् स्वप्ने । व्युपयो : शेते : पर्यायइतिघञ् ॥

विशारणम् । न॰ मारणे । इतिहेमचन्द्र : ॥

विशारद : । पुं॰ सर्वज्ञे । ईश्वरे ॥ बकुले ॥ महागन्धे ॥ त्रि॰ पण्डिते ॥ धृष्टे ॥ प्रगल्भे ॥ प्रसिद्धे ॥ श्रेष्ठे ॥ विशिष्टोविपरीतोवाशारद : । प्रादयोगतेतिसमास : ॥ अशुद्धे ॥

विशारदा । स्त्री॰ क्षुद्रदुरालभायाम् ॥

विशाल : । पुं॰ मृगप्रभेदे ॥ पक्षिविशेषे ॥ नृपान्तरे ॥ वृक्षविशेषे ॥ त्रि॰ पृथुले ॥ विस्तृतार्थवर्त्तेविंशब्दात् । वे : शालच्छङ्कटचाविति॰शालच् ॥ यद्वा । विशति । विशप्रवेशने । तमिमयिविशिमिडौख्यादिनाकालन् ॥ विस्तीर्णे ॥

विशालता । स्त्री॰ पार्श्वविस्तारे । परिणाहे । पनसा॰ वृ॰ भा॰ । विशालस्यभाव : । तस्यभावस्त्वतलावितितल् ॥

विशालतैलगर्भ : । पुं॰ अङ्कोठवृक्षे ॥

विशालत्वम् । न॰ विशालतायाम् ॥

विशालत्वक् । पुं॰ सप्तपर्णवृक्षे ॥ विशालात्वगस्य । बहुव्रीहि ॥

विशालपत्र : पुं॰ कासालौ । श्रीखण्डदेशप्रसिद्धोयम् । म्टदुताणि । श्रीतालो विशालानिपत्राणियस्य ॥

विशालफलिका । स्त्री॰ निष्पाव्याम् ॥

विशाला । स्त्री॰ इन्द्रवारुण्याम् ॥ चन्येन्द्रवारुणीमोक्षाविशालासुगमहाफला । विशालाख्याभास्ती मेढकुइन्द्रवासरा । उज्जयिन्याम् ॥ विशयति । शलचलने । ज्वलितीतिण : ॥ यद्वा । विशति । वि श॰ । तमिविशिमिडोतिकालन् । विशालशब्दात्स्त्रियामजाद्यतष्टाबितिटाप् ॥ उपोदक्याम् । बदरिकाश्रमे ॥

विशालाक्ष : । पुं॰ हरे । महेश्वरे ॥ तार्क्ष्ये । गरुडे ॥ त्रि॰ विशालनयने । सुनेत्रे ॥ विशालेचक्षुषीयस्य । बहुव्रीहौसक्थ्यक्ष्णो : स्वाङ्गात्षच् ॥

विशालाक्षी । स्त्री॰ पार्वत्याम् ॥ नागदन्त्याम् ॥ देवताविशेषे ॥ पाराशरम्विशालाक्षीविशाला-

स्वस्वकर्मणि स्वभावसिद्धाशक्तिः। अचिन्त्यक्रियाहेतुप्रभावापरपर्यायः द्रव्यादीनां रसाद्यनुरूपकार्यकरणशक्तिः। तत्त्वं। भूतप्रभावा लिङ्गयोर्द्रव्ये पाकैरसेऽस्थितः। अचिन्त्याऽचिन्त्यक्रियाहेतुर्वीर्यं तदन्तरे-ऽर्पितमिति॥ अस्याऽधिमात्र। या भक्ष्यकषायवीर्यमखिलं चूर्णस्वप चयर्यपवमासान्पूतमोदकौसदा भौमासनर्युक्तौ :। सिद्धागार सभक्ष्मांसुविपुलंवीर्यस्वर्णचयम्-किञ्चिदन्यविवर्जितं गुणपरतैलंपुरा यंमदर्दितमारायपदासक्तापरि भाषा॥ वीरे० भक्तौविसाधु। तस्मसाधुरितियत्॥ यद्वा। वीर्यते ऽनेन। वीरविक्रान्तौ। अचीयत्॥ अघ्न्यादिर्वा॥ वते॥

वीर्यवान्। त्रि० मांसले। वीर्यमस्यास्मिन्वा। मतुप्॥

वीर्यहानिकरम्। न० हये। वाजीकरणे। शुक्रवृद्धिकारकौषधादौ॥

वीर्या। स्त्री० अतिशयशक्तौ॥

वीसर्प :। पुं० विसर्पे॥

वीहार :। पुं० बुद्धमन्दिरे। मठालये॥

वुक :। पुं० वकपोदपे। शियमलस्याम्॥ वाति वा० बाहुल कात्कुक। कुनोकारस्थोऽत्वं वा॥

वृंहण :। पुं० याश्काद्ये० नाद



भेदे॥ संयावीरहृद्योगुरुः॥ त्रि० पुष्टिकारके॥

वृंहितम्। न० करिगर्जिते॥ बृहधातु। हस्तिध्वनौ। नपुंसके क्तः॥

वृक :। ह्रीकी। ईहामृगी। हुंडार० हु० भेड़िया० हु० नभाषा० प्र० ॥ वर्कते। वकआदाने। इगुपधेतिक :॥ यद्वा। वृणाति। वृञ्० सृवृभूशुषिमुषिभ्यः कक्॥ भृगाले॥ क्षपिनधूपे॥

वृकदंश :। पुं० कुक्कुरे॥ वृकान् दंशयति। दंश०। कर्मण्यण्॥

वृकधूप :। पुं० नानासुगन्धिद्रव्यकृतधूपविशेषे। कृत्रिमधूपे॥ सरलद्रवे। वृकधूपे। श्रीवेष्टे॥ वृकवृकधूप :॥ धूप्यतेऽनेन। धूपसन्तापे। घञ्। वृकनामाधूपः शाकपार्थिवादिर्वा॥

वृकधूर्त :। पुं० भृगाले॥

वृका। स्त्री० अम्बष्ठायाम्। पाठायाम्॥

वृकाक्षी। स्त्री० त्रिवृति॥

वृकाराति :। पुं० कुक्कुरे॥

वृकारि :। पुं० कुक्कुरे॥

वृकी। स्त्री० पाठायाम्॥

वृकोदर :। पुं० भीमाख्यपाण्डवे। भीमसेने॥ यस्तीक्ष्णं वृकीनाम जठरेहव्यवाहनः। मयोदत्तः स

नारिकेलस्य समाषैर्मुद्गैस्तिलैर्यवैः । शृतशीतपयः सेकः फलपुष्पसमृद्धये ॥ १६ ॥ तद्ध्वर्यप्रयोगः । आविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम् । सक्तुप्रस्थो जलद्रोणो गोमांसस्तुलया सह ॥ सप्तरात्रोषितैरेतैः सेकः कार्यो वनस्पतेः । वल्लीगुल्मलतानाञ्च फलपुष्पाय सर्वदा ॥ १८ ॥ अथ गोलानां बापन विधानम् । वासराणि दश दुग्धभावितं बीजमाज्ययुतहस्तयोजितम् । गोमयेन बहुशो विरूक्षितं क्रौडमार्गं पिशितैश्च धूपितम् ॥ मांससूकरवसासमन्वितं रोपितञ्च परिकर्मितावनौ । क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥ २० ॥ अथ तिन्तिडीविधानम् । तिन्तिडी त्वपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः । पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥ २१ ॥ अथ कपित्थवल्लीकरोपणम् । कपित्थवल्लीकरणाय मूलान्यास्फोतधात्रीधवबासिकानाम् । पलाशिनीवेतससूर्यवल्लीश्यामातिमुक्तैः सहिताष्टमूली ॥ क्षीरे शृतेऽप्यनया सुशीते ताले शतं स्थाप्य कपित्थबीजम् । दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्य ॥ हस्तायतं तद्विगुणं गभीरं खात्वावटं प्राग्जलापूर्णम् । शुष्कप्रदग्धं मधुसर्पिषा तं प्रलेपयेद्भस्मसमन्वितेन ॥ चूर्णीकृतैर्माषतिलैर्यवैश्च प्रपूरयेन्मृत्तिकयान्तरस्थैः । मत्स्यामिषाम्भःसहितञ्च हन्याद्यावद्घनत्वं समुपागतं तत् ॥ उप्तञ्च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलेन सिक्तम् । वल्लीभवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति ॥ २६ ॥ अथान्यविधारोपणम् । शतशोऽङ्कोठसम्भूतफलकल्केन भावितम् । एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा ॥ वापितं करकाम्भःश्रमृदितं पललग्नकाम् फलभारान्विता सद्यो भवतीति किमद्भुतम् ॥ २८ ॥ श्लेष्मातकारोपणम् । श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत् प्राज्ञः । अङ्कोलविज्जलाद्भिश्छायायां सप्तकृत्वैवम् ॥ माहिषगोमयघृष्टान्यस्य करीषे च तानि निक्षिप्य । करकाजलमृद्योगे न्युप्तान्यह्ना फलकराणि ॥ वृक्षारोपणस्य घटश्चाथ । भुवमृदुं तु विशाखागुरुमं श्रवणं तथाश्विनं हस्तम् । उक्तानि दिव्यदृष्टिभिः पादपसंरोपणे भानि ॥ ३१ ॥ इति ॥

वृक्षरुहा । स्त्री॰ वृक्षरुहायाम् । वृक्षमारोहतीति तथा ॥

वृक्षारोपकः । त्रि॰ वृक्षाणामारोप

वितरि ॥

वृषार्दा । स्त्री॰ महामेदायाम् ॥

वृषालय : । पुं॰ स्वर्गे । पक्षिणि ॥

वृषाश्रयी । पुं॰ मृद्रोणके ॥

वृषेशय : । पुं॰ विड़ाले ॥ वृषे शेते । शीङ्॰ । अधिकरणे शेतेरित्यच् । शयवासवासिष्वकालादित्यलुक् ॥

वृषोत्पल : । पुं॰ कर्णिकारे ॥

वृजन : । पुं॰ केशे । न॰ पापे ॥ आकाशे । वृणक्ति॰ मुच्यतेऽसौ । वृजीव र्जने । कृपृवृजीत्यादिनाक्यु : ॥

वृजिन : । पुं॰ केशे । न॰ कल्मषे । रक्तचर्मणि ॥ कर्मफले । धर्माधर्मरूपसंसारफलकर्मणि ॥ पापवत्दुःखस्याप्यनिष्टफलत्वात् ॥ त्रि॰ कुटिले । वक्रे । भुग्ने । वृ स्त्री॰ । वृजी : किरति॰ इनच् ॥

वृजिनविद्॰ द् । त्रि॰ दु:खकारि ॥

वृत : । त्रि॰ वृते । व्यावृत्ते । कृतवरणे ॥ स्वयंवरादौस्त्रीकृतवरादौ ॥ नियतेऽस्य । वृञ् वरणे । क्त : । आवृते ॥

वृतक्रोधा । स्त्री॰ देवदाल्याम् ।

वृतपथा । स्त्री॰ पुत्रदाल्यामोषधौ ॥

वृतपुत्रा । स्त्री॰ वृतपथायाम् ॥

वृति : । स्त्री॰ वरणे । वेष्टने । वाटे । माङ्गृतियामोघमसिद्धिविधयेक्ष सल्कशाखावरणे ॥ वरणम् । वृञ् ॰ । क्तिन् ॥ गोपने ॥



वृतिङ्कर : । पुं॰ विकङ्कतवृक्षे ॥ त्रि॰ वृतिकारके ॥

वृतिस्थ : । पुं॰ सरटे ॥ त्रि॰ वृतौतिष्ठति ॥

वृत्त : । पुं॰ कूर्मे पुं॰न॰ पद्ये यथा । पद्यं चतुष्पदीतच्चवृत्तं जातिरितिद्विधा । वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृताभवेत् ॥ वृत्ते ॥ चारित्रे । वेदबोधिताचारस्य परिपालने ॥ छन्दसि । छन्दोभेदे । यथा । वृत्तमोदयन्तुनाम शीरसौरवीरसौगुरुलघु । यथा । चित्तवृत्तकीलयाविस्तगंरम्यदेवक पविम्मलोपराधमानसस्यबिलासस म्पदाकलाकुतूहलेन । य : समंत्र आह्वनाश्रमे : सुराङ्गनानिभे : सुखंसमेत्यविभ्यदक्षसाधिकपद्म कोषषट्पद : समेतदाह्व ॥ त्रि॰ अधीते ॥ चेरभ्ययनिपूजन्निति निपातित : । वृत्तं व्याकरणम्॰ अधीतमित्यर्थ : ॥ अतीते । अतिवर्तुले । मृते । स्रते । दृढे । वर्त्तते स्म॰ वृत्यतेऽस्मात् । वृतुवर्ते । गत्यर्थेति क्त : ॥ वर्त्तनम् । वृतुवर्त्तनेवरणे वा । भावेक्त : ॥

वृत्तकम् । न॰ गद्यभेदे ॥ तल्लक्षणोदाहरणे यथा । अकठोराऽक्षरंस्वल्प समासंवृत्तकं मतम् ॥ यथा । सन्नि पयाधामसेवकगतांगति : परमपुरु ष : पुरुषोत्तमोदयाद्दानवमरेयभृ

धरसुधारसधामपरमभिरामममजस्व जीवितमये ॥

वृत्तान्त : । पुं॰ वार्त्तायाम् । प्रवृत्तौ । उदन्ते । समाचारे ॥ यथा । अतीतजन्मवृत्तान्तं वाल्ये प्राये पश्यन्ति । ऐहिकं यौवनेऽन्यो तुत पक्षीभाविकोच्यते । वार्त्तायामश्रुतिरात्म्याधिकाचेतिसामौ । प्रभेदे । विधिवे ॥ प्रक्रियायाम् । कार्त्स्न्ये । प्रस्तावे । अवसरे ॥ वृत्तोऽनुयत्नीयोगविपर्ययोऽन्त : समाप्तिर्यस्य । वृत्तोन्तोऽस्य॰ वृत्तस्यान्तइति वा । भावे ॥

वृत्तावृत्तम् । न॰ मात्रावृत्तान्तरे ॥ तल्लक्षणोदाहरणे यथा । वृत्तमचतुष्पाद्गणनिर्मितपदांचलधुविरामं भवतियदि । नागाधिपनिगदित मखिलसुमङ्गलवृत्तावृत्तमिदंविपदि ॥ यथा । हरितापदनेक : स्फुरतिविवेकस्तपसिमनोनियतं भवति । यावन्नपदहरिपीनयनात्सततोऽखिलसुभगं नविद्योतयति ॥

वृत्ति : । स्त्री॰ व्याख्यामयन्थविशेषे । विवरणे ॥ आजीवे । वर्त्तने । कृष्यादिजीवने । अनुष्ठेयायांजीविकायाम् ॥ कौशिक्यादौ ॥ यथा । भारतीसात्वतीचैवकैशिक्यारभटीतथा । चतस्रोवृत्तयश्चैतायासुनाट्यंप्रतिष्ठितमितिभरत : । शृङ्गारेकैशिकीवीरेसात्वत्यारभटीपुन : । रसेरौद्रेचबीभत्सेवृत्ति : सर्वत्रभारती । चतस्रोवृत्तयोह्येता : सर्वनाट्यस्यमातृका : ॥ प्रवर्त्तने ॥ विभृतौ ॥ व्यवहारे । वर्त्तते(ऽ)नया । वृतुवर्त्तने । स्त्रियांक्तिन् । प्रमाणविपर्ययविकल्पनिद्रास्मृतिषु पञ्चविधासु ॥ वृत्त्यादिवृत्तीनाम विषयत्वेनान्तर्भाव : ॥ अथ सन्निकृष्टे न्द्रिये । इन्द्रियाणांव्यापारे । विषयाकारवृत्तिपरिणामे ॥ वृत्तीनामागमव्यादयं यत्तांसूचयतिपतञ्जलि : । वृत्तय : पञ्चतय्यक्लिष्टाक्लिष्टाइति । वृत्तयश्चित्तस्यपरिणामविशेषा : । रागद्वेषादिक्लेशरूपा : ॰ अशुरवृत्तय : क्लिष्टा : । रागादिरहितादैववृत्तयोऽक्लिष्टा : । यद्यपिपञ्चस्वेवक्लिष्टानामक्लिष्टानामन्तर्भाव : ॰ तथापिक्लिष्टाएवनिरोद्धव्याइतिमन्दबुद्धिंबारयितुंताभि : सहाक्लिष्टाउदाहृता : । नामधेयलक्षणाभ्यांवृत्तीर्विभजयितुंसूत्रपट्कमाह । प्रमाणविपर्ययविकल्पनिद्रास्मृतय : । प्रत्यक्षानुमानागमा : प्रमाणानि । विपर्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठम् । अतद्रूपप्रतिष्ठम्॰ तस्मायंरूपंयत्तद्रूपं मतस्मिन्रूपेप्रतिष्ठति॰ तस्मार्थस्य यत्पारमार्थिकंरूपं नतत्प्रतिभा

पित ॥ वृन्ताकंस्वादुतीक्ष्णोष्णंकटु पाकमपित्तलम् । ज्वरवातबलासघ्नं दीपनंशुक्रलंलघु ॥ तद्बालंकफपित्तघ्नंवृद्धंपित्तकरंगुरु ॥ वृन्ताकंपित्तलंकिञ्चिदङ्गारपरिपाचितम् । कफमेदोऽनिलामघ्नमत्यर्थं लघुदीपनम् । तदेवहिगुरुस्निग्धं सतैलंलवणान्वितम् ॥ अपरंश्वेतवृ न्ताककुक्कुटाण्डसमंभवेत् । तदर्शः सु विशेषेणहितंहीनंचपूर्वत : ॥ पूर्वत : स्मृतात् ॥ भोजनंधिगवृ- न्ताकंवृन्ताकंधिगवृन्ताकम् । स्थूलं धिगतैलाढ्यं सतैलंधिगरामठम् ॥ स र्वेषांशाकजातीनांवृन्ताकंशाकना यकम् ॥

वृन्ताकी । स्त्री० वार्त्ताक्याम् ॥

वृन्तिका । स्त्री० वृन्तितायाम् । कटु क्याम् ॥

वृन्द : । पुं० दशार्बुदे । शतकोटौ । महार्बुदे । सङ्घे ॥ न० समूहे ॥ वृन्दारी वृषभन्चि । वृन्दादयश्चेतिसाधु : ॥

वृन्दा । स्त्री० तुलस्याम् ॥ जलन्धरस्य पत्न्याम् ॥ केदारराजकन्यायाम् । राधापीडशनामान्तर्गतनामवि शेषे ॥

वृन्दार : । वि० मनोज्ञे ॥

वृन्दारक : । पुं० अमरे । देवतायो- म् । सुरे ॥ प्रशस्तंवृन्दंयस्यस : । शृङ्गवृन्दाभ्यामारकन् । स्त्रियांतुत कापुत्रिकावृन्दारकाणांवेतिवक्तव्य मिति० वृन्दारका० वृन्दारिकेत्युभ यम् ॥ यूथपतौ ॥ यथा । वृन्दा रक : सुरश्रेष्ठे मनोज्ञे यूथपातरी तिव्याडि : ॥ त्रि० मनोज्ञे ॥ श्रेष्ठे ॥

वृन्दावनम् । न० स्वनामाप्रसिद्धे तीर्थविशेषे ॥ वृन्दावनेकेशवास मासाक्षीवदेवता । भूतैर्भैरव सबसर्वसिद्धिप्रदायक : ॥ इ त्यागम : ॥ वृन्दायत्रतपस्तेपेतत्तु वृन्दावनंस्मृतम् । वृन्दयाक्रीडिता क्रीडावनंसुविस्ततम् ॥ इतिपु राणम् ॥ वृन्दावावनम् ॥

वृन्दावनेश्वरक : पुं० श्रीकृष्णे ॥

वृन्दावनेश्वरी । स्त्री० राधायाम् ॥

वृन्दिष्ठ : । त्रि० अतिवृन्दारके ॥ अय मेषामतिशयेनवृन्दारक : । इष्ठन् । प्रियस्थिरेतिसाधु : ॥

वृन्दीयान् । त्रि० वृन्दारकतरे ॥ अय मनयोरतिशयेनवृन्दारक : । ईयसु नि० प्रियस्थिरेतिवृन्दारकस्यवृन्दा- देश : ॥

वृश : । पुं० आर्द्रके ॥ मूषे ॥ वृषौ ति ॥ वृश० । जनिदृश्यादिनाश क् ॥ उन्दुरौ ॥

वृशा । स्त्री० औषधीविशेषे ॥

वृश्चिक : । पुं० अलौ । द्रुणे । विच्छू० इ० भा० प्र० । वृश्चिकविषस्यलक्षणं

स्याम् । चक्रावस्याम् । सुदर्शना याम् । पुरातो॰द्र॰मौ॰मा॰ ॥ या स्नुपस्याम् ॥

वृषपर्वा । पुं॰ भक्तसूक्ष्मे । शम्भौ । दैत्ये ॥ दैत्यप्रभेदे । शृङ्गारिणि । शरीरे ॥ वृषपर्वाभिधर्मास्यस्य ॥

वृषभ: । पुं॰ श्रेष्ठे ॥ गवि । हषे । योषधीभेदे । शृङ्ग्याम् ॥ वर्षति मूर्च्छयभूमिसिञ्चति । इषु॰ ३ । यत्तिद्धिविभ्यात्किद्वित्यभच् । वार्द्धिनि । वर्णरश्मे ॥

वृषभगति: । पुं॰ रैविशाखे । शम्भौ । वृषभे गतिर्यस्य ॥

वृषभध्वज: । पुं॰ महेश्वरे । शिवे । वृषभोध्वजम्‌चिह्नमस्य ॥

वृषभाक्ष: । पुं॰ श्रीकृष्णे ॥ सर्वकामाभिवर्षणेभक्तिपोषकत्वात् । बहुप्रीहाविति पच॰ । वृषभोधर्मोदृष्टिरस्यशी ।

वृषभाक्षी । स्त्री॰ इन्द्रवारुण्याम् ॥

वृषभानु: । पुं॰ सुरभानुपुत्रे । राधिकापितरि ॥

वृषभासा । स्त्री॰ अमरावत्याम् ॥

वृषय: । पुं॰ आश्रये ॥ वृषोति । वृज् वरणे । वृषो 'युकृदुकोचेतिक यन्॰धातो सुगागमस्य ॥

वृषल: । पुं॰ रस्नगे ॥ शूद्रे । चन्द्रगुप्तनृपे ॥ वाजिनि । तुरगे । धवा सिके ॥ वृष्यते॰वर्षतिवा । वृषु॰ । वृषादिभ्यश्चिदितिकल: 'वृष धर्मं लुनातिवा । लूञ्॰ । चन्येष्वपीतिड । वृषलातिवा । ला॰ । वा: ॥ वृषोहिभगवान्धर्मस्तस्य य: कुरुतेह्यलम् 'वृषलतविदुर्देवा स्तस्मात्सर्मनवीपयेत् ।

वृषलपति: । पुं॰ शूद्रे॰चोराणांपति ।

वृषलवृत्ति: । पुं॰ शूद्रोपक्लृप्तवृत्तौ ॥

वृषली । स्त्री॰ शूद्रायाम् । जातित्वान्ङीष् ॥ स्त्रीमात्रे ॥ निवलावक्षुर्वंसि । वृषलन्तीचपलयतिभर्त्तारमिति॰वृषली॰ब्राह्मणक्षपरिणीतावाह्मण्यपिवृषलीति॰श्राद्धभुग् वृषलीतल्पमिस्यवचक्षुर्दभट्ट: ॥ वन्ध्यातुवृषलीज्ञेया॰वृषलीतुमृतप्रजा । अपराजवृषलीज्ञेयाकुमारी॰ रजस्वला ॥ पितुर्गेहेचविद्यांतायांरजस्वलायांकन्यायां ॥ यथाऽविवाद्यपये । पितुर्गेहेचयाकन्या रज: पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्या: साकन्यावृषलीस्मृता ॥ यस्तुतांवरयेतृकन्यांब्राह्मणोत्त्वानदुर्वल: । अश्राद्धेयमपाङ्क्तेय तंविद्यादवृषलीपतिमिति ॥ स्वपतिं परित्यज्यपरपतिगामिन्याम् । यथा । स्वपतिंपरित्यज्यपरपतिं॰वृषायते । वृषलीसाहिविज्ञेयानशूद्रीवृषलीभवेदिति ।

धर्मार्थोयाकृतिरस्य । वृषशब्दस्ता द्यर्थे । आकृतिराकारः शरीरम् । वृषार्थधर्मार्थाकृतिः शरीरमस्येति ॥

वृषाङ्कः । पुं॰ शङ्करे ॥ साधौ ॥ वृषः चक्षश्चिह्नमस्य ॥ भल्लातके ॥ मषजके ॥

वृषाञ्जनः । पुं॰ डमरुवाद्ये ॥ द्र॰ श॰ र॰ सी ॥

वृषाश्वग । पुं॰ शिवे ॥ द्र॰ चि॰ च ॥

वृषाण्कः । पुं॰ महाकाले ॥ द्र॰ चि॰ च ॥

वृषाधिपः । पुं॰ शक्रपते ॥ वृषस्य राशिविशेषस्याधिपः ॥

वृषान्तकः । पुं॰ जनार्दने ॥ विष्णौ ॥

वृषायणः । पुं॰ चटके ॥ द्र॰ श॰ सी॰ ॥

वृषासनः । पुं॰ शिवे ॥ वृषोधर्मो यद् आसनंयस्य ॥ वृषरूपधासने ।

वृषाहारः । पुं॰ बिडाले ॥ वृषीम् पिक्षाहारोऽस्य ॥ द्र॰ श॰ सी॰ ॥

वृषी । पुं॰ मयूरे ॥ द्र॰ श॰ सा॰ ॥

वृषी । स्त्री॰ यतीनामासने ॥ प्रतिपिष्टरे ॥ वर्षतिसुखम् । वृषु॰ । इगुपधेतिकः । गौरादिः ॥

वृषोत्सर्गः । पुं॰ श्राद्धादौवत्सतरी



चतुष्टयसहितत्रिशूलचक्राङ्कितवृषत्यागे ॥

वृष्टः । त्रि॰ सिक्ते ॥ वृषेः क्तः ॥

वृष्टिः । स्त्री॰ वर्षे । मेघाज्जलपतने । वर्षणे । वर्षणम् । वृषु॰ । स्त्रियांक्तिन् ॥ भाव्याख्यायाम् तुष्टौ ॥

वृष्टिनी । स्त्री॰ अल्पमर्षिकायाम् । सूक्ष्मैलायाम् ॥ त्रि॰ वृष्टिनाशके ॥

वृष्टिजीवनः । पुं॰ देवमातृकदेशे । वृष्टिर्जीवनंयस्य सः ॥ वृष्ट्याजीवनंयत्रवा ॥

वृष्टिप्रमाणम् । न॰ मेघाज्जलपतनेयत्तायाम् ॥ यथा । द्रोणोपलनिमित्तेन भ॰ चीव्याढकानिपञ्चभिः । पञ्चद्युतानवाभिः क्षमितेनाढकप्रमस्थः ॥ इतिवराहोक्तौवृष्टेराढकद्रोणप्रमाणपरिमाणंवराहयाथ । चाढकाश्चतुरोद्रोणमयांविद्यात्प्रमाणम् । धनुः प्रमाणमेदिन्यांविद्याद्रोणाभिवर्षणम् ॥ समविंशाङ्गुलानाहे द्विचतुष्काङ्गुलोच्छिते । भाण्डे वर्षतिसम्पूर्णे॰ ज्ञेयमाढकवर्षणम् ॥ तथाचाचार्यः । एतद्विशालंरुपढकमधिकस्याम्बुप्रमाणनिर्देशः । पञ्चाशत्पलमाढकमनेनमिनुयाज्जलंपतितमिति ॥

वृष्टिभूः । पुं॰ भेके ॥ वृष्टौभवति ।

भू० । भुव : संज्ञान्तरयोरिति-
क्विप् ॥

वृष्णि : । पुं० यादवे ॥ मेषे ॥ श्रीकृ
ष्णे ॥ वर्षति । वृषु० । सृवृषि
भ्यां क्किदितिनि : ॥ त्रि०पाषण्डे ॥
चण्डे ॥

वृष्णिगर्भ : । पुं० श्रीकृष्णे ॥ वृष्णि
योगर्भो यस्य : ॥

वृष्य : । पुं० माषे ॥ न०वाजीकर
णे ॥ त्रि०शुक्रवृद्धिकारकौषधा
दौ ॥ वृष्यते । वृषु० । विभाषाकृ
वृषोरितिक्यप् । पक्षे ण्यत्तु०व
र्षम् ॥ वृषायहिते ॥ वृषायकामु
सुकायहितम् । खलयवमाषेति-
यत् ॥

वृष्यकन्दा । स्त्री० विदार्याम् ॥

वृष्यगन्धा । स्त्री० वृद्धदारके ॥

वृष्यगन्धिका । स्त्री० अतिबलायाम् ॥

वृष्यवल्लिका । स्त्री० विदार्याम् ॥

वृष्या । स्त्री० ऋद्धिनामौषधौ ॥ शता
वर्याम् ॥ आमलक्याम् ॥

वृसी । स्त्री० व्रतिनामासने ॥ ब्रह्म
चार्याद्यासने ॥ वृ सम्भ : सीदन्त्य
स्याम् ॥ पृषोदरादित्वाद्वृ वच्छ
ब्दस्य०वृ०आदेश : । अन्येष्वपीत्य
धिकरणे ड : ॥

वृहच्चक्षु : । पुं० महाचक्षुशाकिपक्षि
विशेषे । दीर्घपादे । कुलङ्क०-
भा० ॥

वृहच्छिरा : । पुं० भीजपूरे ॥

वृहच्छल्का : । पुं० चिङ्गटमत्स्ये ॥

वृहच्छुक : । पुं० दार्वाघाटे । कठ
कोरका०कृतिख्याते खगे ॥

वेकट : । पुं० वैकटिके । मणिकारे ।
मणिधारा०कृ०भा०प्र०भेकटी०कृ०
गौ०देशभाषाप्रसिद्धमत्स्ये ॥ यू
नि । आततायिन्ये ॥ विदूषके ॥

वेग : । पुं० जवे । रंहसि । रये ।
स्यदे ॥ प्रवाहे । घोषे । धाराया
म् ॥ किम्पाके । महाकालफले ॥
रेतसि ॥ मूत्रादिप्रवृत्तौ ॥ यथा ।
वेगान्नधारयेज्जातु मिण्मूत्रपवनोद्
गु धस् ॥ अपिच । वेगरोधानम
र्यादीस्त्यागवद्गोधवेगत : ॥ सुभ
ग । स्वभावत : प्रवृत्तानांमलादी
नांजितोविभु : । नवेगान्धारयेद्वी
र : कामादीनान्धारयेदिति ।
पृथिव्यादिचतुष्टयमनोवृत्तौसंस्का
रे । वेजनम् । वेजिभयचलन
यो : । घञ् ॥

वेगनाशन : । पुं० श्लेष्मणि ॥

वेगवान् । पुं० ईश्वरे ॥ त्रि० वेगि
नि ॥ वेगोजवोऽस्यास्ति । मतुप् ॥

वेगवती । स्त्री० अर्द्धसमवृत्तभेदे ॥
यथा । विषमेप्रथमाःपरतोनन्दोष
कमेवहिवेगवतीस्यात् ॥ यथा ।
स्मरवेगवतीव्रजरामाकेशववंशरवै
रतिमुग्धा । रभसान्नगुरून्गणयन्ति

वति । अजिनस्तरीभ्यो निर्जितगुः । अजेर्वी ॥
वेणुकम् । न॰ तोत्रे । गजस्यतोदनदण्डे । वेणुना निर्वृत्तम् । निर्वृत्ते अक्षद्यूतादिभ्य इति ठक् । इसुसुक्तान्तात्कः । सञ्ज्ञापूर्वकत्वान्नवृद्धि: ॥
वेणुकर्करः । पुं॰ करीरवृक्षे ॥
वेणुजः । पुं॰ वेणुयवे ॥
वेणुदारी । पुं॰ नरकासुरे असुरात्मजे ॥
वेणुध्मः । पुं॰ वैणविके । वंशीवादके ॥ वेणुं धमति । ध्मा॰ आतोऽनुपसर्गे कः ॥
वेणुपत्री । स्त्री॰ वंशपत्रीतृणे ॥
वेणुयवः । पुं॰ वंशतण्डुले । वंशयवे ॥
वेणुवादः । पुं॰ वैणिके ॥
वेणुबीजम् । न॰ वंशयवे ॥
वेण्वा । स्त्री॰ तीर्थविशेषे ।
वेण्वासङ्गमः । पुं॰ तीर्थविशेषे ॥
वेतः । पुं॰ वेत्रे । इ॰ रा॰ नि॰ ।
वेतनम् । न॰ कर्मकरस्य॰ भृतौ । कर्मण्यायाम् । विधायाम् । भृत्यायाम् । निर्वेशे । कासकराद्य॰ इ॰ भा॰ । जीवनोपाये । आजीवे ॥ रूप्ये ॥ वीयतेऽनेन । वीगत्यादौ । वीपतिभ्यां तनन् ॥
वेतसः । पुं॰ लताविशेषे । रथे । अम्लपुष्पे । विदुले । शीते । वानीरे । वञ्जुले । वेत॰ इ॰ भा॰ ॥ अत्र भावप्रकाशः । वेतसो विदुलो नम्रो वञ्जुलो दीर्घपत्रकः । नादेयो गन्धपुष्पश्च वानीरो वासमूतस्तथा ॥ नदीकूलप्रियस्तथ्य: सुशीतो घनपुष्पकः । जलजातस्तथा नीरो विदुरो जलवेतसः ॥ वेतसः शीतलो दाहशोथार्शोयोनिरुगश्मनाम् । हन्ति वीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलान् ॥ अयनम् । इण्॰ । नपुंसकइति ता: । पाविकल्पस्य॰ इतत्वानं॰ अति । गोपत्कर्मणि । आतोऽनुपेति कः ॥ यथा । जयतो । वेञ् । वेञस्तद्वेत्यसच् । वातुलकादास्वन ॥
वेतसाम्लः । पुं॰ अम्लवेतसे ॥
वेतसी । स्त्री॰ वेतसे ॥
वेतसीका । स्त्री॰ तीर्थविशेषे ॥
वेतस्वान् । त्रि॰ बहुवेतसदेशे ॥ वेतसाः सन्त्यत्र । कुमुदनडवेतसेभ्यो ड्मतुप् । मादुपधायाश्चेति वः ।
वेतालः । पुं॰ द्वारपाले ॥ भूताधिष्ठितशवे ॥ चक्राकारभङ्गाभासमाने भूतविशेषे ॥ शिवगणाधिपविशेषे ॥
वेत्ता । त्रि॰ वेदितरि । ज्ञातरि ॥ वेत्ति । विद॰ । तृच् ॥
वेत्रः । पुं॰ वेते । वैणिदण्डे । सुदण्डे ॥ वीयते । वीगत्यादिषु । गुधवीपचिवचौत्यादिना॰ त्रः ॥ वं

तान् । अश्रुनिवचसानुप्राप्तोवाऽङ्-
माघेणापिनार्चयेत् ॥ श्रुतहीनम
धीतंयच्चैतनासुचरक्षवेत् । श्रुतन्तु
केवलमपिसमुद्धारायकल्पते । यो
धीतेनार्थंतत्त्वज्ञस्तस्यसंहारवाग्यथा
। भारवाहीसभूतश्च: केवलंकं गभा
गभवेत् ॥ तस्मादयंपरिज्ञानेयत्न:
कार्योविजानता । ज्ञानंकर्मचसंयु
क्तंयुक्तार्थंकथितंमया ॥ अधीतंश्रुत
संयुक्तंतयास्विदंनकेवलम् । अधीत्य
यत्किञ्चिदपिसदर्थमवबुध्य च । स्व
र्गलोकमवाप्नोतिधर्मानुष्ठानविद्बु
ध : इति । अपिच । वेदार्थज्ञोन
यंजन्मत्यासर्वेषाध्ययनंद्विज : । कुर्व
न्स्वर्गमवाप्नोतिनरकंतुविपर्यये ॥ इ
तिव्यास : ॥ मनु : । वेदशास्त्रा
र्थतत्त्वज्ञोयत्रतत्राश्रमेवसेत् । इहै
वलोकेतिष्ठन्सब्रह्मभूयायकल्पते
इति ॥ व्यास : । समुच्चितंसोर्थ
मपिश्रुताधीतंविधिव्यसी । चतुर्णा
मपिवेदानांकेवलाध्ययनाद्विजा : ॥
अल्पबोधायविन : श्रेष्ठायंधिभ्योधा
रिणोवरा : । धारिभ्यस्त्वर्थतत्त्वज्ञा
स्तेभ्योप्यध्यात्मचिन्तका : ॥ पुस्त
केवेदलिखननिषेध : पाद्मोत्तरख
ण्डे ११० ऽध्यायेयथा । वेदस्यलिख
नंकृत्वाय : पठेद्ब्रह्महाभवेत् । पुस्त
कंवापिवेश्मस्थंजायतेवाभवेदशुभमि
ति ॥ विदन्त्यनेनधर्मम् । विदज्ञा



ने । इत्यर्थे तिघञ् ॥ वेदार्थवेदन
हेतुत्वाद्व्याकरणे ॥ व्याकरणेनहि
पदादिविभागशस्त्वग्वेदादयोज्ञाय
न्ते ॥ अनुभवे । भावेघञ् ॥ इत्तौ
॥ केशवे ॥ इन्द्रियादिदेवताप्रकाश
के । मौनमरोराचक्षेदेनभगवदा
र्च्यमितिन्यायशास्त्रम् ॥

वेदगर्भ : । पुं० अब्जयोनौ । ब्रह्मणि
॥ ब्राह्मणे । वेदोगर्भेयस्य स : ॥

वेदगर्भा । स्त्री० दुर्गायाम् । वेदजन
यित्र्याम् ॥ अव्यक्तप्रभूतस्यमिश्र
स्तितमेतदर्थ्यं दृश्यादिश्रुते : । ब
सैयाप्नापराश्रितिर्वेदसे श्रापुरातनी
। ऋग्यजु : सामरूपेणसर्गादौसंप्रव
र्ततइतिकूर्मपुराणेद्वादशाध्यायेश्री
भगवत्युक्तिषु । तथाचचत्वारोवेदा:
साङ्गा : सरहस्याबहुधाभिन्ना : । ए
कशतमध्वर्युशाखा : । सहस्रवर्त्मा
सामवेद : । एकविंशतिधाबाह्वृच्य
म् । नवधाथर्वणोवेदइतिमहाभाष्य
म् ॥

वेदज्ञ । त्रि० वेदपारगे । वेदंजानाति
। ज्ञा० । आतोनुपसर्गेइतिक : ॥

वेदनम् । न० अनुभूतौ । संवेदने ।
विदज्ञाने । ल्युट् चेति ल्युट्क्लीब
त्वम् ॥ विचाहि ॥

वेदना । स्त्री० ज्ञाने । दु : खे । पी
डायाम् ॥ विदवेदनाख्याननिवा
सेषुचुरादि : । ण्यासश्रन्थेतियुच् । अ

दः। विदज्ञाने। चहिवन्दिविदिभ्य
श्चेतिशाच्यमितिसुच्॥

वेदनास्कन्धः। पुं॰ विषयज्ञानप्रपञ्चे।
विज्ञानस्कन्धजन्ययोः सुखदुःखयोः
॥ याप्रियाप्रियानुभवविषयस्पर्शे सुख
दुःखतद्रूपितविशेषावस्थाचित्तस्य
जायते॰ सवेदनास्कन्धइतिबाचस्प
तिः। सुखादिप्रत्ययोवेदनास्कन्ध
इत्यानन्दगिरिः॥

वेदनिन्दकः। पुं॰ नास्तिके। वेदनि
न्दाकरे॥ वेदंनिन्दति। णिदिकुत्सा
याम्। ण्वुल्॥

वेदपारगः। पुं॰ मन्त्रब्राह्मणात्मकवे
दाध्यायिनि॥ त्रि॰ अवगतवेदार्थ
तत्त्वे॰ ज्ञानिनि॰ सन्यासिनि॥
वेदस्यपारंगच्छति। गम्‌ड॰। अ-
न्तात्यन्तेतिगमेर्डः॥

वेदभागः। पुं॰ मन्त्रब्राह्मणयोः॥
पूर्वंतदाहृतेपुरुषेत्यादिषु। तेयथा।
हेतुनिर्वचनंनिन्दाप्रशंसासंशयोवि
धिः। परकृतिः पुराकल्पोव्यवधारण
कल्पनेतिहेत्वादयः॥

वेदमाता। स्त्री॰ गायत्र्याम्। सर्वेशा
स्त्रादिजाः प्रोक्ताःनचवेदमयावेद्या
वा। उपासतेब्रह्मादिदेवींगायत्रीवे
दमातरम्॥ अपिच। योधीतेऽहन्य
हन्येतांसावित्रींवेदमातरम्। वि
ज्ञायार्थंब्रह्मचारीसयातिपरमांगति
मिति॥ दुर्गायाम्॥

वेदमार्गः। पुं॰ वेदविहितेपथि॥ य
था। जलौघैर्निरभिद्यन्तसितवेदवर्त्मे
तोश्वरे। पाखण्डिनामसद्वादैर्वेद
मार्गाःकलौयथेतिश्री॰। अपिच।
एतस्माद्वेदमार्गाद्विषदन्यद्विषणाय
ते। तत्पुद्रकर्मविप्रैर्यंरौद्रंपौच
विवर्जितमितिव॰पु॰॥

वेदवती। स्त्री॰ कुशध्वजराजकन्याया
म्। विवेकख्यातीश्वर्याम्। वेद
विद्याभिमानिन्यांदेवतायाम्॥

वेदवदनम्। न॰ व्याकरणे। यथा।
योवेदवेदवदनंसदनंहिसम्यग्ब्रा
ह्म्याः सवेदमपिवेदकिमन्यशास्त्र
म्। यस्मादतः प्रथममेतदधीत्य
धीमान्शास्त्रान्तरस्यभवतिश्रवणे
धिकारीतिसिद्धान्तशिरोमणिः॥
योगिनोदान्तेप्रथमेवपाठः॥

वेदवादरतः। त्रि॰ वेदेयेसन्तिवादाः
॰अर्थवादाः॰अक्षय्यंहवैचातुर्मा
स्ययाजिनःसुकृतंभवतीत्येवमाद
यस्तेष्वेवरते। वेदार्थंसत्यार्थंनैव
सेयैतदितिमिथ्याविश्वासेमत्तस्तुष्टे॥

वेदवासः। पुं॰ ब्राह्मणे। वेदस्यवा
सोयस्मिन्॥

वेदवित्। पुं॰ कर्मब्रह्मात्मवेदार्थंवि
दि। कर्मकाण्डोपासनाकाण्डज्ञा
नकाण्डात्मकसर्ववेदार्थंविदि॥
वेदज्ञे। ऋग्वेदादयोवेदाश्चत्वारस्त
त्त्वानीतिवेदंविदन्ति॥ वेदंवेदार्थं

वेश्मनकुल : । पुं॰ गन्धमूषिके ॥

वेश्मभूः । स्त्री॰ गृहरचनावच्छिन्नभूमौ । वास्तुनि ॥ वेश्मनोभूः ॥

वेश्यम् । न॰ वेश्यालये ॥ वेशेभवः । दिगादित्वाद्यत् ॥

वेश्या । स्त्री॰ वारस्त्रियाम् । गणिकायाम् । रूपाजीवायाम् ॥ वेशेनपण्येनसम्पद्यते । कर्मवेशाद्यत् ॥ वेशोवेश्यागृहंभवा । दिगादित्वाद्यत् ॥ वेशः प्रवेशोऽस्त्यस्या । अन्येभ्योऽपीतियत् ॥ पाठायाम् ॥

वेश्यागण : । पुं॰ वेश्याचारे । वेश्यासमूहे ॥

वेश्याचार्य : । पुं॰ पीठमर्दे ॥

वेश्याजनसमाश्रय : पुं॰ । गणिकागृहे । वेशे ॥ वेश्याजनस्यसमाश्रयोवासस्थानम् ॥

वेश्यालय : । पुं॰ वेशे ॥

वेष : । पुं॰ वेशे । प्रसाधने । वस्त्रालङ्करणादिकृतशोभायाम् ॥ विवेष्टि । विष्लृव्याप्तौ । घञ् ।

वेषक : । पुं॰ कासमर्दे । पयोपस्करे ॥

वेषणा । स्त्री॰ वितुन्नके । धन्याके ॥

वेष्ट : । पुं॰ वेष्टने ॥ निर्यासे ॥ श्रीवेष्टे । सरलद्रवे । वेष्टते । वेष्टवेष्टने । घञ् ॥

वेष्टक : । पुं॰ कुष्माण्डे । पुष्पफले ॥ प्राचीरे । वृतौ ॥ न॰ उष्णीषे ॥ निर्यासे । श्रीवेष्टे ॥ त्रि॰ वेष्टनयुक्ते ॥

वेष्टनम् । न॰ कर्णशष्कुल्याम् ॥ उष्णीषे ॥ मुकुटे । वृत्तौ । गुग्गुलौ । व्याप्तने । वेष्टन॰ लपेटन॰ भू॰ आ॰ प्र॰ ।

वेष्टनक : । पुं॰ रतिबन्धविशेषे । यथा । जङ्घांपादेनसंवेष्ट्य भुजाभ्यांवेष्टयेद्यदि । कामुकःकामिनींतांत्वेवेष्टनकः स्मृतः ॥

वेष्टनवेष्टक : । पुं॰ रतिबन्धविशेषे ॥ यथा । पादद्वयेनाविभुजाभ्यांवेष्टयेद्यदि । कराभ्यांकण्ठमालिङ्ग्यवस्थोवेष्टनवेष्टकः ॥

वेष्टनिका । स्त्री॰ वेष्टनिकायाम् ॥

वेष्टवंश : । पुं॰ कण्टकवंशे ॥

वेष्टसार : । पुं॰ श्रीवेष्टे ॥

वेष्टित : । त्रि॰ वलयिते । संवीते । रुद्धे । आवृते ॥ न॰ लासके ॥ स्त्रीणांकरणान्तरे ॥ वेष्ट्यतेस्म । वेष्टवेष्टने । क्तः ॥

वेष्प : । पुं॰ जले । नीरे । पानीये ॥ विवेष्टि । विष्लृ॰ । पानीविषिभ्यः पः । इतिपः ॥

वेष्य : । पुं॰ नटे । विविधशिल्पकाकारैश्चसम्पद्यते ॥

वेष्या । स्त्री॰ गणिकायाम् ॥ विवेष्टि । विष्लृव्याप्तौ । अघ्न्यादित्वाद्यत् ॥

वेसनम् । न॰ चणकदालिचूर्णे, बेसनि ॥

वेसर : । पुं॰ सहराजे । अश्वतरे ॥

वेसवारः । पुं॰ व्यञ्जनादौसंस्कारार्थं दीयमानेहिङ्ग्वादौ । उपस्करे ॥ द्रव्याणिवेसवारस्तुनागवल्लीदलानि हि । तण्डुलाश्चलवङ्गानिमरिचानि समासतः ॥ सर्वव्यञ्जनपरिभाषायाम् । हिङ्ग्वार्द्रमरिचंजीरंहरिद्राधान्यकंतथा । क्रमेणद्विगुणंसर्ववेसवारमिमंविदुः । लोकेनवारिणासर्वं हितंपक्वगालितम् । माषयाव्यञ्जने देयकासमर्दंयतत्स्मृतम् ॥ वेसनम् । विसर्पे इति । घञ् । वेसंसर्पं वारयति॰ वृणोतिवा । वृञ्॰ । कर्मण्यण् ॥

वेहत् । स्त्री॰ गर्भोपघातिन्याम्गवि ॥ विहन्तिगर्भम् । सयस्तृपहेर्हिश्च तिप्रत्ययेनसाधुः ॥

वेहारः । पुं॰ लगधाख्यातिदेशविशेषे । यथा । वेहारेचैवश्रीहट्टे कोशलेचकलिङ्गके । चत्वारिशद्भुजाकार्या माहेन्द्रेचहिमालये॰ इतिमत्स्यसूक्त ५॰ पटलः ॥ महिषासुरमर्दिनीतिशेषः ॥

वै । अ॰ हेतौ ॥ पादपूरणे ॥ सम्बोधने ॥ विशेषे ॥ अवधारणे ॥ अनुनये ॥ प्रसिद्धौ ॥ निश्चये ॥ वाति । वागतिगन्धनयोः । ॰वीगत्यादौवा । डैः ॥

वैंशतिकः । त्रि॰ विंशत्याक्रीते ॥

वैकक्षम् । न॰ तिर्यग्वक्षोलम्बिमाल्ये ॥

वैकक्षकम् । न॰ उरस्युपवीतवत्तिर्यक्क्षिप्तमाल्ये । विशिष्टः कक्षो यस्मात्॰ विकक्षमुरस्तत्रभवम् । तत्र भवइत्यण् । स्वार्थेकन् ॥

वैकङ्कतः । पुं॰ विकङ्कते । विकङ्कतस्यावयवोविकारोवा । पलाशादित्वादञ् ॥

वैकटिकः । पुं॰ मणिकारे ॥

वैकर्णः । पुं॰ वात्स्ये ॥ विकर्णस्यापत्यम् । विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिष्विति अण् ॥

वैकर्णेयः । पुं॰ काश्यपे ॥ विकर्णस्यापत्यम् । विकर्णकुषीतकात्काश्यपइतिढक् ॥

वैकल्पिकः । त्रि॰ विकल्पेनभवे ॥

वैकल्यम् । न॰ विकलतायाम् ॥ अविवेके ॥ विकलस्यभावः । ष्यञ् ॥

वैकारिकः । पुं॰ देवानामहङ्कारभेदात्मिकाहङ्कारे ॥ देवसर्गे ॥ मन्वन्तरविशेषे ॥ सप्तस्वस्तेषां॰ येविकारानेषभूतेन्द्रियाहङ्कारबुद्धिरूपान्॰ पुरुषबुद्ध्योपासते । तान् प्रतीदमुच्यते॰ दशमन्वन्तराणीहतिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तुशतंपूर्णंसहस्रन्त्वाभिमानिकाः । बौद्धादशसहस्राणितिष्ठन्तिविगतज्वराः । पुरुषनिर्गुणंप्राप्यकालसङ्ख्यानिवर्त्तते ॥ येषांवैकृति

शरत्-द् । स्त्री॰ शायने । संवत्सरे । वर्षे ॥ शृणातिशस्यान् । शृ हिंसायाम् । शृदृभसोऽदिः ॥ ऋतुविशेषे, आश्विनकार्त्तिकयोः । वर्षाविरामे ॥ शीर्यन्तोऽस्यांपाकेनौषधयः । पूर्ववद्दिः ॥ तत्कालस्फलयथा । नरः शरत्संज्ञककालजन्माभवेत्सुकर्मामनुजस्तरस्वी । शुचिः सुशीलोगुणवान् सुमानीधनान्वितोराजकुलप्रपन्नः ॥

शरदः । त्रि॰ शरवर्षिणि ॥ शरं ददाति । डुदाञ्॰ । आतवृतिकः ॥

शरदन्तः । पुं॰ हेमन्ते ॥ शरदोन्तोऽस्मिन् ॥

शरदा । स्त्री॰ सम्वत्सरे ॥ शारदी ॥ शरदोभावुरिमलेटाप् ॥

शरदिजः । त्रि॰ शरत्कालजाते ॥

शरदुदाशयम् । न॰ शरत्कालिकसरोवरे ॥

शरधिः । पुं॰ तूणे । तूणीरे ॥ शराधीयन्तेऽस्मिन् । डुधाञ्॰ । उपसर्गेघोः किः । किस्त्वादाकारलोपः ॥

शरपर्णी । स्त्री॰ ओषधिविशेषे ॥

शरपुङ्खः । पुं॰ ग्राम्यभवी । सरफोंका॰ इ॰ भा॰ प्र॰ ओषधी । अस्य गुणायथा । शरपुङ्खोयकृत्प्लीहगुल्मव्रणविषापहः । तिक्तः कषायः कासास्रज्वरश्वासहरोलघुः ॥

शरभः । पुं॰ मृगेन्द्रविशेषे, महामृगे । अष्टापदे । महासिंहे । पर्वताश्रये ॥ अस्यलक्षणंयथामहाभारते । अष्टपादूर्ध्वनयनऊर्ध्वपादचतुष्टयः । सिंहहन्तासमायातिशरभोवनगोचरः इति ॥ शृणाति । शृ॰ । कृशृशलिकलिगर्दिभ्योऽभच् ॥ करभे उष्ट्रे । वानरविशेषे ॥ हरौ । विष्णौ ॥ शीर्यन्त्यस्मिन् । शराः शरीराणि शीर्यमाणत्वात्॰ तेषुप्रत्यगात्मतया भाति । भादीप्तौ । आतवृतिकः ॥ पतङ्गे ॥ वर्णवृत्तविशेषे ॥ यथा । शशिधरतिलककलितमिषत्कणं कलयशरभमिदमतिसुखकरणम् । कविवरसकलहृदयकृतचरणं फणिवरनरपतिवदनविवरणम् ॥ चतुरशतकृतकुसुमकलितकरधतरूपमचतुर्दशपतीमतिसमीन चितयेमधाविसंहादशलघुभिरिति यावत् । यथा । सकलकमलदृशश्चिबरगमन : पथिलवनिधिफणिपतिकृतशयनः । दनुजविजयसुरपतिनतिमुदितोहरिरपहरतुदुरिततातिमुदितः ॥

शरभङ्गः । पुं॰ गोतमवंश्ये । रामायणप्रसिद्धे । मुनिविशेषे ॥

शरभङ्गाश्रमः । पुं॰ तीर्थविशेषे ॥

शरभूः । पुं॰ पार्वतीनन्दने । स्कन्दे ॥

शरभूमिजः । पुं॰ गम्बके ॥

शरमय :। त्रि॰ शरनिर्म्मिते ॥

शरमल्ल :। पुं॰ खगविशेषे । गृध्रसङ्घे ।

शरलकम् । न॰ जले ॥

शरवणोद्भवः :। पुं॰ स्कन्दे ॥

शरवाणिः । पुं॰ शरमुखे । शरक्षेपिणि । पदातौ ॥

शरवीजम् । न॰ चातुर्के । कौतुकार्थे ।

शरव्यम् । न॰ लक्ष्ये । शरविहिंसायहितम् । उगवादिभ्योयत् । यद्वा । शरान्व्ययति । व्येञ् संवरणे । सम्प्रसारणविभ्योड : ॥

शराघात :। पुं॰ प्रचलाके । बाणाघाते ॥

शराटि :। शराडि :। } स्त्री॰ शराटिविहगे ॥

शराति :। स्त्री॰ शराली । आडिविहगे । शरं कीरमत्ति । अत॰ बल्यातिभ्यां तीष् ॥

शराभ्यास :। पुं॰ उपासने । शरशिक्षायाम् । शरस्य शरमोक्षस्याभ्यास : ॥

शरारि :। स्त्री॰ मुरगाई॰ इ॰ भा॰ प्र॰ ॥ पक्षिविशेषे । आटौ । शरं नीरमृच्छति । ऋगतौ । अच् इ : ॥

शरारु :। त्रि॰ हिंस्रे ॥ शृ घाति । शृ॰ । शृवन्द्योरारु : ॥

शरालि :। स्त्री॰ शरारिपक्षिणि ॥

शरं नीरमृच्छति । ऋ॰ । अच् : । कपिलकादित्वाल्लत्वम् ॥

शरालिका । शराली } स्त्री॰ शरालिविहगे ॥

शराव :। पुं॰ कुडवद्वयपरिमाणे चतुःषष्टितोलके । सेर॰ इ॰ भा॰ प्र॰ । मात्रिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके । सरावा॰ इ॰ भा॰ प्र॰ शरणम् । शृ॰ । कटोरप् । शृणाति वा । अच् ॥ शरं शरादृया॰ अवति । अवरक्षणे । अण्॰ अस्त्वा ॥

शरावती । स्त्री॰ रामात्मजलवस्य राजधान्याम् । नदीविशेषे ॥ पूर्वस्योत्तरपूर्वाभिमुखी॰ पश्चाद्दक्षिणपूर्वमुखी व्यवस्थितादेश : प्राग्देश : उत्तरापरश्चोव्यवस्थितस्तदुदीच्य : । तथाचोक्तम् । प्रागुदञ्चौ विभजते हंस : क्षीरोदकं यथा । विदुषां शब्दसिद्ध्यर्थं सा न : पातु शरावती ॥ शरा : सन्त्यस्याम् । मतुप् । शरादीनाञ्चेति दीर्घ : ॥

शरावर :। पुं॰ कवचे ॥ तूणीरे । यथा । शरावरौ शरै : पूर्णौ विध्वस्तौपञ्चलक्ष्मणेति रामायणम् ।

शरावाप :। पुं॰ धनुषि ॥

शरावार्द्धम् । न॰ कुडवपरिमाणे । द्वात्रिंशत्तोलके । पावसेर इ॰ भा॰ प्र॰ परिमाणे ॥

॥ वर्णवृत्तविशेषे ॥

शशिप्रभम् । न० मुक्तायाम् ॥ कुमुदे । त्रि० चन्द्रसमदीप्तियुक्ते ॥

शशिप्रभा । स्त्री० ज्योत्स्नायाम् ॥

शशिभूषण :। पुं० चन्द्रशेखरे । शिवे ॥

शशिलेखा । स्त्री० चन्द्रमस : कलायाम् । इन्दुलेखायाम् ॥ गुडूच्याम् ॥ वाकुच्याम् । सोमराज्याम् ॥ चन्द्रलेखाभिधेवृत्ते । रसालायाः प्रभेदे ॥ यथा । शर्करासम्प्रयुक्तेन घृतदुग्धयुतेन च । पटपूत्रामिखरियोदधिमिरेखेतिकीर्त्तिता ॥ शशिलेखाहिमाजध्यात्कध्यापुष्टिप्रदालघु । वातपित्तहरा श्रेष्ठा मन्दाद्यापविनाशिनी ॥

शशिलेखिका । स्त्री० शशिलेखायाम् ॥

शशिवदना । स्त्री० गायत्रीछन्द : प्रभेदे ॥ शशिवदनान्वी ॥ यथा । शशिवदनानांव्रजतरुणीनाम् । अधरसुधोर्मिमधुरिपुरैच्छत् ॥ चन्द्रसमसुखायीयैरिति ॥

शशिवाटिका । स्त्री० पुनर्नवायाम् ॥

शशिशेखर : । पुं० ईश्वरे । चन्द्रमौलौसदाशिवे ॥ बुद्धभेदे । चक्रसंवरे । वज्रधरालिनि । वज्रटीके ॥

शशीर्यम् । न० शशलोमनि ॥ शशस्यकर्णा-शशीर्षम् । शशीर्षकारकरणमितिचन्द्रगोमिसिद्धानुशा

समात्-कोषत्वम् ॥

शश्वत् । अ० आत्मप्रश्ने ॥ सहार्थे ॥ पुराकल्पे ॥ सदार्थे । नित्ये । निरन्तरे ॥ आभीक्ष्ण्ये ॥ पुनरर्थे ॥ शश्वसिगमनं वा । शश० । बाहुलकात्० वत् ॥ सहार्थे ॥

शष्कुल : । पुं० छिद्री । कर्णे ॥

शष्कुली । स्त्री० पिष्टकविशेषे । सीताकीतिख्याते ॥ यथा । समितायावृतास्त्वायालेपपीतस्वापवेलयेत् । पाचयेत्तांभर्जयेत्सिशाशष्कुलीकेनिका तुपा ॥ कर्णरन्ध्रे ॥ यथाकर्णशष्कुल्यावच्छिन्नं नभएवश्रोत्रमिति ॥ सौरी०कृ०भा०प्र०मत्स्ये ॥ तद्भवाय या । शष्कुलीयाविक्लेद्यामधुरा तुवरास्मृता । गौरादित्वान्ङीष् ॥

शष्पम् । न० नवीनतृणे । बालतृणे ॥ पुं० प्रतिभाहानौ ॥ शस्यते-शुष्यतिवा । असुविंसायाम्-शुष शोषणे वा । खष्पशिल्पशष्पेतिपो निपातनात्-षत्वञ्च ॥

शसनम् । न० परम्पराकि । यज्ञार्थपशुहनने ॥ शसु० । भाविल्युट् ॥

शस्तम् । न० शु : श्रेयसे । शिवे । क्षेमे ॥ त्रि० कल्याणयुक्ते ॥ स्तुते ॥ प्रशस्ते ॥ शस्यतेस्म । शंसुस्तुतौ । कर्मणिक्त : ॥

शस्तकम् । न० अङ्गुलित्राणे ॥

शस्ताक्षेपक : । त्रि० प्रशस्ताक्षेपात

शस्त्राङ्गः । त्रि० रक्ततनौ ॥ शस्त्रान्यस्त्रान्यस्य ॥ पुं० प्रतीतकल्पादिंद्रिदे ॥

शस्त्रम् । न० लौहे ॥ लौहायसे । अस्त्रे । आयुधे ॥ शस्त्रास्त्रयोर्लक्षणानुक्रीरित्याद्यौ शस्त्रास्त्रयोर्भेदलक्ष : । तथाहि । येनकरप्रतीनरुद्धौसत्यस्त्रमसादि । येनप्रक्षिप्तं गच्छति तदस्त्रं बाणादि इत्यनयोर्भेद : । अपिच । अस्त्रं मन्त्राभिमन्त्रितम् । अस्त्रं तद्विपरदिति । शस्त्रेऽसैन्य । मस्तुङ्गि सायाम् । दात्रौ इति न् । सर्वधातुभ्यष्ट्रनिषा । अभिधि हिंसिस्य : त्तौषा । अप्रगीतस्त्र र् आति । पैथाद्मिा शस्त्रमामस्यर्थ : । अप्रगीतमन्त्रसाध्यायास्तौ । अप्रगीतमन्त्रसाध्यगुणविधानाभिधानं शस्त्रमितियावकात्य अन्यार : ॥ पुं० खड्गे । तरवारी ।

शस्त्रकम् । न० अयसि । लौहे । शस्त्रमेव । शसि : ष्ट्रन् । स्वार्थे क : ॥

शस्त्रकर्म । न० वैद्यानांप्रधानैकर्मविशेषे । तदष्टविधंभवति । यथा । छेद्य० भेद्य० लेख्य० वेध्य० मेध्यमाहार्यं० विस्राव्यं० सीव्यमिति भेदेदात् ॥ ९

शस्त्रकोपतरु : । पुं० महापिण्डीतरौ ॥

शस्त्रजीवी । पुं० शस्त्राजीवे ॥

शस्त्रधारजीवक । पुं० शस्त्राजीवे ॥

शस्त्रपाणि : । पुं० असादिशस्त्रहस्ते ॥ आततायिविशेषे ॥

शस्त्रभृत् । पुं० शस्त्रधारिणि ॥

शस्त्रमार्ज : । पुं० असिधावके । शाणाजीवे ॥ शस्त्रं मार्ष्टि । मृज् शुद्धौ । कर्मण्यण् ॥

शस्त्रशास्त्रम् । न० धनुर्वेदसोपवेदे ॥

शस्त्रहत : । त्रि० शस्त्राघातेनमृते ॥

शस्त्रहस्त : । त्रि० शस्त्रपाणौ ॥

शस्त्राजीव : । त्रि० काण्डपृष्ठे । आयुधीये । आयुधिकी ॥ शस्त्रमाजीवति० उपजीवति । जीव० । कर्मण्यण् ॥

शस्त्राभ्यास : । पुं० शस्त्रविद्यायाम् ॥

शस्त्रायसम् । न० पिण्डायसे । शस्त्रपालरू० भा० ॥

शस्त्री । त्रि० शस्त्रविशिष्टे ॥

शस्त्री । स्त्री० छुरिकायाम् ॥ ष्ट्रन : षिद्वादृङीप् ॥

शस्यम् । न० वृक्षादिफले ॥ शस्यते । शसु० । तस्मिअसिचतौसियत् ॥ तात्पर्याद्यभिदन्त्याद्यभध्यमूकरपायभ : । सैं धान्ये ॥ यथा । शस्यं क्षेत्रगतं प्राहु : सतुषंधान्यमुच्यते । आमंवितुषमित्युक्तं स्विन्नमन्नमुदाहृतमितिस्मृति : ॥

षट्‌रेषगदस्त्वाया : शारदीयोमहोत्स
वः ॥

शारदीयमहापूजा । स्त्री० शरत्कालि
कदुर्गामहापूजायाम् ।

शारद्वतः । पुं० कृपे ॥

शारिः । पुं० स्त्री० पाशकविशेषे । द्यूत
साधने । खेलन्याम् । सारी । गु
टिका० गोट० सारि० इ० भा०
प्र० ॥ स्त्री० शकुनिकाप्रभेदे ॥ यु
द्धार्थगजपर्याणे ॥ व्यवहारान्तरे ॥
शृणाति । शॄ० । इञ् शकुनादिति
० इञ् ॥ कपटे ॥ बह्वादित्वात् प
क्षे ङीषि० शारी ॥

शारिका । स्त्री० खगान्तरे । मीनया
दायाम् । शारान्याम् । मैना० इ०
भा० ॥ शृणाति तु : खदिरहिमीना
म् । शॄ० । ण्वुल् । प्रत्ययस्थादि
तीत्वम् ॥ वीणावादनदण्डे ॥ इ०
हे० चन्द्रः ॥

शारीफलम् । न० अष्टापदे । शारिखे
लनाधारे । शारीपाशिलाधरपट्टे
। चौपड० इ० भा० शारीफाल
म० पट्टः ।

शारिफलकः । पुं० न० शारिफले ।
अष्टपीठकायाम् ॥

शारिवा । स्त्री० गोपाम् । श्यामा
याम् । अनन्तायाम् । उत्पलशा
रिवायाम् ॥ अस्या गुणाः । श्वेत
कृष्णाप्रभेदेनशारिवाद्विविधास्मृता

॥ शारिवायुगलंस्वादुस्निग्धंशुक्रकरं
गुरु । अग्निमान्द्यारुचिश्वासकासा
मविषनाशनम् ॥ दोषत्रयास्रप्रदर
ज्वरातीसारनाशनम् ॥ अपिच ।
एकं वाशारिवामूलंसर्वत्रणविशोध
नमिति ॥ शरणम् । शॄ० । कृशृ
स्यादिना० इत्‌च् । शारिरस्यस्थाः
। अन्येष्वपीतिवः ॥

शारिशृङ्खला । स्त्री० पाशकविशि
ष्टे । पक्षस्याम् ॥ यथा । युक्तरी
तिस्थितोयन्त्रं पक्षमीशारिशृङ्
खला । नयपीठीचाष्टकाष्ठी० नयः
स्थाध्यायपुरषः ॥ एतेपाशकभेदाः
स्युः । पंक्तिशालाकेशाविच । इति
शब्दरत्नावली ॥

शारी । स्त्री० शारिपदार्थे ॥ शुभाया
म् ॥

शारीरः । पुं० जीवे ॥ म० हषि ॥ त्रि०
देहजे । शरीरेभवः शरीरस्यायं
वा । अण् ॥ कर्मविशेषे । शरीर
स्थितिमात्रप्रयोजने० कौपीनाच्छा
दनादिग्रहणभिक्षाटनादिरूपेकर्मणि
स्य तथाख्यानमुच्यते । शारीरंके
वलंकर्मकुर्वन्नाप्नोतिकिल्बिषमिति
भगवद्गुक्तेः । शरीरप्रधानैः कर्मा
दिभिः साध्येचकर्मणिनतुकेवले
नशरीरेण० यस्तेनतस्यैतवद्वत्यु
क्तेः । शरीरमात्रसाध्येचकर्मणि
॥ तपोविशेषे ॥ यथा । देवद्विजगु

शिलात्मज: । पुं० लौहे ॥
शिलात्मिका । स्त्री० मूषायाम् ॥
शिलादद्रु: । पुं० शैलेये ॥ शिला
जतुनि ॥
शिलाधातु: । पुं० सितोपले । ख
ड्याम् । सेलखड़ी० इ० भा० ॥
स्वर्णगैरिके । सोनागेरु० इ०भा०
प्र० ॥
शिलापट्ट: । पुं० पेषणार्थशिला
याम् । सिलवट्ट० भा० ॥
शिलापुत्र: । पुं० वर्षाश्मनि । सिलव
ट्टा० लोढा० इ० भा० प्र० ॥
शिलापुष्पम् । न० शैलेये । अश्मपु
ष्पे । शिलाजतुनि ॥
शिलाभवम् । न० शिलापुष्पे ॥
शिलाभेद: । पुं० पाषाणभेदनिख
नें ॥ पाषभेदकाख्ये ॥
शिलारम्भा । स्त्री० काष्ठकदल्याम् ॥
शिलावल्का । स्त्री० औषधद्रव्यविशेषे
। वल्कलायाम् । शैलगर्भायाम्
। शिलावाक्० इ० भा० प्र० ॥
शिलाव्याधि: । पुं० शिलाजतुनि ॥
शिलासनम् । न० शैलेये ॥ पाषाण
रचितासने ॥
शिलासन्धि: । पुं० पर्वतगह्वरे ॥
गुहायाम् ॥
शिलासारम् । न० लौहे ॥
शिलाह्वम् । न० शिलाजतुनि ॥
शिलि: पुं० भूर्जपत्रके । स्त्री०

द्वारार्थ: स्थितकाष्ठे ॥
शिलिन्द: । पुं० मत्स्यविशेषे ॥ य
था । शिलिन्द: श्लेष्मलो बल्यो वि
पाके मधुरो गुरु: । आमवातकरो
हृद्यो वातपित्तहरो मत: । इ०
रा० म: ॥
शिली । स्त्री० गण्डूपद्याम् । स्त
म्भशीर्षे । द्वारस्थ: स्थितदारुवि
॥ शिलति । शिल० । इगुपधे
तिक: । गौरादित्वात् ङीष् ॥
शिलीन्ध्र: । पुं० मत्स्यविशेषे ।
विषफले ॥ यथा । शिलीन्ध्र
श्लेष्मलो बल्यो विपाके मधुरो गुरु: ।
वातपित्तहरो हृद्य आमवातकर
स: ॥ कदलीभेदे ॥ न० कवके ।
छत्राके । कदलीपुष्पे ॥ विपु
टायाम् ॥
शिलीन्ध्रकम् । न० छिलीरे । गो
मयच्छत्रिकायाम् ॥
शिलीन्ध्री । स्त्री० विहगीविशेषे ॥
गण्डूपद्याम् ॥ मृदि ॥
शिलीपद: । पुं० श्लीपदाभिधपाद
रोगे । पादवल्मीके । गोद० इ०
गी० भा० प्र० । पीलुपांव० इ०
भा० ॥ अस्य विप्रकृष्टनिदानं सा
मान्यलक्षणञ्च । पुरातनोदकानू
पिता: सर्वर्त्तुषु च शीतला: । ये
देशास्तेषु जायन्ते श्लीपदानि विशेष
त: ॥ य: सज्वरो वङ्क्षणजो भृ-

शिवदूतिका । स्त्री॰ मातृकाविशेषे ॥

शिवदूती । स्त्री॰ भवान्याम् । दुर्गायाम् । यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयं । शिवदूतीति सा लोके ख्यातिमागता ॥ शिवं दूतयति सन्देशं प्रापयतीत्यर्थे ॰ गौरादेराकृतिगणत्वान् ङीष् । बहुव्रीहौ तु टाप् स्यादित्याहुः । वस्तुतस्तु॰ दुनोतेर्दु तनिभ्यां दीर्घश्चेति निष्ठायां दीर्घे सत्यल्पसन्देशप्रापकत्वविवक्षायां कादल्पाख्यायामिति॰ बहुव्रीहौ च विकल्पे सम्भवति ॥ मातृभेदे । योगिनीविशेषे ॥

शिवद्रुमः । पुं॰ बिल्वे मालूरवृक्षे ॥

शिवदिष्टा । स्त्री॰ शीतकायाम् ॥

शिवधातुः । पुं॰ पारदे ॥

शिवनाभिः । पुं॰ शिवलिङ्गविशेषे ॥

शिवपुराणम् । न॰ उपपुराणविशेषे ॥

शिवपुरी । स्त्री॰ काश्याम् ॥

शिवप्रियः । पुं॰ बकद्रुमे ॥ स्फटिके । धत्तूरे । धत्तूरधूर्तकन्द निवासयोर्यस्या शिपिशाचपतिनापि निवेशितोऽसि । किं कैरवाणि विकसन्मितम : प्रयाति किं चारि रक्षसति किं द्युपदः स्तवन्ति ॥ न॰ रुद्राक्षे ॥ त्रि॰ शिवेष्टद्रव्ये ॥ शिवस्य प्रियः ॥

शिवप्रिया । स्त्री॰ उमायाम् ॥

शिवभट्टारकः । पुं॰ सर्वेशाना मौशिते ॥

शिवमल्लकः । पुं॰ अर्जुनपादपे ॥

शिवमल्लिका । स्त्री॰ वसुके । बकवृक्षे ।

शिवमल्ली । स्त्री॰ बकवृक्षे । शिवप्रियामल्ली ॥

शिवरसः । पुं॰ अन्नोदकाञ्जिके । चिरावस्थापिताम्बुरसे ॥

शिवरात्रिः । स्त्री॰ शिवचतुर्दश्याम् ॥ अस्यामुपवासः प्रधानम् । यथा । न स्नानेन न वस्त्रेण न धूपेन न चार्चया । तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः ॥ ततो रात्रौ प्रकर्त्तव्यं शिवप्रीणनतत्परैः । ॥ हरेरर्चनं पूजा च विशेषतः । शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः । सर्वं पूजाफलं हन्ति शिवरात्रिबहिर्मुखः ॥ शिवरात्रिव्रतकालमाह । यथा । माघे निशीथानुगता चतुर्दशी पक्षेऽपरे या शिवरात्रिसंज्ञिका । भवेदुपोष्या सततं शिवोऽपवायुतातिरिक्ताप्रविहाय पारणा ॥ यदा निशीथद्वयगामिनी भवेत्तदा चतुर्दशी सा परपूर्वगा क्रमात् । सन्निधायत्वादुत्तरतद्दयागतौ विधि याकिलकालवेदिभिः ॥ इति ज्योतिर्विदाभरणम् ॥ जयन्ती शिवरात्रिश्च कार्ये भद्रजयान्विते । कृत्वोपवासं तिथ्यन्ते तदा कुर्याच्च पारणम् । तिथ्यन्तपारणं तु जयन्ती माघपर

। पुरस्कर्त्तरि ॥ शिष्टिरन्दे । शि
दिस्रौत्ये । बाहुलकात् शिट : स्यात्
। अनित्यत्वान्नुम् ॥ यथा । अत्रे
तितु शिच्छसि ‘ प्रितावर्षे । शि
तीदं शुचेत्यानच्० द : सर्वोत्तुरूप
॥ क्वाप्यकर्मे त्वमरिपाठान्तरात् । पा
पाचारेपि ॥

शिष्ट : । त्रि० प्राज्ञे । साधुव्यवहा
रान्विते ॥ यथा । नधार्मिकादधम
सीनैरत्रचपलीयति : । नचशाक्य
पलायचैवमितिशिष्टस्यलक्षणम् ॥
शान्ते । स्वच्छशान्ते । सत्कारधारा
दिनि । धर्मेणाधिगतोयैस्तुवेदः स
परिवृंहणः । तेशिष्टास्त्वप्रमाणज्ञाः
श्रुतिप्रत्यक्षहेतवः ॥ इत्यर्थेरिति ॥
शिष्यते । शिष्‌० । क्त० ॥

शिष्टसमाचार । पु० साधुव्यवहारे ।

शिष्टाचार : । पु० सदाचारे । साधु
व्यवहारे ॥ यथा । दानंसत्यतपोऽ
लोभोविद्येज्यापूजनदम : । अष्टौ
तानिचरित्राणिशिष्टाचारस्यलक्षण
म् ॥ शिष्टायस्माच्चरन्त्येनंमनु :
सप्तर्षयश्चये । मन्वन्तरेषुसर्वेषुशि
ष्टाचारस्तत : स्मृत : ॥ श्रुतिस्मृति
भ्यांविहितोधर्मोवर्णाश्रमात्मक : ।
शिष्टाचारविरुद्धस्तुधर्म : सतोधुस
म्मत : ॥ शिष्टानामाचार : ॥

शिष्टबुद्धि : । त्रि० शास्त्राचारानुशि
ष्टमती ।

शिष्टापदविरुद्ध : । पुं० सत्कारव्यवहारादि
भि : क्षेमाप्यश्रेयाश्रितः० पयप्रा
प्तिवादे ॥ शिष्टानामपरिचद्वीयस्तो
म् ॥

शिष्टि : । स्त्री० आज्ञायाम् । शासने
॥ शासनम् । शासु० । स्त्रियांक्ति
न्नाबादिभ्य : । शासइदङ्‌हलो : ।

शिष्य : । पुं० छात्रे । यत्नो शासितुं
। शासनयोग्ये ॥ तल्लक्षणं यथा ।
वाङ्‌मन : कायवसुभिर्गुरुशुश्रूषणे
रत : । एताहृशगुणोपेत : शि
ष्योभवतिभारत ॥ देवताचार्यशुश्रू
षांमनोवाक्कायकर्मभि : । शुद्ध
भावोमहोत्साहोवोद्धाशिष्यइतिस्मृ
त : ॥ अपिच । शान्तोविनीत :
शुद्धात्माश्रद्धावान्धारणक्षम :
। समर्थश्चकुलीनश्चप्राज्ञ सच्चरिता
मती । एवमादिगुणैर्युक्त : शिष्यो
भवतिनान्यथेति ॥ शिष्यते । शा
सु० । एतिस्तुशास्वृदृजुष : क्यप् ।
शासइदङ्‌हलो : । शासितव्योति
ष : ॥ पुत्रशिष्ययोस्तुल्यत्वं यथा ।
यथापुत्रस्तथाशिष्योनभेद : पुत्रशि
ष्ययो : । सर्वत्रोपिसदृशामेषप्राय
नैपरिपोषणे ॥ यथाभिदातापुत्र
स्तथाशिष्यश्चनिश्चितम् । इत्तीदृशा
न्स्वशाखायासुत्रावत्समतोभव : ॥

शी : । स्त्री० शान्ती : शयने ॥

शीकर : । पुं० वातास्ताम्बु् नि । वा

शीतकषाय: । पुं॰ हिमकषाये । यथा । द्युसंद्रव्यपलं सम्यक्पञ्चिजं चप खे : सुतम् । शर्वरीसुषितः म स्थाद्धिम : शीतकषायकद्रविवेदा सम् ॥

शीतकोल : । पुं॰ हिमर्तौ । मार्गपौषयो: । हेमन्तं कूपोदकांवटच्छाया श्यामाक्षीइष्टकागृहम् । शीतकालभवेदुष्णमुष्णकालेचशीतलम् ॥ हिमन्तशिशिरर्तौ : ॥

शीतकिरण : । पुं॰ हिमांशौ ॥ चन्द्रमसि ॥ यथा । कान्तेकोयमुदेतिशीतकिरणोजात : कुतोवारिधौकस्ते सुन्दरिसोदर : कमलजोदत्तस्त्वदीये स्तने । धन्यास्त्वंगुणतीसतीकुमतीभ्रातापिधन्यस्तवत्वं शीपरिहासकेलिकलयासुग्धीश्वरि : मातु व : ॥

शीतकुम्भ : । पुं॰ करवीरे ॥

शीतकुम्भी । स्त्री॰ जलजद्रव्यविशेषे । मिश्रशीर्णप॰ द्र॰ गौ॰ भा॰ प्र॰ । भला. पर्यायायथा । शीतलीशीतकुम्भीचश्रृङ्गपुष्पाजलाश्रयेतिरत्नमाला ।

शीतकृच्छ : । पुं॰ व्रतविशेषे । यथा । त्र्यहंशीतंपिबेत्तोयंत्र्यहंशीतंपय : पिबेत् । त्र्यहंशीतंघृतंपीत्वावायुभक्ष्य : परंत्र्यहमितियमस्मृति : ॥

शीतधारम् । न॰ श्वेतटङ्कणे ॥

शीतगन्ध : । पुं॰ श्वेतचन्दने ।

शीतगु : । पुं॰ चन्द्रे ॥

शीतचम्पक : । पुं॰ आतपैर्ये । सर्पपे ॥ दिने ॥ दीपे ॥ दर्पणे ॥

शीतपर्णी । स्त्री॰ चर्मपुष्पिकायाम् । सूर्यवल्ल्याम् ॥

शीतपाकिनी । स्त्री॰ महासमङ्गायाम् ॥ काकोल्याम् ॥

शीतपाकी । स्त्री॰ वाट्यालके ॥ गुञ्जायाम् ॥ काकोल्याम् ॥

शीतपुष्प : । पुं॰ चर्मकषे ॥ शिरीषे ॥ न॰ परिपेले ॥ शैलेये ॥

शीतपुष्पक : । पुं॰ चर्मकषे ॥ न॰ शैलेये ॥

शीतपुष्पा । स्त्री॰ अतिबलायाम् ॥

शीतप्रभ : । पुं॰ कर्पूरे ॥ त्रि॰ शीतलप्रभायुक्ते ॥

शीतप्रिय : । पुं॰ पर्पटे ॥ त्रि॰ शीतप्रीतियुक्ते ।

शीतफल : । पुं॰ उदुम्बरे ॥ बहुलवारे । पिलौ ॥ पीलौ ॥ शीतानिफलानियस्य ॥

शीतबला । स्त्री॰ महासमङ्गायाम् ॥

शीतभानु : । पुं॰ चन्द्रे ॥ शीताभानव : किरणायस्य : ॥

शीतभीत : । त्रि॰ शीतार्ते ।

शीतभीरु : । स्त्री॰ मल्लिकायाम् ॥ शीतात्॰ भीरु : ॥ त्रि॰ शीतभीते ॥

शीतभीरुकः । त्रि० शीतार्त्ते ।
शीतभीरुका । स्त्री० मल्लिकायाम् ॥
शीतमञ्जरी । स्त्री० शेफालिकायाम् ॥
शीतमयूखः । पुं० चन्द्रे । कर्पूरे ॥
शीतमरीचिः । पुं० चन्द्रे । कर्पूरे ॥
शीतमूलकम् । न० उशीरे ॥
शीतरम्यः । पुं० प्रदीपे । त्रि० शीतरमणीये ॥
शीतरश्मिः । पुं० चन्द्रे । कर्पूरे ॥
शीतरसः । पुं० शीधुप्रभेदे ॥
शीतलः । पुं० असनपर्ण्याम् । चर्मविशेषे । सुधांशौ । चन्द्रे । वृक्षविशेषे । चम्पके । बहुवारके । धूनके । राले । कर्पूरभेदे । न० पुष्पकासीसे । शैलजे । मलयोद्भवे । चन्दने । पद्मके । मौक्तिके । शैत्ये । वीरणमूले । त्रि० सुशीते । शिशिरे । शीतं गुणोऽस्यास्ति । सिध्मादित्वात् लच् । शीतं लाति वा । आतोऽनुपसर्गे कः ॥
शीतलकः । पुं० मरुबके । न० सितोत्पले ॥
शीतलच्छदः । पुं० चम्पके । शीतलपर्णे ॥
शीतलजलम् । न० उत्पले । शिशिरोदके । शीताम्बुनि ॥ यथा मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये । भ्रमे श्रमे विदग्धे च तमके च मघौ तथा । ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे । आध्माने स्तिमिते कोष्ठे सद्यःशुद्धौ नवज्वरे ॥ अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ । हिक्कायां स्नेहपाने च शीताम्बु परिवर्जयेत् ॥
शीतलत्वम् । न० शीतलतायाम् । जडत्वे ॥
शीतलत्वकम् । न० शीतलत्वे ॥
शीतलप्रदः । पुं० चन्दने ॥ त्रि० हिमदातरि ॥
शीतवनम् । न० तीर्थविशेषे ।
शीतलरातकः । पुं० असनपर्ण्याम् ॥
शीतला । स्त्री० शीतलीवर्णे ॥ यथा । शीतलाशीतलीशीतकृच्छीमाच्छूरपुष्पकेति चन्द्रिका ॥ कुटुम्बिन्याम् । कलिहार्याम् ॥ वालुकायाम् । आरामशीतलायाम् ॥ देवताविशेषे । विस्फोटकविशेषाधिष्ठात्र्याम् ॥ यथा । नमामि शीतलां देवीं रासभस्थां दिगम्बरीम् । मार्जनीकलशोपेतां सूर्पालङ्कृतमस्तकामिति स्कन्दपुराणम् ॥
शीतली । स्त्री० जलजन्तुविशेषे । शीतकृच्छ्याम् ॥ कात्यानुसारि

शौचतिवा । शुच० । ऋज्रेन्द्राग्र त्वादिनारन् निपातनात्कुत्वञ्च स्वकः । पक्षे रेफवत्त्वः ॥

शुक्लाक्षः । पुं० शुक्ले ॥ शुक्लपक्षे ॥

शुक्लकण्ठः । पुं० दात्यूहे । त्रि० श्वेतगलयुक्ते ॥

शुक्लकन्दः । पुं० सहितकन्दे ॥ श्वेतमूले ॥

शुक्लकन्दा । स्त्री० अतिविषायाम् ॥

शुक्लकर्मा । त्रि० अकल्मषकर्मणि ॥

शुक्लकुष्ठम् । न० श्वेतकुष्ठे ॥

शुक्लकृष्णम् । न० शुभाशुभे ॥

शुक्लक्षीरा । स्त्री० काकोल्याम् ॥

शुक्लदुग्धः । पुं० शृङ्गाटके ॥

शुक्लधातुः । पुं० कठिन्याम् ॥ शुक्लखासीधातुश्च ॥

शुक्लपक्षः । पुं० सितपक्षे । विधुसम्बन्धिषोडशकलानुकूलपक्षदशकलाक्रियाप्रयत्ने ॥ तत्पर्यायाः । सितस्त्वापूर्यमाणः आपूर्यमाणः शुचिः शुक्लपक्ष कृष्णेतरो बहुलेतरदिवसः सदृशिशुद्धपक्षाख्या ॥ सतु शुक्लप्रतिपदादिपौर्णमास्यन्तपञ्चदशतिथ्यात्मकः । यथा । तत्रपक्षावुभौमासेशुक्लकृष्णौकमेणहि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ पक्षत्याद्यास्तुतिथयः क्रमात्पञ्चदशस्मृताः । दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके ॥

शुक्लपुष्पः । पुं० छत्रकवृक्षे । मरिचक्षुपे । कुन्दपुष्पवृक्षे ॥ मरुवके ॥ त्रि० श्वेतकुसुमयुक्ते ।

शुक्लपुष्पा । स्त्री० नागदन्त्याम् ॥ शीतकुम्भ्याम् ॥

शुक्लपुष्पी । स्त्री० नागदन्त्याम् ॥

शुक्लपृष्ठः ) । पुं० शिशिरन्ध्रे ।

शुक्लपृष्ठकः ) । पुं० सिन्धुवारे ॥

शुक्लवस्त्रः । पुं० जिनविशेषे ॥

शुक्लरोहितः । पुं० श्वेतरोहितवृक्षे ॥

शुक्ललता । स्त्री० उच्चटायां ॥

शुक्लवर्णः । पुं० श्वेतवर्णसजातीयद्रव्ये । शुक्लशिलापट्टकादौ ॥

शुक्लवायसः । पुं० बके । दीर्घजङ्घे । बकोटे ॥

शुक्लयानः । पुं० षट्निम्बे ॥ वृ० रा० ट: ॥

शुक्ला । स्त्री० शारदायाम् । सरस्वत्याम् । वाग्देवतायाम् ॥ शुक्लां ब्रह्मविचारसारपरमामाद्यांजगद्व्यापिनींवीणापुस्तकधारिणीमभयदांजाड्यान्धकारापहाम् । हस्तेस्फाटिकमालिकांविदधतींपद्मासनेसंस्थितांवन्देतांपरमेश्वरींभगवतींबुद्धिप्रदांशारदाम् ॥ गतिविशेषे । ज्ञानप्रकाशमयत्वादर्चिरादिगतौ । सा च मयार्यस्वे नागमप्रसिद्धे देवयानमार्गे ॥ सुधायाम् ॥ काकोल्याम् ॥

शुम्भम् । न० शुल्वे ॥ शुनैर्हितम् । गवादित्वाद्यत् : सम्प्रसारणं वाचदीर्घत्वमितियत् ॥ शुनीनांसमूहे ॥

शुभ : । पुं० विष्कम्भादिषु० नवमोविंशेयोगे ॥ तत्रोत्पन्नस्यफलंयथा । शुभप्रसूतः शुभकृन्नराणांशुभोद्दीप्तोविदुषांसमाजे । करोतिनित्यं शुभकर्मधीमान्शोभाधिकः शोभनवेशधारीति ॥ छागे ॥ शुभहिंसायाम् । इगुपधेतिकः ॥ न० कल्याणे । क्षेमे । भद्रे । मङ्गले । मौक्तिके ॥ पद्मकाष्ठे ॥ दृष्टफले ॥ परमानन्दरूपत्वेनमङ्गलानांमङ्गले • मोक्षसुखे ॥ त्रि० सुखरूपे ॥ क्षेमशालिनि ॥ खसखादिपुरे ॥ प्रशस्ते ॥ शोभते । शुभशोभायाम् । इगुपधज्ञाप्रीकिरः कः ॥

शुभंयु : । त्रि० शुभान्विते ॥ शुभमस्यास्ति । शुभमितिमान्तमव्ययम् । कंशंभ्यामितियुस् ॥

शुभकृत् । पुं० प्रभवादिवत्सरान्तर्गतवत्सरविशेषे । यथा । सुवर्णकुप्यधान्यानिजगत्सर्वंसुशोभनम् । ब्राह्मणाधर्मनिरतास्तुष्टाः शुभिघे . शुभकृतिप्रिये ॥ ३६ ॥ त्रि० शुभकारके ॥

शुभगन्धकम् । न० बोले ॥ त्रि० मङ्गलगन्धयुक्ते ॥

शुभग्रह : । पुं० सौम्यग्रहे ॥ फलाधिकाः शुभाश्चवगुरुः शुक्रस्तथैवच । पापाऽयुतोबुधश्चैवप्रोक्ताश्चैते शुभग्रहाः ॥

शुभङ्कर : । त्रि० शुभङ्करे । धर्मकारि ॥

शुभङ्करी । स्त्री० पार्वत्याम् ॥

शुभद : । पुं० अश्वत्थवृक्षे । त्रि० शुभदातरि ॥

शुभदन्ती । स्त्री० सुदत्याम् । सुदन्तस्त्रियाम् ॥ पुष्पदन्तेभयोषिति ॥ शुभौ शोभनौदन्तावस्याः । नासिकोदरौष्ठेतिङीष् ॥

शुभपत्रिका । स्त्री० शालपर्ण्याम् ॥ मङ्गलपत्रिकायाम् ॥

शुभम् । न० क्षेमे । भद्रे ॥

शुभवासन : । पुं० सुखवासकरगन्धे । सुखवासने ॥

शुभस्थली । स्त्री० यज्ञभूमौ । भद्रभूमौ ॥

शुभा । स्त्री० वंशरोचनायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गौ ॥ शम्याम् ॥ श्वेतदूर्वायाम् ॥ देवसभायाम् ॥ वणसखीविशेषे ॥ मङ्गलजनिकायाम् ॥ छाग्याम् ॥ टाप् ॥

शुभाङ्ग : । त्रि० मङ्गलावयवयुक्ते । सुन्दरावयविनि ॥ शुभानिलक्षणयुक्तानिअङ्गान्यस्य ॥

शुभाङ्गी । स्त्री० कुबेरपत्न्याम् । कामदेवपत्न्याम् ॥ मङ्गलावयवयुक्ता

याम् ॥

शुभाचार : । त्रि॰ शोभनाचारवति ॥

शुभाचारा । स्त्री॰ उमासखीभेदे ॥

शुभात्मन : । पुं॰ गिरौ ॥

शुभात्मिका । स्त्री॰ कल्पायाम् । शु

भोक्तौ ॥

शुभान्वित : । त्रि॰ मङ्गलयुक्ते । शु

भ यौ ॥ शुभेनान्वित : कर्त्तृकरण

कृतिसमास : ॥

शुभ्र : । पुं॰ चन्दने ॥ शुक्लेवर्णे ॥

शोभते । शुभ्रदोषौ । स्फायितची

तिरक्त् ॥ न॰ अभ्रके ॥ रूप्ये ॥ का

सीसे ॥ गङ्गलवणे ॥ शाकम्भरी

ये ॥ त्रि॰ दीप्ते । शुक्लगुणयुक्ते ॥

शुभ्रदन् । त्रि॰ शुभ्रदन्ते ॥ शुभ्रादन्ता

यस्यास : । यथाग्नाशुद्धशुभ्रेतिदन्त

स्यदत्रादेश : ॥

शुभ्रदन्त : त्रि॰ शुभ्रदति ॥

शुभ्रदन्ती । स्त्री॰ पुष्पदन्तभकरिण्या

म ॥ शुभ्रौदन्तौ॰ यस्या: सा । ना

सिकोदरौष्ठजङ्घादन्तकर्णशृङ्गा

च्चेतिङीप् ॥

शुभ्ररश्मि : । पुं॰ चन्द्रे ॥

शुभ्रा । स्त्री॰ गङ्गायाम् ॥ वंशरोच

नायाम् ॥ स्फटिका ॥

शुभ्रांशु : । पुं॰ सुधांशौ चोपधीशे

। चन्द्रे ॥ शुभ्रा अंशवोयस्य ॥ क

र्पूरे ॥

शुभ्रालु : । पुं॰ मणिकन्दे ।

शुम्भि : । पुं॰ ब्रह्मणि । कमलासने

॥ दर्शनीये ॥ शोभते । शुम्भशोभ

नार्थे । अदिशदिभूशुभिभ्य. क्विन् ।

शुम्भ : । पुं॰ कश्यपाद्दित्यामुत्पन्ने॰

निशुम्भमुनिभ्यांज्येष्ठे॰ शिवाद

त्तवरोवाप्राप्तवरे॰ असुरोत्तमे ॥ य

था । कश्यपश्चदितिर्नामभार्यासी

द्दक्षसता । तस्या : पुत्रत्रयंजज्ञे

सहस्राच्छताधिकम् । ज्येष्ठ : शु

म्भइतिख्यातोनिशुम्भश्चापरोऽसु

र : ॥ तृतीयोनमुचिर्नाममहाबल

पराक्रम : । इतिवामनपुराणम् ॥

शुम्भघातिनी । ⎫
शुम्भनिबर्हिणी । ⎭ स्त्री॰ महासरस्वत्या

म् ॥

शुम्भपुरम् । न॰ पत्तनके । हरिगृह

। शुम्भदैत्यधुराप्रसिद्धेपुरस्थ ॥

शुम्भपुरी । स्त्री॰ शुम्भासुरनगर्याम् ।

शुंभपुरे ॥

शुम्भमथनी ।
शुम्भमर्दिनी { स्त्री॰दुर्गायाम् ।

महासरस्वत्याम् ॥

शुम्भा । स्त्री॰ शोभायाम् ॥ शुम्भ

ति । शुभशुम्भशोभायाम् । अचा

दाप् ॥

शुल्क । पुं॰ न॰ घट्टादिदेये । रक्षानिमि

त्तपरराजभागे । रक्षानिर्वेशोराज

भाग : शुल्क : ॰ इत्युक्ते : । स्थ

लजलपथादिना॰ वाणिज्यकारि

सिग्धुषिभ्य : किदिति मन्प्रत्ययः शुष्यत्यनेनवा । शुष० ॥

शुष्मा । पुं० वह्नौ ॥ चित्रकवृक्षे ॥ सूर्ये । न० तेजसि ॥ शुष्यत्यनेन । शुष० । अन्येभ्योऽपीति मनिन् । संज्ञापूर्वकत्वान्न गुणः ॥ शोषयतिवा । बाहुलकात्साधुः ॥

शुष्मी । त्रि० बलिष्ठे । सत्त्वे । अस्त्यर्थे इनिः ॥

शूक । पुं० शूके । संञ्चतीक्ष्णाग्रे । । क्रियारोपादन्यस्मिन्० शूकवती धान्ये । ससादिरन्यतक्षयिका- दिक्षपटके ॥ श्याति । शीलनूशार यो । अनूकाद्यर्थे तिसाधुः ॥ दयायाम् । न० शूकदर्भे ॥

शूकधः । पुं० प्रावृटे । यवे । रसे

शूककीटः । पुं० शयिके ॥ शूकवान् कीटः । शूकयुक्तः कीटः । शाकपार्थिवादिः ॥ अथवादिमध्य क : कीटविशेषोऽळिकः शूककीटस्य० भ्रमरप्रभेदोऽयम् ॥

शूककीटकः । पुं० शूककीटे ॥

शूकतृणम् । न० तृणविशेषे । शूके । शूकाढ्ये । धान्यविशेषे ॥ द्र० रा० घट : ॥

शूकधान्यम् । न० यवगोधूमादौ ॥ शूकसधान्यम् ॥

शूकपिण्डिका ।)
शूकपिण्डी । ) स्त्री० शूकशिम्ब्याम् ॥

शूकरः । पुं० कूलचरविशेषे । वराहे क्रोडे । शूकोऽस्त्यस्य० खरलोमत्वात् । रः ॥ यद्वा । शूकं राति । रा० आतोऽनुपसर्गे कः ॥ यद्वा । शू० इति ध्वनिं करोति । अच्० टाप् ॥ शालिविशेषे ॥

शूकरकन्दः । पुं० वाराहीकन्दे ॥

शूकरपादिका । स्त्री० कोलशिम्ब्याम् । सुवरासिमइतिभाषाप्रसिद्धायाम् ॥

शूकरसुखम् । न० नरकविशेषे ॥

शूकराक्रान्ता । स्त्री० वराहक्रान्तायाम् ॥

शूकरी । स्त्री० शूकरस्त्रियाम् । -जातेरितिङीष् । चन्द्रस्याशुचिशूकपस्य वसुविद्धुः स्वमास्यन्तरं सेव्या कामनयातयोरपि सुधाविद्यावका न्याधनम् । रक्षांसाशुचिशूकरीमप रमर्मास्पदंमत्युत : सन्तासोऽपि सम : स्वकर्मगतिभिर्यान्त्यन्यभाव : सम : ॥ वराहक्रान्तायाम् ॥

शूकरेष्टः । पुं० कशेरुणि । त्रि० सूकरप्रियवस्तुनि ॥

शूकलः । पुं० दुर्विनीताश्वे ॥

शूकवान् त्रि० शूकयुक्ते ॥

शूकवती । स्त्री० कपिकच्छ्वाम् ॥

शूकशिम्बा । स्त्री०
शूकशिम्बि । पुं०
शूकशिम्बिका । 
शूकशिम्बी । स्त्री० } कपिकच्छ्वाम् ॥

र्णिषया । शूद्राणाञ्चमहाराजस्थैर्यधनसञ्चयः । शुश्रूषेः कृतकार्यस्य कृतसन्तानकर्मणः ॥ अस्यनुज्ञातराजस्य शूद्रस्य जगतीपते । अत्यान्तरगतस्यापि धर्मगतस्य च ॥ आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषमिति पाद्मे स्वर्गखण्डः ॥

शूद्रकृत्यम् । न॰ शूद्रकर्त्तव्यकर्म्मणि ॥

शूद्रधर्म्मः । पुं॰ शूद्रस्य शास्त्रविहिताचारे ॥ सत्पवर्णाश्रमशब्दे द्रष्टव्यः ॥

शूद्रप्रियः । पुं॰ पलाण्डौ ॥ त्रि॰ तद्दिष्टद्रव्ये ॥

शूद्रप्रेष्यः । पुं॰ शूद्रस्यपरिचारके ब्राह्मणादौ ॥

शूद्रयाजकः । पुं॰ शूद्रसम्बन्धियज्ञादावृत्विजि ॥ शूद्रस्ययाजकः ॥

शूद्रासनम् । न॰ पट्टे । मकुली । शूद्राधिकारे ॥ स्मृति॰ त्रि॰ शेषः ॥

शूद्रशिष्यः । त्रि॰ शूद्रोपाध्यायस्य अध्ययनकर्त्तरि ।

शूद्रा । स्त्री॰ शूद्रजातौ । अन्यभार्यायामपि शूद्रजातीयायाम् । शूद्रीशूद्रस्यभार्यास्यात्॰ शूद्राजात्यातिरेकविस्मरः ॥ शूद्राणामप्यर्था जातिरितिटाप् ॥

शूद्रान्नम् । न॰ शूद्रस्याभिषान्ने । यथा । शूद्रान्नेनतुभुक्तेन उदरस्थेन योम्रतः । सर्वंस्वरत्नमुपगत्वं शूद्रत्वमाधिगच्छति ॥

शूद्राभार्य्यः । पुं॰ शूद्रास्वामिनि ॥ शूद्राभार्य्यकस्य ॥

शूद्राणी । स्त्री॰ प्रियङ्गुवृक्षे ॥

शूद्रावेदी । पुं॰ सवर्णापरिणीयकृत शूद्राविवाहे । शूद्रांविन्दति॰ परिणयति । विदेर्णिनिः ॥ शूद्रावेदीपतत्यवेतथ्यतनयस्य च । शौनकस्य सुतोत्पत्त्यातदपत्यतयाभृगोः ॥ अपि च । शूद्रामयमभार्यां शयनारोप्याधोगतिम् । जनयित्वा सुतं तस्यां ब्राह्मण्यादेवहीयते ॥

शूद्री । स्त्री॰ शूद्रस्यभार्यायाम् । भिन्नजातीयायाम् शूद्रभार्यायाम् । शूद्रस्यस्त्री । पुं॰ योगादाख्यायामितिङीष् ॥

शूनः । ⎫
शूनवान् । ⎭ त्रि॰ शोथिनि, स्फीते । वर्द्धिते । उत्शोयंशेस्म । कर्मणि क्तयती । ॰ क्तवत् । यजादित्वात् सम्प्रसारणे॰ पूर्वरूपे ओदितश्चेति नत्वे भवत्ययतिदीर्घः ॥

शूनाघः । त्रि॰ । वर्द्धिताघे ॥

शून्यम् । न॰ आकाशे ॥ विन्दौ । त्रि॰ निर्जनदेशादौ । तुच्छे । रिक्ते । स॰ ना॰ रीता॰ कृ॰ भा॰ ॥

चविद्यलौवनंशून्यं दिक्शून्याचेद वान्धवा। पुत्रहीनं गृहंशून्यंसर्वंशून्यादरिद्रता॥ खपुष्पादिवदत्यन्ताभावरूपे॥ यथा। मृगतृष्णाम्भसिस्नातः खपुष्पकृतशेखरः। एषवन्ध्यासुतोयातिशशशृङ्गधनुर्धरः॥ शुनेहितम्। शुनः सम्प्रसारणंवाचदीर्घत्वमितियत्॥

शून्यथाम्। न॰ शून्यार्थे। चि॰ तुच्छे॥ शून्यरिक्तहृतियावादिषुपाठात्कन्। स्वार्थेकोवा॥

शून्यता। स्त्री॰ चित्तस्यदोषे। रागद्वेषादितीव्रवासनयाचित्तस्यस्तब्धीभावित्वापत्ते। शून्यतायाम्। ध्यानंचिन्ताहितानापि: शून्यताश्चासतापसात्॥ शून्यस्यभावः तल्॥

शून्यतिथि। स्त्री॰ तिथिविशेषे॥ यथा। अष्टमीनवमीचैवपक्षयोरुभयोरपि। माघवैशाखयोश्चान्यापक्षयोरुभयोस्तथा। ज्येष्ठेत्रयोदशीनिन्द्यासिते॰ कृष्णचतुर्दशी। आषाढेकृष्णपक्षषष्ठी॰ शुक्लेच सप्तमी। द्वितीयाचतृतीयाचश्रावणेसितकृष्णयोः। प्रथमाचद्वितीयाचनभस्येमासिनिन्दिता॥ दशम्येकादशीनिन्द्या॰ मासीवशुक्लकृष्णयोः। ऊर्जचतुर्दशीशुक्लाकृष्णपक्षेतुपञ्चमी॥ सप्तमीचाष्टमीसौम्येपक्षयोरुभयोरपि। पौषेपक्षद्वयेचैवचतुर्थीपञ्चमीतथा॥ माघेतुपञ्चमीषष्ठीकृष्णेशुक्लेयथाक्रमम्। तृतीयाचचतुर्थीचफाल्गुनेसितकृष्णयोः॥ तिथयोमासशून्याख्याचित्तवंशविनाशिकाः। आसु यावप्रकुर्वीतनैवमङ्गलमाचरेदितिप्रसिद्धः॥



शून्यनक्षत्रम्। न॰ शून्यभे॥ यथा। अश्विनीरोहिणीचैवशून्यभेपरिकीर्तिते। चित्रास्वातीचवैशाखे॰ ज्येष्ठेविशाखानुराधिके॥ भगवासवमाषाढे॰ आश्वेषेद्दिविसहमे। नभस्येवाकृष्णान्त्यमंजपाद्भाद्रयुग्मपि॥ कार्त्तिकेपितवहन्त्यघेसौम्येचिवाद्विदैवते। पौषेदाखकाराद्रोः सामाघेमूलसर्पयोभम्॥ तपस्येमृगभरणीशून्यभान्याहुर्यकाः। एषुयत्तुष्टासंकर्मधनैः सहविनश्यति॥

शून्यभम्। न॰ शून्यनक्षत्रे॥

शून्यमध्यः। पुं॰ नले। पीटगले॥

शून्यराशिः। पुं॰ मासविशेषगतराशिविशेषे। यथा। घटमत्स्यसयायुग्मं मेष कन्याः सतुधियाः। तुलाचापमृगेन्द्राख्यामृगसंज्ञाश्चराशयः॥ चैत्रादौराशिशून्याख्याचित्तवंशविनाशदाः॥

वन्निति॰ शीड़ोवन् । शेतेऽत्यर्थम् । शेषपञ्चेतिसाधुर्वा ॥ सुखे ॥

शेवधि :। पुं॰ स्वाद्यान्यनिधौ । शेवाख्याणे॰ शेवधिः॰ अवधिः । दानपुरुषस्तत्वस्तुक् ॥ यथा । शेवेऽमितमित्रसुखम् । दृष्णीत्स्यांवन् । शेवधीतवेश्मिन् । कर्मण्यधिकरणे चेति किः ॥

शेवलम् । न॰ शैवाले ॥

शेवालम् । न॰ शैवले ॥ जलेशेतेति शेते । शीङोधुक्लक्वलञ्वालनञ्चतिवालन् ॥

शेवालिनी । स्त्री॰ नद्याम् ॥

शेवाली । स्त्री॰ आकाशमांस्याम् ॥

शेष :। पुं॰ भगवतोद्वितीयायाम् मूर्त्तौ ॥ यथा । एकाभगवतोमूर्त्तिर्ज्ञानरूपाशिवामला । वासुदेवाभिधानासागुणातीतासुनिष्कला ॥ द्वितीयाकालसंज्ञाऽन्यातामसीशेषसंज्ञिता । निहन्तिसकलांश्चान्ते वैष्णवीपरमातनुरितिकौर्मे ४८ ऽध्यायः ॥ सङ्कर्षणे । सीरपाणौ । बलदेवे ॥ वधे ॥ अनन्ते । नागराजे । फणासहस्रसंयुक्ते ॥ शिष्यते । शिष्लृविशेषणे॰ शिषकर्मणियत्वेषा । घञ् ॥ परार्थः शेषइतिमीमांसकाः ॥ अवयवे ॥ पुं॰ न॰ उपयुक्तेतरे ॥ अस्माच्छिकस्यपञ्चमप्रभेदे॰ ॥ ५० ॥ त्रि॰ अन्ये । सूक्तेतरवस्तुनि । अवशेषे । यथा । अत्यादरपरोविहाणीहमानः स्थिरांश्रियम् । अग्नेः शेषमृणस्यापि शत्रोः शेषनशेषयेत् ॥ अपिच । यथा शेषमग्निऋणमपि तथैवच । पुनःपुनःप्रवर्द्धन्ते तस्माच्छेषं नशेषयेदिति गरुडपु॰ १६६ अ॰ ॥ शिष्यते परिशिष्यते । शिषेर्घञ् ।

शेषत्वम् । न॰ उपकारित्वे ॥ पारार्थ्ये । परोद्देश्यप्रवृत्तिकत्वे ॥ यथा । शेषत्वमुपकारित्वंद्रव्यादाणामवाहृरिः । पारार्थ्यं शेषतालक्ष्म बेणवीतिजैमिनिरित्यधिकरणमालायांमाधवाचार्यः ॥

शेषभूत :। त्रि॰ अप्रभूते ॥

शेषरात्रि :। स्त्री॰ रात्रिशेषे । उषक्रे । अपररात्रे ॥

शेषवत् । न॰ अनीतानुमाने ॥ शेषपदविषयतथाधूमास्यनुमानज्ञानम्॰ तच्छेषवत् ॥

शेषा । स्त्री॰ प्रसादेनदत्तनिर्माल्यार्पणे । निर्माल्यदाने ॥ वर्णवृत्तान्तरे ॥ यथा । छन्दोविद्भिः प्रोक्तापद्धिवर्णरेषा । सर्वे वर्णायत्रदीर्घा सा स्याच्छेषा ॥ यथा । विंशाङ्गुर्यां कान्तः इदानीं यायात् व्योमाभे सम्पूर्णे यातः प्राप्तःपूर्वम् ॥

शेषावस्था । स्त्री० वार्द्धक्ये ॥

शेषित: । त्रि० चर्विते ॥

शैक्ष: । पुं० प्रथमारब्धवेदे । प्राथमकल्पिके ॥ शिक्षामधीते । तदधी तद्वत्यण् ॥ शिक्षायाअयम्० तत्र भवोवा ॥ यद्वा । शिक्षांलभते । शैक्षत्वम् ॥ यद्वा । शिक्षाशीलमस्य । छत्रादिभ्योण् ॥

शैख: । पुं० सङ्कीर्णजातिविशेषे । भूर्जकण्टके ॥

शैखरिक: । पुं० अपामार्गे ॥ शिखरेप्रायेणभवति । अध्यात्मादित्वाट्ठञ् ॥

शैखरेय: । पुं० अपामार्गे ॥

शैत्यम् । न० शीतत्वे ॥ भावेष्यञ् ॥ शैत्यं हि यत्सा प्रकृतिर्जलस्य ॥

शैथिल्यम् । न० शिथिलतायाम् ॥ अनुद्यमे ॥ भावेष्यञ् ॥

शैनेय: । पुं० शिनेर्नप्तरि सात्यकौ । श्रीकृष्णसारथौ ॥ शिनेर्गोत्रापत्यम् । शुभ्रादित्वाड्ढक् ॥

शैर्षच्छेदिक: । त्रि० शीर्षच्छेद्ये ॥ शिरश्छेदंनित्यमर्हति । शीर्षच्छेदाद्येतिठञ्० प्रत्यययोगेनशिरस: शीर्षभावश्च ॥

शैल: । पुं० महीध्रे । पर्वते । शिलोच्चये ॥ प्रचुरा: शिला: सन्त्यत्र । ज्योत्स्नादित्वादण् ॥ न० शैलेये ॥ तार्क्ष्यशैले । रसाञ्जने ॥ शिलाजतुनि ॥

शैलकम् । न० शैलजे ॥

शैलगन्धम् । न० शावरचन्दने ।

शैलगर्भा । स्त्री० शिलावल्कायाम् ॥

शैलगर्भाह्वा । स्त्री० शिलावल्कायाम् । इ० श० कि० रट: ॥

शैलजम् । न० शैलेये । सुगन्धिद्रव्यविशेषे ॥ शैलजातम् । अनी० । सप्तम्यांजनेर्ड: ॥ त्रि० पर्वतोत्पन्नेवस्तुनि ॥

शैलजा । स्त्री० गिरिजायाम् । पार्वत्याम् ॥ शैलाज्जाता । अनी० । पञ्चम्यामितिड: ॥ गजपिप्पल्याम् ॥ सैंहल्याम् ॥

शैलधन्वा । पुं० शम्भौ । शिवे ॥ पु० वि० शैव: ॥

शैलधर: । पुं० गिरिधरे । श्रीकृष्णे ॥ इतिधनञ्जय: ॥

शैलधातुजम् । न० शिलाजतुनि ॥

शैलनिर्यास: । पुं० अश्मजे । शिलाजतुनि ॥ शैलस्यनिर्यासइव ॥

शैलपत्र: । पुं० बिल्ववृक्षे ॥

शैलपीलु: । पुं० अक्षोटे ॥

शैलभित्ति: । स्त्री० टङ्के ॥

शैलराज: । पुं० शैलपर्वते ॥ हिमालये ॥ शैलानांराजा । टच् ॥

शैलराजतनया । स्त्री० पार्वत्याम् ॥

शैलराजसुता । स्त्री० पार्वत्याम् ।

कुशलतायाम् । दृष्टवियोगानुचिन्तने । दृष्टवियोगनिमित्ते मनसः सन्तापे । दृष्टवियोगेतत्त्वमानष्टे-तात्त्वाने ॥ सखानुचिन्तएव० यतः । शोचमानास्तुसंक्षेहावास्तथा : सुहृदस्तथा । पातयन्तिगतंस्वर्गोद्द भुपतिंनराधम ॥ भूरिद्युम्नोगतः स्वर्गंपुण्येनपतितः पुन : । शोचिशोकस्थुवर्गेस्थतेन्द्रे इपरिखत ॥ इतिवह्निपुराणे रामंप्रतिवसिष्ठोक्तिः ॥ विवेकिनांचित्ते तुनास्त्येवशोकावकाशः । यतः । मान्या नामिवसर्गमि० विविक्तानामपि० आस्यतां० येषामिवपुष्करे० जलमिवशोकायिकामपि च । संयोग : मिहमालयस्तुतमयमात्मप्रियाणांयदासिद्धौ० दूरवियोगएव० विदुषांशोकोदयः कस्तदा ॥ शोचनम् । शुचशोके । घञ् ॥ संसारे । संसरतींपु स्त्रंताधयतीतिशोषतमोभूत : संसार : । तत्सर्वशोकाधारत्वात् भि । शोकांतरतिवाक्यविदिति ॥

शोकनाशन : । पुं० अशोकतरौ ॥ शोकंनाशयति । वयमहर्षने । नन्द्यादित्वाल्ल्यु : ॥ परमात्मनि ॥ स्वाभिर्वात्साक्षात्कारेण संसारिणां संसारशोक नाशयति ॥

शोकद्वारी । पुं० वनपर्व्वरेयायाम् ॥

शोकातिग : । त्रि० मानसदुःखैर्वर्जिते ॥ शोकमतीत्यगच्छतीतिस था ।

शोकापनुद : । पुं० पुत्रे । शोकमपनुदति । मुदप्रेरणे । तुदशोकश्च : परिस्तापनुदेरितिमुखमाहरणेक : ॥

शोकारि : । पुं० कदम्बवृक्षे ॥

शोकार्त्त : । त्रि० शोकाकुले ॥

शोचनम् । न० शुचि । शोके ॥ त्रि० । शोकवती । शोचति० तच्छील : । शुचशोके । युवृभ्यदन्ह्यसष्ट पित्स्वशशुचस्तवपस्तपद : । इतियुच् ॥

शोचना । स्त्री० शोकोत्पादनायाम् ।

शोचनीय : । त्रि० शोच्ये । शोचितुं योग्ये । यथा । वेदाभ्यासेनपठन्ति विद्यार्थियौवनस्याधनताद्वारा : । तेशोचनीयाइहजीवलोकेमनुष्य रूपेणमृगाश्चरन्तीति ॥

शोचिष्केश : । पुं० वह्नौ । अग्नौ । शोचींषिज्वाला : केशाइवास्य । नित्यंसमासेऽनुत्तरपदस्थस्येतिषत्वम् । चित्रकवृक्षे ॥

शोचि : । न० रोचिषि । प्रभायाम् । शुच्यति० पूतीभवत्यनेन । शुचिरपूतीभावे । अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य : इसि : ।

शोच्य : । त्रि० तपस्विनि । सापराधे ॥

वार्त्तायाम् ॥ अभ्यासे ॥ षड्जादिस्वरारम्भकावयवे शब्दविशेषे ॥ तदुक्तम् । प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति ॥ श्रवणे ॥ श्रूयते । स्त्रियांक्तिन्निति धर्मे क्तिन् ॥ श्रूयतेधर्मोऽनयेति वा । श्रुयजीविस्तुभ्यः करणक्तिन् ॥

श्रुतिकटः । पुं॰ प्रायश्चित्ते ॥ सर्पे ॥ पापशोधने । प्रायश्चित्ते ॥ इ॰ मेदिनिहेमचन्द्रौ ॥

श्रुतिकटुः । पुं॰ कठोरवर्णे ॥

श्रुतिजीविका । स्त्री॰ स्मृतौ ॥

श्रुतितत्परः । त्रि॰ वेदाभ्यासरते ॥ सकर्मे ॥

श्रुतिधरः । त्रि॰ श्रुतमात्रेणधारके ॥ तदौषधम् गारुडे यथा । हरिद्रा च । हरितकी च वचा मूलं संगृह्य चूर्णयेद्धर । सर्वरोगविनिर्मुक्तं चूर्णं पलशतंपिबेत् ॥ सक्षीरं भक्षितंकुर्यात्सप्ताहेनमहाप्राज्ञ । नरंश्रुतिधरंशूरंमृगेन्द्रगतिविक्रमम्-पद्मगौरप्रतीकाशंयुक्तंदशशतायुषा । षोडशाब्दाकृतिंविप्रसततदुग्धभोजिनम् । मधुसर्पिःसमायुक्तं जन्मधमायुष्करंभवेत् ॥ तत्क्वाथंमधुनासार्द्धंदद्यवपंसहस्रिणम् । कुर्यान्नरंश्रुतिधरंप्रसदाजनवल्लभ-

मिति ॥ १८१ अध्यायः ।

श्रुतिवर्जितः । त्रि॰ वधिरे ॥ नास्तिके ॥ श्रुतिभ्यां॰ श्रुत्याचावर्जितः ॥

श्रुतिवेधः । पुं॰ कर्णवेधे ॥

श्रुतिस्फोटा । स्त्री॰ कर्णस्फोटायाम् । सिपुटायांलतायाम् ॥

श्रुतोपनिषत्कः । त्रि॰ ज्ञानिनि ॥

श्रेढी । स्त्री॰ लोलावत्युक्तकल्पविशेषे ॥

श्रेणिः । पुं॰ स्त्री॰ वीथ्याम् । पङ्क्तौ । पङ्क्तौ ॥ समानशिल्पिसंहतौ । कारुसंहतौ । एकेनशिल्पेनपण्येनरायेजीवन्ति॰ तेषांसमूहे ॥ अमर॰ श्रीधरेशा॰ । त्रिका॰ । वहिशीतिनिः ॥ एकसुत्थेसजातिसमूहे ॥ सेतुपार्श्वे ॥

श्रेणिकः । पुं॰ मगधदेशीयनृपतिविशेषे ॥ इतिहेमचन्द्रः ॥

श्रेणी । स्त्री॰ श्रेणिशब्दार्थे ॥

श्रेणीधर्मः । पुं॰ वणिगादीनांधर्मे ॥

श्रेयः । न॰ मुक्तौ । निर्वाणे । निःश्रेयसे । वेदबोधितेपरमपुरुषार्थे । स्वरूपावस्थाने । अनपायिसुखावाप्तिलक्षणे । आगमप्रापितेहिते ॥ यथा । दूरेहितनरव्याधेश्चिकित्सां नवारीतियः । मत्वानिरौषधंदेशं व्याधितः किंकरिष्यति ॥ यावत्तिष्ठतिदेहोऽयंतावत्तत्त्वंसमभ्यसेत् । सन्दीप्तेभवनेकोनुकूपंखनतिपार्श्वे

ति । ज्यायोयास्तं जराचायुर्याति भिन्नघटास्वु वत् । निद्यन्निरिपुवहो गःस्तस्मा च्छ्रेय : समाचरेत् ॥ या यन्नाश्रयतेंदुः खंशयन्नायान्तिपाप दः । यावन्नेन्द्रियवैकल्यं तावच्छ्रेय : समाचरेत् ॥ याचीनन्नागयते नानाकार्यैः संसारसम्भवैः । सुख दुः खैर्नैनिदन्तमनिविज्ञितमात्म न : द्रुतिसकुलान्येयमेनाग्नास : ॥ कल्याणे । मङ्गले । शुभे ॥ धर्मे । । वेदविहितप्राणिनामभ्युदयनि : श्रेयससाधनेः प्रवृत्तिमिहतिलच णे । पुण्ये ॥ चि० अतिप्रशस्ते । शस्ते ॥ प्रदसनयोरतिशयेनप्रशस्त म् । दिवचनेतीयसुन् । प्रशस्यश्च । विद्याधिके । धर्मार्थावुच्यतेश्रे य : ॰ कामार्थौ॰ धर्म एवच । अ र्थएवेहवाश्रेयस्तिवर्ग इतितुस्थि- ति : ॥ चथमुपदेशोऽयुभ तुमूलप्रति बोध्य : ॥

श्रेयसी । स्त्री॰ करिपिप्पल्याम् ॥ अ भयायाम् ॥ पाठायाम् । शठास्वा याम् । श्रेष्ठायाम् ॥ उगित्वान्ङी प् ॥

श्रेयांस : । पुं॰ तताईद्भिदे ॥

श्रेष्ठ : । पुं॰ कुबेरे । धनदे ॥ विष्णौ ॥ नृपे ॥ मुख्यप्राणे । न॰ गोदुग्धे । गव्ये ॥ त्रि॰ अग्रये । वरे । पुष्कले । सत्तमे । अतिशोभने ॥ अयमेषामतिशयेनप्रशस्य : । अति शायनेतमबिष्ठनाविति इष्ठन् । प्रश स्यस्यश्र : ॥ प्रधानभूते । ज्येष्ठे ॥ वृद्धे ॥

श्रेष्ठकाष्ठ : । पुं॰ शाकवृक्षे ॥

श्रेष्ठता । स्त्री॰ श्रेष्ठत्वे ॥

श्रेष्ठा । स्त्री॰ स्थलपद्मिन्याम् । उत्त मायांनार्याम् ॥ श्रेष्ठ शब्दार्थे ॥

श्रेष्ठाम्ल म् । न॰ वृक्षाम्ले ॥

श्रेष्ठी । पुं॰ कुलीनतमशिल्पिनि ।

श्रोण : । त्रि॰ खञ्जपादरोगिणि ॥ श्रो णति । श्रोणृ सङ्घाते । पचाद्यच् ॥ यद्वा । शृणोति । शु॰ । बाहुल का न : ॥

श्रोणि : । स्त्री॰ कट्याम् ॥ श्रोणति । श्रोणृ॰ । इन् ॥ यद्वा । श्रु यतीपुं लि॰ । शृ॰ । वहिश्रिश्रुयुद्रुग्ला हात्वरिभ्योनित्तितिनि : ॥ पथि ।

श्रोणीफलकम् । न॰ कटौ ॥

श्रोणीफलकम् । न॰ कटिपार्श्वे । कटौ ॥ श्रोणिः फलकमिव॰ धर्मा कारत्वात् ॥

श्रोणिबिम्बम् । न॰ कटिसूत्रे ॥

श्रोणिसूत्रम् । न॰ खड्गबन्धनसूत्रे । परतला॰ इ॰ भा॰ प्र॰ ॥

श्रोणी । स्त्री॰ कट्याम् ॥ पथि ॥ कृ दिकारादक्तिनइतिपक्षे ङीष् ॥

श्रोतव्य : । त्रि श्रवणीये । श्रोतुं योग्ये ॥ श्रोतव्य : श्रुतिवाक्येभ्योम

सत्यतपाः । पुं० मुनिविशेषे ।

सत्यधृतिः । पुं० ऋषिविशेषे ॥ त्रि० धृतिसत्यधैर्ये ॥ सत्यधार्यविलक्षणधैर्यधृतियुक्ते ॥

सत्यनारायणः । पुं० स्कन्दपुराणप्रसिद्धदेवताविशेषप्रसिद्धविष्णौ ॥

सत्यपरः । पुं० परमेश्वरे ॥ सत्यपरथ्रिदंधासिसाधनंवक्षिनुत्तः ॥

सत्यफलः । पुं० बिल्वदृक्षे ॥

सत्यभामा । स्त्री० श्रीकृष्णस्याष्टमहिष्यन्तर्गतमहिषीविशेषे ॥ दुर्गायाम् ॥

सत्यभारतः । पुं० कृष्णद्वैपायने । वेदव्यासे

सत्यम् । न० यथार्थे । अङ्गीकारे ॥ प्रतिज्ञायाम् ॥ अभ्युपगमे ॥ शपथे ॥ सत्ये ॥

सत्यवरा । स्त्री० सप्तद्वीपस्थनद्याम् ॥

सत्ययज्ञः । पुं० पौलुषिनामिम् निविशेषे ॥

सत्ययुगम् । न० चतुर्युगानांप्रथमयुगे । कृते ॥ यथा । कृतंसत्ययुगंत्रेताद्यो० द्वापरस्तिष्यौ । कलिश्चारक्रमात्युगमितिविद्याःगडोव ॥

सत्ययोनिः । पुं० परमेश्वरे ॥ सत्यंयमन्तपक्षकस्ययोनिःकारणम्

सत्ययौवनः । पुं० विद्याधरे ॥

सत्यरतः । पुं० सत्यव्रतराजपुत्रे ॥ व्यासे ॥ त्रि० सत्यशालि ॥ सत्येरतः ॥

सत्यलोकः । पुं० सप्तलोकान्तर्गतलोकविशेषे ॥ यथा । षड्गुणितपोलोकात्सत्यलोकोविराजते । अपुनर्मारकायत्रब्रह्मलोकोहिसस्मृतः ॥ जनलोकापेक्षयाचषड्गुणेन० द्वादशाधिकोटियोजनविस्तारं सत्यलोकः । अपुनर्मारकाः पुनर्मृत्युशून्याः ॥

सत्यवर्मा । पुं० ऋषौ ॥ त्रि० सत्यवादिनि ॥

सत्यवान् । पुं० नृपान्तरे ॥ त्रि० सत्यवादिनि ॥ सत्यमस्त्यस्मिन् मतुप् । मादुपधायाइतिमस्य वः ॥

सत्यवती । स्त्री० व्यासमातरि । कन्यायाम् ॥ नारदस्यपत्न्याम् ॥ ऋचीकमुनेर्भार्यायाम् । सत्यवादिन्याम् ॥ ङीप् ॥

सत्यवतीसुतः । पुं० व्यासे ॥

सत्यवाक् । पुं० ऋषौ ॥ काके ॥ त्रि० सत्यवादिनि ॥ सत्यावागस्य ॥

सत्यवाक्यः । पुं० भगवतीपुराणप्रसिद्धे मुनिविशेषे ॥ त्रि० सर्वास्ववस्थास्वपिसत्यवक्तरि ॥ सत्यंवाक्यमस्य ।

स्यात्मे शोके । त्रि० सत्त्वयुक्ते । कर्णसत्त्वविशाल ॥ सत्त्वेनविशालः ॥

सत्त्वसंशुद्धि : । स्त्री० अन्तःकरणस्य निर्मलतायाम् । श्रवणादिपरिपाकेनान्तःकरणस्यासम्भावनाविपरीतभावनादिमलराहित्ये सम्यक्शुद्धिः संशुद्धिः सत्त्वस्य संशुद्धिः । तथा सत्त्वशुद्धिर्भगवत्तत्त्वस्फूर्तियोग्यता ।

सत्त्वसङ्क्षय : । पुं० चित्तभङ्गे । प्रारब्धकार्यासिद्ध्यादिविषादः सत्त्वसङ्क्षयः ॥

सत्त्वसमाविष्ट : । त्रि० सत्त्वेनचात्मना० चात्मविवेकज्ञानेनैतुमाचित्तमतीकालिकयेन० सम्यग्ज्ञानप्रतिबन्धकरजस्तमोमलराहित्येन० चासमन्तात्फलाव्यभिचारेण० चाविष्टव्याप्ते ॥

सत्त्वसम्पन्न : । त्रि० सद्भावापन्ने ॥

सत्त्वस्थ : । त्रि० सत्त्वशीलप्रधाने ॥ पुं० विष्णौ ॥ सत्त्वं सत्त्वगुणं प्रकाशात्मकमधितिष्ठति पालनीयाधितायाविष्णुरूपेणेतिसत्त्वस्थोविष्णुः । यद्वासत्त्वेगुणेसर्वप्राणिषुज्ञेयरूपेधात्मरूपेणवातिष्ठतीतिसत्त्वस्थः । ब्रा० । सुविस्पष्टगतः ॥

सत्पत्रम् । न० संवर्त्तिकायाम् ॥

सत्पथ : । पुं० पथिसैऽध्वनि ॥ सं शासीपथ्याय । सम्मदादितत्पुरुषः । समासान्तश्च ॥

सत्पुत्र : । पुं० सत्पुत्रे ॥ सत्पुत्रेपातुकालेनवैश्योपिविद्विषंवयौ । पुत्राम्नोनरकात्त्रातः सतेनसुमहत्मना ॥

सत्पुरुष : । पुं० पञ्चमावपुरुषे ॥

सत्प्रतिग्रह : । पुं० साधुजनदत्तद्रव्यग्रहणे ॥ सद्भ्यः साधुभ्यः प्रतिग्रहोदानग्रहणम् । यथा । सम्विप्रागमाधर्म्यादायोलाभः क्रियोजयः । प्रयोगः कर्मयोगश्चसत्प्रतिग्रहएवचेतिमनुः ॥

सत्प्रतिपक्ष : । पुं० तुल्यव्यक्तौ । प्रतियोगिनि । न्यायमते० साध्याभावसाधकहेत्वन्तरंयस्यसन्तिन् ॥ यथा । शब्दोनित्यः श्रावणत्वात् शब्दवत् शब्दोऽनित्यः कार्यत्वाद् घटवदिति ॥ यथा । ह्रदोवह्निमान् धूमात्० इत्यादौवह्न्यभाववान्यवद्भ्रदादिरिति ॥

सत्फल : । पुं० दाडिमवृक्षे ॥ शोभनफलविशिष्टे ॥

सत्सङ्ग : । पुं० साधुसङ्गमे । सधर्मयतिभिर्जनसमागमे । यथोक्तं कुलार्णवे । सत्सङ्गश्चविवेकश्चनिर्मलंनयनद्वयम् । यस्यनास्तिनरः सोऽन्धः कथंनस्यादमार्गगः इति ॥

सत्सार : । पुं० खादिरे । खदिरसा

कोनामचतुर्थसमन्दनइति ॥ सनत्कुमारे ॥

सनपर्णी । स्त्री॰ अशनपर्ण्याम् ।

सना । अ॰ नित्ये ॥ सनति । अपस भ्रमौ । आप्रत्ययः ॥

सनाखल : । पुं॰ सनखले ॥ यथा । महेन्द्रभीमविमलकुरुवंशजगता : खला : । सनापदोत्तरा : साहसा : सनखला : खग ॥

सनात् । अ॰ नित्यार्थे ॥

सनातन : । पुं॰ अच्युते । विष्णौ ॥ शिवे ॥ ब्रह्मणि ॥ पितृणाम तिथौ ॥ दिव्यमनुष्ये , ब्रह्मणः पुत्रे । मुनिविशेषे ॥ परम्पराप्राप्ते॰ उपाधिपरिच्छेदेनिवृत्त : यस्मात्म स्वरूपत्वान्नित्ये॰ आत्मज्ञानंविनाछि न्नमपक्वेसंसारछवे ॥ वि॰ स्थिरे । सुनिश्चले । सर्वदैकरूपे । अवि नाशिनि ध्रुवे ॥ सनाभव : । साथस्थिरासितिव्युत्पत्तौतुट्च ॥ अनादिपरम्परागते । चिरन्तने ॥

सनातनी । स्त्री॰ लक्ष्म्याम् ॥ सरस्वत्याम् ॥ दुर्गायाम् । भवान्याम् । निर्वचनन्तु । सर्वकालेसनातनी विद्यमानेसनातनीतिच । सर्वसर्व कालेषुविद्यमानासनातनीति ॥ अ पिच । नित्यसत्यनित्यत्वबोधक यसनातनः । सदाभित्यानिर्गुणा याकीर्तितासासनातनीति ॥ टि

स्वान्नृदीप ॥

सनात्कुमार : । पुं॰ ब्रह्मण : पुत्रे॰ सनत्कुमारे ॥ सनात्॰ नित्यकुमार : ॥

सनाथ : । वि॰ सस्वामिके । नाथव ति ॥

सनाथा । सनाथिका । स्त्री॰ पतिमत्याम् । जीवद्भर्तृकायाम् ॥

सनाभः । पुं॰ सोदरभ्रातरि ॥

सनाभि : । पुं॰ ज्ञातौ । सपिण्डे ॥ सहोदरे ॥ समानोनाभिर्मूलपुरु षोऽस्य । ज्योतिरादिष्वपदेतिसमानस्य स : ॥ वि॰ तुल्ये । सदृशे ॥

समामक : । पुं॰ शिभाङ्गे ॥ वि॰ समाननामवति ॥

सनि: । स्त्री॰ भक्तौ । दाने ॥ सनो ति । यद्वादाने । खनिकषीत्यादि ना॰ इन् ॥ सनग्वा ॥ अर्थेप यायाम् । गुर्वादि प्रार्थनयाकचिद् र्थनियोजने ॥ यथा । हेस्वामिन्प्र साभिषेकंकुरु । अपिच । नाथिना धकुलाचारमसनीकुलवल्लभ। त्वत् पादाम्भोरुहच्छायांदेहिमूर्ध्नि कृपा निधे॰ इति ॥

सनित : । वि॰ प्रतिपन्ने ॥

सनिष्ठीवम् । न॰ सष्ठेवनवचसि । स निष्ठेवे । निष्ठेवनम् । ष्ठिवुनिर सने । घञ् । लघूपधगुण : । ट

धादरादित्वादीकार : । सहनिष्ठी वेन॰ स्वेष्मकणादिनिर्गमनेनवर्त्त तेइतिसनिष्ठीवम् ॥ त्रि॰ सहर्षि ॥

सनिष्ठेवम् । न॰ सश्लेष्मवचसि । अ स्पष्टक्ती । निष्ठेवनम्॰ निष्ठेव : । ष्ठिवु॰ । घञ् । लघूपधगुण : । सहनिष्ठेवेनश्लेष्मकणादिनिर्गमने नवर्त्ततइतिसनिष्ठेवम् ॥ अस्पष्टक्त सनिष्ठेवमित्यमर : ॥ त्रि॰ त इति ॥

सनी । स्त्री॰ सनिशब्दार्थे ॥

सनीड : । त्रि॰ निकटे । समीपे । उपकण्ठे ॥ समानंनीडंवासस्था नमस्य । सहनीडमितिवा ॥

सनुतर् । अ॰ अन्तर्द्धाने ॥

सन्तत : । पुं॰ स्वरविशेषे । तल्लक्ष णंयथा । सप्तान्तकाण्डगान्तमाहुराद्याक्षमथापिवा । सन्तत्याधीऽविस र्गीक्षात्सन्तत : समिगद्यतइति ॥ विकल्पोपातिकादिभेदात् । स न्तत्यामेरन्तर्येण । अविसर्गीक्षपरि त्यागी ॥ न॰ सतते ॥ त्रि॰ त इति । व्याप्ते ॥ विस्तीर्णे ॥ सम न्ततेस्म । तनु॰ । क्त : । अनुदात्तो पदेशेतिनलोप : । समोवाहितततयोरितिमलोपाभाव : ॥

सन्ततम् । अ॰ सातत्ये ॥

सन्तताभ्यास : । पुं॰ स्वाध्याये ॥

सन्तति : । स्त्री॰ गोत्रे । अभिजने । सन्ताने ॥ पङ्क्तौ । पुत्रपौत्रादीनां पारम्पर्ये ॥ विस्तारे ॥ तनये ॥ दुहितरि ॥ सन्तन्यते । तनोतेक्ति र्चाक्तिन् । पारम्पर्ये ॥

सन्तप्त : । त्रि॰ अध्वगमनादिनाश्रान्ते । ततमयायाथा । सन्तापितस्तुस न्तप्तोध्वपितथ्यापितीपदूनवे ति ॥ सन्ताप्यतेस्म । तपसन्तापे । क्त : अकर्मकत्वात्कर्त्तरिवाक्त : ॥ प रितोदुःखे ॥ अग्नितापयुक्ते ॥

सन्तमसम् । न॰ विष्वगध्वान्ते । व्याप कान्धकारे ॥ समन्तात्सर्वत : । तम : । अवसमन्धेभ्यस्तमसइत्यच् ॥

सन्तरणम् । न॰ तरणे । पारगमने । प्लवनपूर्वकदेशान्तरगमने ॥

सन्तर्हणम् । न॰ दृढसंश्लेषे ॥

सन्तर्पणम् । न॰ प्रीणने । तृप्तौ ॥ द्राक्षादाडिमखर्जूरीकदलीघनसारा लाजाचूर्णमध्वाज्यसंमिश्रिते ॥ त्रि॰ तृप्तिकारके ।

सन्तर्पित : त्रि॰ सम्यक्प्रीणिते

सन्तान : पुं॰ सन्ततौ । विस्तारे ॥ गोत्रे । वंशे । अन्ववाये ॥ अप त्ये ॥ सन्तन्यते । तनुविस्तारे ॥ घञ् ॥ सुरद्रुमे । कल्पवृक्षे ॥ सम्यक्तनोतिपुष्पाणित्वलितीति सन्ते॰तनोतेरुपसङ्ख्यानात्कः ॥ सम्यक्सन्तन्तेपुष्पाण्यस्मिन्नित्यधि

कार्ये प्रवर्त्तेतिषट्क्षमा ॥

सन्तानिका । स्त्री० मर्कटजालके ॥ क्षुरिकाफले । फेने ॥ क्षीरादिसारे । मलाङ्ग० द्र० भा० ॥ सन्तानिकारस : क्षीरसभ्यापिसासवासनुत् । सर्पीक्षुष्टक्षोक्तिशाषवासव प्रश्नकदा ॥

सन्ताप : । पुं० अग्निजतापे । सञ्ज्वरे ॥ सन्तापयति । तपसन्तापे । वर्द्धत : । घञाघञ् ॥ सम्यक्तापे । पीडायाम् ॥

सन्तापन : । पुं० कामबाणविशेषे ॥ त्रि० सम्यक्तापकारके ॥

सन्तापित : । त्रि० भयादिनाक्रान्ते । सन्तप्ते ॥ सन्तापयति स्म । तपदाहे चुरादि : । क्त : । अकर्मकत्वात् कर्त्तरिवाक्त : ॥

सन्तार : । पुं० सन्तरणे ॥

सन्ति : । स्त्री० दाने ॥ अवसाने ॥ पुं० भृत्ये ॥

सन्तुष्ट : । त्रि० उत्पन्नात्मप्रत्यये । निवृत्तस्पृहे । सन्तोषयुक्ते ॥ यथा । अप्राप्तविषयेऽप्यसम्प्राप्ते समतां गत : । अदृष्टखेदाखेदोय : सन्तुष्ट इति कथ्यते ॥ असन्तुष्टाद्विजानष्टा : सन्तुष्टाश्चमहीभुज : । सलज्जागणिकानष्टानिर्लज्जाश्चकुलाङ्गना ॥ पुं० अश्वकर्णे । खदिरद्रु० भा० प्रसिद्ध ॥

सन्तृप्त : । त्रि० पिहिते । व्याप्ते ॥

सन्तोष : । पुं० विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपायांचित्तवृत्तौ । आनन्दे । यदृच्छालाभसन्तुष्टौ अलाभेऽविषादे । अलम्बुद्धौ । यथासक्त्यभृत्यात्मनापधारणाद्यज्ञकपस्वयज्ञाद्यनुष्ठानमाचोपितधनानधिकायांस्पृहायाम् ॥ सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्चधावताम् ॥ धृतौ । हर्षे ॥

सन्त्रास : । पुं० साध्वसे । भये ॥

सन्दंश : । पुं० पादसुखे । संदशतीति । अव्यतीतौहयन्तविशेषे । एकाङ्कानुवादेनविधीयमानयोरप्यङ्गयोरन्तरापिपिहितत्वसन्दंश : ॥ नरकविशेषे ॥

सन्दंशिका । स्त्री० कुसुत्याम् ॥ कीटयन्त्रविशेषे । कातारि० द्रु० गौ० दे० भा० प्र० ॥

सन्दर्भ : । पुं० प्रबन्धे । रचनायाम् । ग्रन्थे ॥ प्रकरणे ॥

सन्दर्शनम् । न० साक्षात्कारे । संदृश्यते । दृशिर्० । ल्युट् ॥ सम्यक्प्रकारेणदर्शनंश्च ॥

सन्दृष्ट । त्रि० सम्यक्प्रकारेणदृष्टे ॥

सन्दानम् । न० दामनि । दीपनकालेशादधन्वनस्थो ॥ सन्दीयते

सम्प्रदाहाग्वम्नदत्यऽस्याञ्ट्।

पुं॰ गजस्याष्ठीवतोरधोभागे ॥

सन्दानिका। स्त्री॰ परिखदिरे।

विट्खदिरे ॥

सन्दानित:। त्रि॰ बद्धे ॥ सन्दान्य

तेस्म ॥ दानखण्डने। क्तः॥

सन्दानिनी। स्त्री॰ गोगृहे ॥

सन्दाव:। पुं॰ पलायने। प्रद्रावे

॥ सन्द्रवनम्। द्रुगतौ। समि

युद्रुदुवइतिघञ्॥

सन्दाह:। पुं॰ मुखतालौष्ठदा

हे॥

सन्दिग्ध:। त्रि॰ संशयग्रस्ते। सं

शययुक्ते॥ सम्दिह्यतेस्म। दिह॰

। क्तः॥

सन्दिग्धमति:। त्रि॰ सन्देहविष

यीभूतबुद्धियुक्ते॥

सन्दिग्धार्थ:। पुं॰ सन्देहविषयी

भूतार्थे॥ त्रि॰ तद्विशिष्टे॥

संदित:। त्रि॰ बद्धे। बद्धपर्यायः

। बद्धेसन्दानितंमूतमुद्दितंसन्दि

तंसितमिति॥ सन्दीयतेस्म। दो

अवखण्डने। क्तः॥ सन्दायतेस्म॰

षा॥ षञ्चितो॥

सन्दिष्टम्। न॰ वार्त्तायाम्। स

न्देशे। त्रि॰ व्याहृते। उक्ते।

कथिते।

सन्दिष्टार्थ:। त्रि॰ सन्देशहरे॥

द्र॰ कश्चित्॥

संदिहान:। त्रि॰ सांशयिके। य

था। सन्दिहान: सांशयिक: सं

शयापन्नमानस:॥

सन्दिह्यमान:। त्रि॰ संशयविषयी

भूते। सांशयिके॥

सन्दी। स्त्री॰ खट्वायाम्॥ निषदा

खट्टिकासन्दीतिचिन्तामणिः॥

सन्दीप्त:। त्रि॰ प्रज्वलिते। वसव

ठा॰ द्र॰ भा॰॥ यथायावत्तिष्ठ

तिदेहेतावत्तत्त्वंसमभ्यसेत्।

सन्दीप्तेभवनेकोनुकूपंखनतिवार्त्ते

ति॥ सन्दीप्यतेस्म। दीपीदीप्तौ

। क्तः। ईदित्वान्नेट्॥

सन्दीप्य:। पुं॰ मयूरशिखावृक्षे॥

सन्दृब्ध:। त्रि॰ सम्यग्ग्रथिते॥

बसन्दृब्धेतिग्रथितवचनम्॥

सन्देश:। पुं॰ संवादे। संदेशः॰

द्र॰ भा॰॥ चोटकयक्ष्योरन्दि

मत्याज्योसंप्रवर्त्तिनौदेहेदेशौ

सन्देशाद्योते। सन्दिश्यते। दि

श॰। अर्थेघञ्॥

सन्देशवाक्। स्त्री॰ वाचिके। परे

षोक्तार्थेस्वपरस्य॥ सन्दि

श्यतेद्वतिसंदेश:। संदेशार्थ:॰

तद्वाक्॥ सन्दिष्टोर्थोयस्यांवाच

सा॥

सन्देशहर:। पुं॰ दूते॥ संदेशं

वचिकंहरति। हृञ्॰। हरतेरनु

द्यमनेऽच्॥

वसेत् पर्वतमूलेषु प्रौढो योऽध्यानधारणात् । सारात् सारं विजानाति पर्वतः परिकीर्त्तितः ॥ ६ ॥ वसेत् सागरगम्भीरो वनरत्नपरिग्रहः । मर्य्यादाञ्च न लङ्घेत सागरः परिकीर्त्तितः ॥ ७ ॥ स्वरज्ञानवशी नित्यं स्वरवादी कवीश्वरः । संसारसागरे साराभिज्ञो यो हि सरस्वती ॥ ८ ॥ विद्याभारेण सम्पूर्णः सर्व्वभारं परित्यजेत् । दुःखभारं न जानाति भारती परिकीर्त्तितः ॥ ९ ॥ ज्ञानतत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः । परब्रह्मरतो नित्यं पुरीनामा स उच्यते ॥ १० ॥ इति दशनामकरविजये श्रीविद्यारण्यस्वामिनः ॥ अथ धर्म्माचरणादिकं मनुष्यं तीर्थाय वर्त्तं गच्छन्तं पुराणादिपुरुषत्वम् । विधानस्य श्रीमच्छङ्कराचार्य्यमते श्रीसदाशिवेनोक्तम् तत्तत्रोऽप्यवगन्तव्यम् । तथा सोऽस्यास्ति । एतद्भूमिः । यक्षा मतिविधिमार्गेनैकाः । सर्व्वसङ्गविमुक्तं सूक्ष्मध्याननियोगरतञ्च । नत स्यादपनं कार्य्यं नैव पिण्डोदकक्रिया ॥ निदध्यात् प्रणवेनैव बिलेभिक्षोः कलेवरम् । पौर्व्वणं श्रवनश्चैव सर्व्वं तेनैव कारयेत् इति ॥

सन्मुख : । त्रि॰ अभिमुखे ॥

सपक्ष : । त्रि॰ निश्चितसाध्यवति । साध्यवत्त्वनिश्चयविषये ॥ यथा धूमवत्त्वे महानसम् ॥ अनुकूले ॥ समानः पक्षः । इति विग्रहे समानस्येतियोगविभागात् सादेशः ॥ यद्वा । सपक्षः सहपक्षेण । तेनसहेतिविग्रहे बहुव्रीहिः । समानः पक्षोऽस्य इति सपक्षः ॥

सपथ : । पुं॰ शपथे ॥ यथा गरुडपुराणे व्यवहारविधौ ॥ यदायदा समयपराजितो भवामि तदाहं हास्यामीति ॥

सपत्राकरणम् । न॰ अत्यन्तपीडने ॥ सपत्रनिष्पत्रादतिव्यथने इति डाच् ॥

सपत्राकृत : । त्रि॰ अत्यन्तपीडिते ॥

सपत्राकृति : । स्त्री॰ अत्यन्तदुःखे । निष्पत्राकृतौ ॥

सपत्न : । पुं॰ शत्रौ । सपत्नीव । व्यञ् सपत्नइतिनिर्द्देशादकारः । इवार्थे अच् प्रत्ययो वा ।

सपत्नारि : । पुं॰ वेणुवंशे ॥ शत्रौ : शत्रौ ॥ सपत्नस्यारि : ॥

सपत्नी । स्त्री॰ समानपतिकायाम् ॥ समानः एकः पतिर्यस्याः । इति विग्रहे सपत्न्यादिषु समानस्य सभावो निपात्यते । नित्यं सपत्न्यादिष्विति ङीप् ॥

सपत्नीक : । पुं॰ पत्नीसहिते ॥ सह पत्न्या वर्त्तते इति तथा अनद्युतश्चेति

तेन मातामहादीनामेकपिण्डसंबन्धेन सपिण्डता । सपिण्डस्य भावः । तल् । टाप् ॥

सपिण्डीकरणम् । न० श्राद्धविशेषः । प्रेतपिण्डस्य पितृपिण्डेन सह मिश्रीकरणं ॥ द्वादशेऽह्नि संवत्सरे सपिण्डीकरणमिति मुख्यकल्पः । तदुक्तं त्रिपक्षे मासे तदूर्ध्वमपि त्रिमासः तथाप्यसकौ त्रिपक्षः तथाप्यसकौ यदीच्छेत् गमैथुनमाचरेत् अभिहिते द्वादशमासिकानि श्राद्धानि कृत्वा तदनन्तरं सपिण्डीकरणकालः ॥ सपिण्डीकरणविधेः कूर्मपुराणं यथा । सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः । कुर्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमाः ॥ प्रेतार्थं पितृपात्रेषु पात्रमासेचयेत्ततः । ये समाना इति द्वाभ्यां पिण्डानप्येवमेव हि ॥ सपिण्डीकरणं श्राद्धं देवपूर्वं विधीयते । पितॄनावाहयेत्तत्र पृथक् पिण्डांश्च निर्दिशेत् ॥ ये सपिण्डीकृताः प्रेता न तेषां स्यात्पृथक् क्रिया । यस्तु कुर्यात्पृथक् पिण्डं पितृहा सोऽभिजायते ॥ इति ॥

सपीतकः । पुं० राजकोशातक्याम् ॥

सपीतिः । स्त्री० आत्मीयेन जनेन सह मिलित्वैककालकृतपाने । तुल्यपाने । पानम् । पापाने स्त्रियां क्तिन् । घुमास्थेतीत्वम् । समानापीतिः



। समानस्य छन्दसीति सभावः । सपीतिर्वा । सहस्य सः संज्ञायां ॥

सपीतिका । स्त्री० घस्तिघोषायाम् ॥

सपुत्रः । त्रि० पुत्रेण सह वर्त्तमाने ॥

सप्तकः । पुं० सप्तसङ्ख्यायाम् । त्रि० सप्तसङ्ख्याविशिष्टे ॥ सप्तभिः क्रीतवस्तुनि ॥ सङ्ख्यायाः अतिशदन्तायाः कन्निति सूत्रेण कन् ॥

सप्तकी । स्त्री० मेखलायाम् । काञ्च्याम् । कटिभूषणे ॥ सप्तति । सप्त समवायि । याङ्गुलमानत्वम् । स्वार्थे कन् ॥ यद्वा । सप्तभिरनेकाभिः किङ्किणीभिर्या० समस्वरानुकायति । कै शब्दे । आतोऽनुपसर्गे कः । गौरादित्वान्ङीष् ॥

सप्तगङ्गम् । न० तीर्थविशेषे ॥

सप्तगोदावरम् । न० सप्तानां गोदावरीणां समाहारे ॥ तीर्थविशेषे ॥

सप्तच्छदः । पुं० सप्तपर्णवृक्षे । काण्डे काण्डे सप्तच्छदा यस्य । सङ्ख्यायाः अक्षिविषये अपि साधुत्वम् ॥ म० तत्पुष्पे ॥

सप्तजिह्वः । पुं० वह्नौ । अग्नौ ॥ सप्त काल्याद्या जिह्वा आकृतिमत्यो यस्य सः । तथाहि । काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः इति

सम्यगन्वय : ॥

समन्वारम्भणम् । न० समनुगमने ॥

समन्वित : । त्रि० सम्यगन्विते । संयुक्ते ॥

समन्वितलय : । पुं० एकताले ॥ सम्यगन्वितोलयोऽत्रगीतवाद्यादीनांसाम्यंयत्र : ॥ सम्यगन्वितोऽत्रलयोमध्यमयोर्यस्मिन् ॥

समपद : । पुं० रतिबन्धविशेषे ॥ यथा । योषित्पादौहृदिस्थाप्यकराभ्यांपीडयेत्स्तनौ । यथेष्टंताडयेद्योनिं बन्ध : समपद : स्मृतइति ॥ न० युद्धकालेधन्विनांपादन्यासविशेषे । धन्विनांपादयोस्तुल्यरूपतयाधारणे ॥ धन्विनांस्थाने ॥

समपर्य्यासनम् । न० परिवर्त्तने ॥

समपादम् । न० धन्विनांपादयोस्तुल्यरूपतयाधारणे ॥

समबुद्धि : । त्रि० सर्वत्रसमदेयबुद्धौ ॥ यथा : कीदृक्धर्मा० कृत्स्नव्यापृतबुद्धौ ॥

समभिव्याहार : । पुं० सहिते ।

समभिव्याहृत : । त्रि० सहोच्चरिते । सहिते ॥

समभिहार : । पुं० आभीक्ष्ण्ये । पौन : पुन्ये । भृशार्थे ॥ समभिहरणम् । हृञ्० । घञ् ॥ सम्यगभिहारोवा ॥ क्रियाणांपौनःपुन्यंभृशार्थोवा । द्विरुक्तेऽर्थयोरपदयो :

सहोच्चारणे ॥

समभूमि : । स्त्री० समानस्थाने । भावौ ॥

समम् । अ० सहार्थे । सार्द्धम् । सयम् ॥ समति । षम० । अम् ॥

समय : । पुं० काले । दिष्टे । अनेहसि ॥ सम्यगेति । इण् गतौ । पचाद्यच् ॥ शपथे ॥ समयेविसर्पंसुपकारिहातम् । सर्वसमयेह्यतसुपकार्यंपभयति ॥ शपथे ॥ आचारे ॥ सिद्धान्ते ॥ विधि । संविदि ॥ क्रियाकारे ॥ निर्देशे ॥ सङ्केते ॥ भाषायाम् ॥ सम्पदि ॥ नियमे ॥ अवसरे ॥ समयनम्० समीयन्तेऽनेनवा० समीतिवा । इण्० इणगतौवा । एरच्० पुंसौतिघोवा । पचाद्यच्वा । सङ्गमे ॥

समयकार : । पुं० सङ्केते ॥

समयज्ञ : । त्रि० कालज्ञे ॥ समयंजानाति । ज्ञा० । क : ॥

समयभेदी । त्रि० संविद्व्यतिक्रमकारिणि ॥

समया । अ० अन्तिके । निकटे । मध्ये ॥ समेति० समयनंवा । इण्० । आ: समिण्निकषिभ्याम् ॥ कालविज्ञापने ॥

समयाचार : । पुं० समयोचिताचरणे ॥ तन्त्रविशेषे ॥

समयाध्युषित : । पुं॰ सूर्यनक्षत्रवर्ज्जितकाले ॥ समय : अध्युषितो यस्मिन् ॥

समयी । पुं॰ भगवद्व्याख्यानभक्तिमार्गप्रतिपादकशास्त्रनिष्ठे ॥

समर : । पुं॰ न॰ युद्धे । रणे ॥ समरणम् । ऋगतौ॰ भ्वादि॰ । अदेरप् ॥

समरभ : । पुं॰ रतिबन्धविशेषे ॥ यथा । उत्तानं चाङ्गयसंयुक्तं कृत्वायोषित्पदद्वयम् । कामी भुक्त्वा रमेत् कामीयस्य : समरभ : स्मृतस्तदा ॥

समरविजया । स्त्री॰ यात्राप्रभेदे ॥ समरविजययात्रायां गविलग्नस्थितौ मयोगेषु ॥ स्थितौ क्षयोगेषु॰ राजयोगेषु । सा कर्त्तव्यान्वयाथमनववस्तियात्रायोदृष्टव्या ॥

समर्थ : । त्रि॰ हिते ॥ शक्ते । शक्तिसम्पन्ने ॥ संबद्धे । उपायकुशली । समर्थयति॰ समर्थ्यते वा । अर्थपयाञ्चायाम् । पचाद्यच्॰ घञ् वा ॥ सम्बद्धार्थे ॥

समर्थता । स्त्री॰ सामर्थ्ये ॥

समर्थनम् । न॰ अनुचितोचितनिश्चये ॥ सम्प्रधारणायाम् ॥ पर्य्यायौ : सम्पूर्त्ति॰ ल्युट् ॥ चोद्यपरिहारे ॥

समर्थना । स्त्री॰ समर्थने ॥ युच् ॥

समर्थयिता । त्रि॰ प्रतिपादयितरि ॥

समर्थित : । त्रि॰ कृतसमाधाने ॥

समर्द्धक : । त्रि॰ वरदातरि । वरदे । इष्टार्थप्रदेदेवतादौ ॥ समृध्नोति । अर्द्धवृद्धौ । ण्वुल् ॥

समर्पणम् । न॰ सम्यगर्पणे । दानरूपार्पणे । सौंपना॰ इ॰ भा॰ प्र॰ ॥

समर्पित : । त्रि॰ कृतसमर्पणे ॥ सम्प्रोते । सम्प्रवेशिते ॥ स्थापिते ॥

समर्य्याद : । पुं॰ समीपे ॥ त्रि॰ मर्य्यादासहिते ॥ समाना मर्य्यादास्य । सहमर्य्यादेनेति वा ॥ हेमचन्द्रस्तु । समर्य्यादंमर्य्यादासहितेपिच । सुस्यानुशायिनिग्रिमीप्रकृतस्थानुवर्त्तने । देशीख्यादि॰ इत्याह ॥

समल : । त्रि॰ मलिने । आविले ॥

समवतार : । पुं॰ तीर्थे ॥

समवर्त्ती । पुं॰ परेतराजे । धर्मराजे । पितृपती । यमे ॥ त्रि॰ तुल्यवर्त्तनशीले ॥ समं वर्त्तितुं शीलमस्य । सुप्यजातावितिणिनि : ॥

समवसर्गा । स्त्री॰ रक्षाम् ॥ समवसर्पते । ऋज॰ । समवपूर्वाद्विचियान् । पचौरितिकुत्वम् ॥

समवस्थित : । त्रि॰ अविनाशिनि । जन्मादिविनाशान्तभावविकाररहितया॰ सम्यक्तयाऽवस्थिते ॥

समवाकार : । पुं॰ नाटकभेदे ॥

समवाय : । पुं॰ समूहे ॥ कणादि

पूर्व्वप्रशमसंस्कारपाटवेनतदाधिक्यंप्रशान्तवाहितेति । तत्कारणञ्च सूचयामास । विरामप्रत्ययाभ्यासपूर्व्वः संस्कारशेषोऽन्यइति । विरामोऽत्र • वृत्त्युपरमः तस्यप्रत्ययः कारणं वृत्त्युपरमार्थः पुरुषप्रयत्नस्तस्याभ्यासः पौनःपुन्येनसम्पादनम् • तत्पूर्व्वकस्तज्जन्योऽन्यः सम्प्रज्ञातादिलक्षणोऽसम्प्रज्ञातइत्यर्थः । एतादृशीयथात्मसंयमयोगस्तएवाग्निस्तस्मिन् • ज्ञानदीपिते • ज्ञानंवेदान्तवाक्यजन्योब्रह्मात्मैक्यसाक्षात्कारः • तेनाविद्यातत्कार्य्यनाशद्वारादीपितेप्रज्वलितेऽग्नावित्यर्थः । एवंविधेसमाधौसमष्टिलिङ्गशरीरमपरिशुद्धतिप्रविलापयन्तीत्यर्थः । तदेकतानतामेतिससमाधिर्विधीयते । तत् • ध्यानम् • ऐकतानताम् • ध्येयैकनिर्भासत्वम् • यदाऽभ्येति • 'तदा • समाधिरितिधात्वे प्रदिश्यते । लक्षणन्तु । निर्विकारतयावृत्त्या ब्रह्माकारतयापुनः । वृत्तिविस्मरणंसम्यक्समाधिर्ज्ञानसंज्ञकः ॥ अपिच । ध्यातृध्यानेपरित्यज्यक्रमाद्ध्येयैकगोचरम् । निवातदीपवच्चित्तंसमाधिरभिधीयतइति ॥ पुनश्च । नित्यंशुद्धंबुद्धियुक्तंसत्यमानन्दमद्वयम् । तुरीयमक्षरंब्रह्मापदमग्निपरंपदम् । अहमस्मीत्यव

स्थानंसमाधिरितिगीयते ॥ इ • गा • ४४ ॥ अपिच । तस्यैवकल्पनाहीनंस्वरूपग्रहणंहियत् । मनसाध्याननिष्पाद्यंसमाधिः सोऽभिधीयते ॥ इ • वि • पु • ६ अंशः ७ । इमंगुणसमाहारमात्मत्वेनपश्यतः । अन्तःशीतलतायस्य समाधिरितिकथ्यते । इतियोगवाशिष्ठेउपशमप्रकरणम् ॥ समाधीयतेऽनेनअस्मिन् • समाधानमनेनवा । समाङ्पूर्व्वाद्धाञोऽधिकरणादौ • उपसर्गेघोः किः ॥

समाधिविघ्नः । पुं • अयविघ्नेपकपायरसास्वादलक्षणे कृतुष्टु ॥

समाधिस्थः । त्रि • व्युत्थितचित्तः ॥ समाधियुक्तः ॥ यथा । मनः सङ्कल्परहितंमिन्द्रियार्थानचिन्तयन् । यस्यब्रह्मणिसंलीनंसमाधिस्थः सकीर्त्तितः ॥ ध्यायतः परमात्मानमात्मस्थं यस्ययोगिनः । मनस्तन्मयतांयातिसमाधिस्थः सकीर्त्तितः ॥ इतिगारुडेगीतासारे २४ • अध्यायः ॥

समानः । पुं • इन्द्राभिसर्व्वसन्धिगतो वायुविशेषे । शरीरमध्यगतेऽग्निसमीपात्रपानादिसमीकरणकरोवायौ । नाभिसंस्थिते ॥ यथा । पीतंभक्षितमाघ्रातंरक्तपित्तकफानिलम् । समंनयतिगात्रेषुसमानो

नामसमासतद्धित । षट्कारकलकर्षो
प ॥ समानशब्देनपर्यायार्थेन
हैशादेकोभिधीयन्ते द्वसमानाद्व
तिवचनाद्दितिकैयट ॥ वचना
दिति । यथा॰ इदं वक्त पटस्त
स्तल द्वसमानाद्दितिपरं व्याकरण
वचनाद्दित्यथ इतिविवरणम् । वि॰
सती । साध्वी ॥ समे । तुल्ये ।
जनातिरिक्तवर्णे ॥ एकस्मिन् ॥
समन्तादनिल्यनेन । यम॰ । इल
र्थे लिघञ् ॥ समतिवा यम ॰ ।
राच्छोल्यवयीभवनयक्तिपुवानम्
। चागमधासनमनित्यभिति सुमन
॥ सवमानेनवर्त्ततद्धितिवा । वीप
सर्वनश्रेतिसभाव : ॥ समान
मानमश्लेतिमा । समानश्चन्द
सीलिप : ।

समानकालीनः । वि॰ समकाली
त्पत्तिकं ॥ यथा । गोदुह्यमानः
स्तागतः॰ दुग्धास्तागमनद्रव्यादी
समानकालीनत्वं मापद्यते । तेनगो
विषयकवर्त्तमानदोहनकालीनग
मनानुकूलकृतिमान् । एवं गोवि
षयकातीतदोहनसमानकालीनस्वो
तगमनानुकूलकृतिमानितिबोध ॥

समानयानकर्म्मा । पुं॰ सन्धेः प्रभेदे
॥ यथा । तात्कालिकफललाभा
र्थं सुत्तरकालीनफललाभार्थं चायथ
रात्रान्तरेयसहान्यंप्रतियानादिक
र्म क्रियते॰ ससमानयानकर्मासन्धि
र्वैय : ॥

समानाधिकरणः । पुं॰ समानविष
[illegible] ॥

समानाभिहारः । पुं॰ समानगुणानां
मिश्रणे ॥ यथा॰ तोयद्रसुमकल
बिन्दूनां॰ समानगुणसमाभिहारः
यथाक्षोमादिपादिदुग्धपलितानांग
व्यदुग्धानाम् ॥

समानालङ्कृतिः । स्त्री॰ अलङ्कारवि
शेषे ॥ यथा । समानालङ्कृतिर्यो
गेवस्तुनोरनुरूपयोरिति ॥

समानिका । स्त्री॰ वर्णवृत्तान्तरे ॥
चारमेकपादासङ्कलाभवेत्तदा ।
समवर्णमिश्रितासांसमानिकामता
। यथा । पक्षचारुचञ्चुपाणीपनीर
जस्विना ॥ चालिमन्मनोहतं य
श्यावदसोधितम् ॥ अमुद्रमेदेपि
। श्लोरस्रोतसमानिकातु । यथा ।
यक्षकृच्छपादवस्त्रमदिहृततडागत
श्च । धी : समानिकापरेषगो
भितायमश्वरेण ॥

समानोदकः । पुं॰ चतुर्दशपुरुषपर्य्य
र्यं गोत्र जन्मनामस्मृतिपर्य्यन्तो च ॥
गोत्रसमाप्ते ॥

समानोदर्य्यः । पुं॰ सहोदरे । सो
दर्ये ॥ समानेउदरेशयितः स्थि
तः । समानोदरेणधितयोचोदा
त्तद्धितयत् । विभाषोदरइतिया

दन्यपदार्थप्रधानः । क्वचिदुभयपदार्थप्रधानइति ॥ पुनश्चद्विविधो नित्याऽनित्यभेदात् । अविग्रहोनित्यसमासः । अस्वपदविग्रहोवा । समस्यमानयावत्पदरहितविग्रहवानित्यर्थः ॥ तद्भिन्नोऽनित्यः ॥ अपिच । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः । परार्थाभिधानंवृत्तिः । परशब्दस्यार्थस्याभिधानमित्यर्थः । तच्चार्थबोधकशक्तिरूपः । सद्विधा । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः । यथाराज्ञः पुरुषः । राजन्ङस् पुरुषसु इति । अविग्रहोनित्यसमासोऽस्वपदविग्रहोवा । समासश्चतुर्द्धेतिप्रायोवादः । अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारेष्वभूतानामपिसहसुपेतिविधानात् । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानोबहुव्रीहिः । उभयपदार्थप्रधानोद्वन्द्वः इत्यपिप्रायोवादः प्रायोभिप्रायः । सूपप्रति उन्मत्तगङ्गमित्याद्यव्ययीभावे । अतिमालादौतत्पुरुषे । द्वित्राः सपुत्रइत्यादिबहुव्रीहौ । दन्तोष्ठमित्यादिद्वन्द्वे चाभावात् । तत्पुरुषविशेषः कर्मधारयः । तद्विशेषोद्विगुः । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । तत्पुरुषस्य क्वचिदेवेत्युक्तम् ॥ किञ्च । सुपां सुपातिङानाम्नाधातुनाऽथतिङांतिङा । सुबन्तेनेतिविज्ञेयः समासः षड्विधोबुधैः ॥ सुपा राजपुरुषः । तिङा पर्यभूषत् । नाम्ना कुम्भकारः । धातुना कटप्रूः अजस्रम् । तिङां तिङा पिबतखादत । तिङांसुपा कृन्तविचक्षणेतियस्यांक्रियायांसाकृन्तविचक्षणा । एहीडादयोऽन्यपदार्थे इति मयूरव्यंसकादौपाठात् समासः । समुदाये । सम[illegible] ॥

समासक्तः । त्रि० सम्यगासक्ते । संयुक्ते ॥

समासञ्जनम् । न० समासङ्गे । मेलने संयोगे ।

समासत्तिः । स्त्री० संनिकर्षे ॥

समासन्नः । त्रि० प्रत्यासन्ने । निकटवर्त्तिनि ॥ समासीदतिस्म । स आ सद० । गत्यर्थेतिक्तः । समासादतेऽप्यत्र ॥

समासवान् । पुं० तुन्ने । नन्दिवृक्षे ॥ त्रि० समासाश्रये । समासविशिष्टे ॥

समासादितः । त्रि० आहृते । प्राप्ते ॥

समासाद्यः । त्रि० प्राप्ये । गम्ये ।

पांसुशय्ये । समासाद्यते । षड्
वृ० । कटहीयञ्च तु

समासार्था । स्त्री० समस्यायाम् । पूरणकृत पदाकाङ्क्षायाम् । कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमानायाम् । यथा । शतचन्द्रं नभस्तलमिति । तत्र० दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेनेत्यादिना० सा० पूर्यते ॥ समासोऽर्थोऽस्याः ॥

समासोक्तिः । स्त्री० अर्थालङ्कारभेदे ॥ यथा । परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः । प्रकृतार्थप्रतिपादकवाक्येन० श्लिष्टविशेषणमाहात्म्यान्न तु विशेष्यस्य सामर्थ्यादपि० यदप्रकृतस्यार्थस्याभिधानं सा समासोक्तिः ॥ उदाहरणम् । लहिऊण तुज्झ बाहुप्फंसं जीए स कोवि उल्लासो । जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा ॥ अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति । प्राकृतस्य संस्कृतन्तु । लब्धा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः । जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सेति ॥ अत्र बाहुस्पर्शाभप्रयुक्तोल्लासादिसाधारणविशेषणमाहात्म्याज्जयलक्ष्मीवृत्तान्तेनाधिकारप्रस्तुतनायिकावृत्तान्तस्य तयागम्यत इति समासोक्तिरलङ्कारः ॥



समाहरणम् । न० समाहारे ॥

समाहारः । पुं० । समुच्चये । समुदायकरणे । एकत्रकरणे । बहूनां भिन्नानां साध्यापारेणोद्ध्यावापसम्भूलीविसुवनमपद्राणीकरणे । सङ्क्षेपे सङ्ग्रहे । संहतिप्रधानेऽथे द्विगौ ॥ यथा कवीपानदम्पाणत्वम् । समीहपदमिति ॥ अत्र संहतेरेकत्वादेकवचनं नित्यक्लीबत्वाञ्च भवतो ॥ समाहरणम् । ह अ० । घञ् । सम्यगाहारे ॥

समाहितः । त्रि० यतात्मनि । अनन्यमनसि । समाहितत्वमेकाग्रमनसः अवधानादिषु ॥ समाधिस्थे ॥ उपसंहृते ॥ आहिते ॥ निर्विवादीकृते ॥ प्रतिज्ञाते । समुचिते । अङ्गीकृते ॥ समाधीयते स्म । क्तः । दधातेर्हिः ॥ सम्यगाहितः स्थितोऽत्र ॥ सावधाने ॥ अलङ्कारान्तरे ॥

समाहृतः । त्रि० सम्मीलिते ॥

समाहृतिः । स्त्री० सङ्ग्रहे ॥ समाहरणम् । भावे क्तिन् ॥ एकपदार्थानामनेकपदार्थानां वा एकाभिप्रायाणां वाक्यानां समाहरणे । सङ्क्षिप्ते० सङ्क्षेपेण प्रतिपद्यतेऽनया । क्तिन् ॥

समाह्वयः । पुं० आह्वाने । सङ्गरे ॥ आह्वाने ॥ प्राणिद्यूते । पशुभिः

पञ्चभिः शीघ्रं हुते ॥ तस्य निषिद्धत्वं यथा । "द्यूतं समाह्वयञ्चैव राजा राष्ट्रान्निवारयेत् । राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ । तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥ अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते । प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥ द्यूतं समाह्वयञ्चैव यः कुर्य्यात् कारयेत वा । तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिन इति ॥ स समाङ्पूर्ब्बोऽत्र । ह्वेञ् स्पर्द्धायाम् । पुंसीति घः । बाहुलकात्त्वम् ॥

समाह्वा । स्त्री० गोजिह्वायाम् । गोजियाख्याता० इ० भा० प्रसिद्धा ॥

समित् । अ० मिन्दायाम् ॥

समित् । स्त्री० युद्धे । इत्यमरः ॥ समयनम् । इण् गतौ । सम्पदादित्वात् क्विप् । तुक् ॥

समितः । त्रि० सङ्गते ॥ सम्यक् इतः ॥

समिता । स्त्री० गोधूमचूर्णविशेषे । मयदा० इ० भा० प्र० ॥ यथा । गोधूमाः क्षालिता धौताः कुट्टिताः शोषितास्ततः । प्रोक्षिता यन्त्रनिष्पिष्टाश्चालिताः समिता मता इति राजनिर्घण्टः ॥

समितिः । स्त्री० आजौ । सम्पराये । इत्यमरः । सङ्ग्रामे । समायाम् ॥ सङ्गमे । साम्ये ॥ संहतौ ॥ सहविद्यमानामिलितैः समितिः प्रमाऽस्याम् । समयनम् । समीयतेऽस्याम् । इण् गतौ । क्तिन् । समयन्त्यस्यां वा ॥

समितिञ्जयः । पुं० श्रीकृष्णे ॥ समितौ युद्धे जयति । जि जये । संज्ञायां भृतवृजीत्यादिना खच् मुमागमः ॥ समितिं युद्धं जयतीति वा ॥

समितिनन्दनः । त्रि० युद्धोत्सुके ॥ नन्दतीति नन्दनः । समितौ युद्धे नन्दनः ॥

समिथः । पुं० वह्नौ ॥ समेति । इण् गतौ । समीणश्चेति थक् ॥ सङ्ग्रामे सम्यगीतिप्रयार्थश्च ॥

समिद्धः । त्रि० प्रज्वलिते । सम्यग्दीप्ते । समिद्धिम्माघाहुतीर्जुहोतीति श्रुतिः ॥

समिद्वरः । पुं० किंशुकवृक्षे ॥

समित् । स्त्री० अग्निसन्दीपनार्थं हूयमानकाष्ठादौ । इन्धने । एधसि । समिन्धने । इन्धन० इ० भा० प्र० ॥ समिध्यतेऽनया । ञिइन्धी दीप्तौ । सम्पदादित्वात् करणे क्विप् । नलोपः ॥ होमीयकाष्ठे ॥ तल्लक्षणं यथा । प्रादेशमात्राः समिधः वल्काश्चापलाशिनीः । समिधः स

समुद्रगा । स्त्री॰ नद्याम् ॥

समुद्रगृहम् । न॰ जलयन्त्रालये । फ़ुहारिकाघर॰ इ॰ भा॰ पि॰ शेष : ॥

समुद्रचुलुक: । पुं॰ अगस्त्यमुनौ ॥ समुद्रचुलुकोगस्त्यपीतः ॥

समुद्रदयिता । स्त्री॰ नद्याम् ॥

समुद्रनवनीतम् । न॰ पीयूषे । च न्द्रे ॥ समुद्रस्यनवनीतमिव ॥

समुद्रनेमि: । स्त्री॰ समुद्रमेखलायाम् । भूमौ ॥ समुद्रोनेमिरिवनेमिरस्या: ॥

समुद्रफलम् । न॰ अब्धिफले । औषधविशेषे ॥ तद्गुणायथा । फलंसमुद्रसम्भूतंत्रिदोषहारि॰ वातामयंभूतनिरोधकारि । त्रिदोषदावानलदोषहारिकफामयध्वान्तनिरोधकारीतिरा॰ नि॰ वर्गः॰ ॥

समुद्रफेन: । पुं॰ फेने । अब्धिफे । डिण्डीरे ॥ समुद्रफेनस्यगुणा: शीतलः सरः । कषायोविषपित्तघ्नः कर्णरुक्कफहृत् ॥

समुद्रमेखला । स्त्री॰ भुवि । पृथिव्याम् । विश्वम्भरायाम् ॥ समुद्रोमेखलायस्या: ॥

समुद्रयात्रा । स्त्री॰ पोतेनसमुद्रगमने ॥ समुद्रयात्रादय: कलौ निषिद्धायथा । समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । द्विजानामसवर्णासुकन्यासूपयमस्तथा । देवरेणसुतोत्पत्तिर्मधुपर्केपशोर्वधः । मांसादनंतथाश्राद्धेवानप्रस्थाश्रमस्तथा ॥ दत्तायाश्चैवकन्यायापुनर्दानंपरस्यच । दीर्घकालंब्रह्मचर्यंनरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनंगोमेधश्चतथामख: । इमान्धर्मान्कलियुगेवर्ज्यानाहुर्मनीषिण इतिबृहन्नारदीयम् ॥ अपिच । एतानिलोकगुप्त्यर्थंकलेरादौमहात्मभि: । निवर्तितानिकर्माणिव्यवस्था॰ पूर्वकंबुधैरिति ॥

समुद्रयानम् । न॰ पोते । वहित्रे ॥ यथा । समुद्रयानेरत्नानिमहामूल्यानिसाधुभि: । रत्नपरीक्षकै: सार्द्धमानयिष्येबहूनिचेतिवराहपुराणम् ॥

समुद्रयायी । त्रि॰ समुद्रेणवणिग्दिनाद्वीपान्तरगामिनिवणिजि ॥ समुद्रयायीवन्दीचरो लिक: कूटकारक: इतिमनु: ॥ समुद्रयायिभि: सार्द्धंसंविदंसूच्यनिर्गतइतिवराहपुराणं ॥

समुद्ररसना । स्त्री॰ पृथ्व्याम् ॥ समुद्रोरसनाकाञ्चीयस्या: ॥

समुद्रलवणम् । न॰ पाङ्गवे । सिन्धु

टे । सामुद्रे ॥ समुद्रलवणम् । समुद्रजलजातं लवणं वा ॥

समुद्रवह्निः । पुं० वाडवे । वडवानले ॥

समुद्रविजयः । पुं० दशार्हेतुपितरि ॥

समुद्रसिन्धुसङ्गमः । पुं० । तीर्थविशेषे ॥

समुद्रसुभगा । स्त्री० गङ्गायाम् ॥

समुद्रा । स्त्री० शम्यां ॥ शम्यां ॥

समुद्राम्लम् । न० जातीफले ॥ च व्यावसाने ॥

समुद्रान्ता । स्त्री० सुपिडकिण्याम् कार्पास्याम् ॥ समुद्रोन्तोयस्याः ॥ यथा । सुद्रयासहवर्त्तमानाः समीपेयस्याः । आच्छादकत्वात् ॥ दुरालभायाम् ॥ यासे । यवासे ॥ समुद्रान्तोऽस्यस्याः । अर्णभाव म् ॥ समुद्रान्तोऽस्याबा ॥ मल म्नायाम् ॥ पृक्कायाम् ॥ समुद्रान्तोऽस्याः ॥

समुद्राम्बरा । स्त्री० पृथिव्याम् । अवनायाम् ॥ समुद्रोम्बरवसनं यस्याः ॥

समुद्रायणा । स्त्री० नद्याम् । सरिति ॥ समुद्रोऽयनं गतिर्यस्याः ॥

समुद्रारुः । पु० ग्राहविशेषे ॥ सेतुबन्धे ॥ तिमिङ्गिले ॥

समुद्भवः । पुं० प्रादुर्भावे ॥

समुन्दनम् । न० आर्द्रीभावे । तेमे । सोमे । उन्दी० ल्युट् ॥

समुन्नः । त्रि० आर्द्रे ॥ समुनत्ति । उन्दी० अकर्मकत्वात् कर्त्तरि क्तः । नुदविदोन्दत्राघ्रेति नत्वम् । सम्यगुन्नं क्लिन्नं वा ॥

समुन्नतः । त्रि० समुन्नद्धे ॥ सत्त्वविशिष्टे । इ० धर्षितः ॥

समुन्नतिः । स्त्री० समुच्छ्राये । उत्सेधे ॥ अतिशयी ॥

समुन्नद्धः । त्रि० समुन्नते ॥ पण्डितम्मन्ये ॥ गर्विते । दृप्ते ॥ ऊर्ध्ववद्धे ॥ प्रभौ ॥

समुन्नयः । पुं० समुच्छ्रये ॥

समुन्नाहः । पुं० उच्छ्राये ॥

समुपक्रमः । पुं० आरम्भे ॥ समुपक्रमणम् । क्रमु० । घञ् ॥

समुपजोषम् । अ० आनन्दे । काम्यार्थे ॥ समुपजोषणम् । जुषीप्रीतिसेवनयोः । अम्प्रत्ययः ॥

समुपस्थितः । त्रि० प्राप्ते ॥

समुपेतः । त्रि० सम्प्राप्ते ॥

समुपेयिवान् । त्रि० सम्यगुपगते ॥

समुल्लसन् । त्रि० सम्यगुल्लासयुक्ते ॥ यथा । दरस्मितसमुल्लसदधरकान्तिभूतास्फुटस्वामलमिभर्जितानि धनूर्यनीयदान् । विदिक्षमयचन्द्रिकाचयचमत्कृतिसन्ततीलगोतु अमन्दलनो : सपदि शन्तनोरङ्गना ॥

समुल्लिखन् । त्रि० पादादिनाभूमि

प्रसन्नधी : ॥ स्वात्संप्रदायान्वितौदेवि तदन्याधारतत्पर॰। स्वार्थंपर्यान्वितौदेविवितथास्वरूपवेषधृक् ॥ श्रीवद्धौ सम्प्रसद्धातपुन : स्वात्मपरायण : । क्षेत्रसविष्णुतस्वच्छ प्रोक्तोभागवत: शिवे ॥ इतिश्रीशक्तिसङ्गमतन्त्रे १ खण्डे ८ पटल : ॥ पद्मपुराणोक्ता वैष्णवसम्प्रदायभेदा यथा । श्रीम न्नारायणोम्बुजासनादोव्यासपञ्च । श्रीशमध्यपद्मनाभोनृहरिर्माधवस्थ। ॥ अक्षोभ्यजयतीर्थज्ञानसिन्धुसंज्ञानिधि । विद्यानिधिश्चराजेन्द्रोजयधर्मसुनिकाया । पुरुषोत्तमोब्रह्मण्योव्यासतीर्थमुनिमया । श्रीलक्ष्मीपति : श्रीमान्माधवेन्द्रपुरिस्तथा ॥ सम्प्रदायविहीनायेम न्त्रास्तेनिष्फलामता : । अत : क लौभविष्यन्तिचत्वार : सम्प्रदायि न : ॥ श्रीमाध्वरुद्रसनकावैष्णवा : क्षितिपावनाइति ॥ सम्प्रदानम् । दुदाञ्॰ । घञ्॰ आतइतियुक् ॥

सम्प्रधारणम् । न॰ विचारे । समर्थे ।

सम्प्रधारणा । स्त्री॰ उचितानुचितनि र्णये । सङ्घर्षे । इदमुचितमेवेति निर्णये ॥ सम्प्रधारणम् । धृञ॰ । ण्यन्त : । ण्यासेतियुच् ॥

सम्प्रमोष : । पुं॰ विस्मरणे ॥

सम्प्रयोग : । पुं॰ रते ॥ निधुवने ॥ ॥ अन्विती । सम्बन्धे ॥ कार्मणे । वशीकरणादिकर्मणि ॥ त्रि॰ प्रार्थि ते ॥

सम्प्रयोगी । पुं॰ कलाकेली । कामि । कामुके । सम्प्रयोजने ।

सम्प्रश्न : । पुं॰ सम्प्रधारणे ।

सम्प्रसाद : । पुं॰ सुषुप्त्यवस्थायाम् ॥ स म्यक्प्रसीदत्यस्मिन् । षद्लृ॰ । घ ञ् ॥ विद्रुधि ॥ प्राज्ञे ॥

सम्प्रसाधनम् । न॰ परिवेषीकरणे ॥ शोभानके ॥

सम्प्रहार : । पुं॰ गतौ ॥ युद्धे । रणे सम्प्रहरणम् । हृञ्॰ । घञ् ॥ हमनी॰ इतिधरणिः ॥

सम्प्रहृष्ट : । त्रि॰ पुलकिते । पुलकि तगात्रे ॥

सम्प्राप्त : । त्रि॰ समागते ॥ सम्यक् प्रकारेणप्राप्त : ॥

सम्प्राप्ति : । स्त्री॰ सम्यक्प्रापणे ।

सम्प्रेष : । पुं॰ निदेशे । विधौ ॥

सम्प्लव : । पुं॰ एकीभावेनेतरेतरघ नीभावे ॥ व्यामिश्रणे ॥ महापूरे ॥ वारिपूरे ॥ प्रलये । सङ्क्षोभे ॥ उ न्नते ॥ यथा । मेघ : सम्प्लवते ॥ सम्प्लवनम् । प्लुङ्॰ । ऋदोरप् ॥ सम्प्लवतेवा । पचाद्यच् ॥

सम्प्लवोपलः । पुं॰ चन्द्रकान्ते ॥

सम्फाल : । पुं॰ मेषे ॥

सम्फुल्ल : । त्रि॰ विकचे । विकसि ते । प्रफुल्ले ॥ सम्फलति । ञिफ

सम्भावनम् । न० मनस्युत्कर्षप्रकाशनायायुक्तौ ॥ यथा अपिस्तुयाद्विष्णुम् । अथाशङ्कमनसैवापरंविष्णुमपिस्तुयादित्यधिकोक्तिः । एतादृशस्यान्यदीयस्तवनेसामर्थ्यं सौख्यदमिति वक्तव्यमितिभावः ॥ सम्भाव्यते । यत्र : । यथासम्भवो युष् । सम्भावन० क्रियासुयोग्यताध्यवसायइतिमुग्धबोधव्याकरणम् ॥ अलङ्कारविशेषे । यथा । सम्भावनं यदीदं स्यादित्यूहोन्यस्यसिद्धये । यदिशेषोभवेद्वक्ता कथिताः स्युर्गुणास्तव ॥

सम्भावना । स्त्री० योग्यतायाम् ॥

सम्भावनीय : । त्रि० सम्भावनायोग्ये । संभाव्ये ॥

सम्भावित : । त्रि० मानिते । बहुमानंप्राप्ते । मूल्यताम्प्राप्ते । बहुमते ॥ यथा । भूत्वाभाविभवतिमरणं किन्तुसम्भावितानामिति ॥ चिन्तिते ॥

सम्भाव्य : । त्रि० सम्भावितुं योग्ये । सम्भावनीये ॥

सम्भाषणम् । न० आभाषणे । सम्यग्भाषितेल्युट् । नन्वेषाशुच्यथा मितैः सहसम्भाषित ॥

सम्भाषा । स्त्री० सम्भाषणे ॥

सम्भिन्न : । त्रि० संयुक्ते ॥ सङ्घुभिते । सम्यग्भेदविशिष्टे ॥

सम्भु : । पुं० जनितरि ॥ यजमाने ॥ सम्भवति । भू० । विप्रसम्भ्यो ड्वसंज्ञायामितिडुः ॥

सम्भूत : । त्रि० उत्पन्ने । सम्भवति स्म । भू० । क्तः ॥

सम्भूतविजय : । पुं० श्रुतकेवलिसंज्ञकबौद्धविशेषे ।

सम्भूति : । स्त्री० हिरण्यगर्भाख्यायां देवतायाम् ॥ सम्यग्भूतिरैश्वर्यं यस्याः । सम्भवनंवा । सम्भूति : । सम्भवमात्रे ॥ यथा । कामान्मातापिताचैनं यदुत्पादयतोमिथः । सम्भूतिंतस्यतांविद्याद्यद्योनावभिजायतइतिमनुः ॥ यद्योनौमातृकुक्षावभिजायतेचक्षुरादि अङ्गानिलभते । तस्मात्तस्यसम्भवमात्रं पश्वादिसाधारणं । यतः । आचार्यस्त्वस्ययांजातिंविधिवद्वेदपारगः । उत्पादयतिसावित्र्यासासत्यासाऽजराऽमरेतिमनुः ॥

सम्भूयसमुत्थानम् । न० मिलित्वैकमत्याद्वाणिज्यादीनांकर्मकरणे ॥ वादिनाटकस्य अप्रकृतवेरुद्धान्तो ॥ वस्तुविवादपदविशेषः ॥

सम्भृत : । त्रि० सम्पादिते ॥ संहते ॥ पूर्णे ॥ सम्यक्पुष्टे ॥ जनिते ॥ सम्यग्धारिते । भृञ् । क्तः ॥

सम्भृति : । स्त्री० सम्भारे । सम्यक्पोषणे ॥ सम्यग्भरणे । सम्यग्धा

रणे ॥

सम्भेदः । पुं॰ सिन्धुसङ्गमे । सरितोः सिन्धः सङ्गमे । नद्योर्महानद्योर्नद्योः समुद्रयोश्च मेलने ॥ सम्भिद्यन्ते मिलन्त्यत्र । भिदिर्॰ । घञर्थे सिघ ञ् ॥ स्फुटने । सङ्गे । मेलने ।

सम्भोगः । पुं॰ भोगे । रतौ । निधुवने । सुरते ॥ स्त्रीपुंसभोगएवसङ्गमनम्॰ तदभावेसवंमसङ्गमस्याप्यसङ्गमत्वम् । जिनशासने ॥ ग्राण्डाथाम् ॥ हर्षे ॥ शृङ्गारविशेषे ॥ स लक्षणं यथा । दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्ता वन्योन्यं सम्भोगः समुदाहृतइति साहित्यदर्पणम् ॥

सम्भोगी । पुं॰ कामिनागरे ॥ त्रि॰ सम्भोगवति ॥ सम्भोगीविद्यतेऽस्य । इनि ॥

सम्भोजनी । स्त्री॰ बहुपुरुषभोजना त्मिकायांगोष्ठाम् ॥ यथामनुः । सम्भोजनीसाऽभिहितापैशाचीदक्षि णाद्विजैः । इहैवास्ते तुसालोके गौरन्धेवैकवेश्मनीति ॥ सम्भुज्य तेयया । भुज॰ । ल्युट् । ङीप् । दक्षिणादानक्रियैवार्थः ॥

सम्भोज्यः । त्रि॰ संमेलयितव्ये ॥

सम्भ्रमः । पुं॰ भयादिजनितत्वरायाम् । संवेगे ॥ साध्वसे । भये ॥ आदरे ॥ अमात्यप्रासौहित्यसम्भ्रमोभ वश्यनाशकामस्य ॥ सम्भ्रमणम् । भ्रमुचलने । भावे॰घञ् । नो दात्तोपदेशस्यद्वृद्धिः ॥ महाभ्रमे । सूर्ये ॥ लोकपालः ॥

सम्भ्रान्तः । त्रि॰ संविग्ने ॥

सम्मतः । त्रि॰ निर्दिष्टे ॥ अनुमते । सम्मानभाजि । महाजनाङ्गीकृते ॥

सम्मतिः । स्त्री॰ अभिलाषे ॥ अनु ज्ञायाम् ॥ अभिप्रायस्यैवाधने ॥ पूजने ॥ यथा॰देवदेवस्त्वौसि । भवधांक्यादेरामन्त्रितस्य सिद्धमतो हितम् ॥

सम्मदः । पुं॰ हर्षे । त्रि॰ तद्वति ॥ महोहर्षे । प्रमदसम्मदौहर्षइत्यप् ।

सम्मर्दः । पुं॰ सम्बाधे । परस्परघो क्षायाम् । भीड॰ मृ॰ आ॰ प॰ प्र॰ ।

सम्मर्दनः । पुं॰ गन्धप्रभेदे ॥ यथा । सगन्धद्वरयोविरलगन्धमीतिलक्षणंस था ॥ प्रकृतौर्नरसोयोऽसौमिष्टोवा परिदृश्यते । ससम्मर्दोद्गवोगन्धः सम्मर्द्दकहृतोव्यतद्भूति ॥

सम्मादः । पुं॰ मत्स्यविशेषे ।

सम्माननम् । न॰ समादरे । गौरवे । यथा । सम्माननादव्राह्मणोनित्यमुद्विजे तविषादिव । अमृतस्येवचाकाङ् क्षेदवमानस्यसर्वदा ॥ इति ॥

सम्मानितः । त्रि॰ समादृते । गौर विते ॥

सम्मार्ज्जकः । त्रि॰ सम्यङ्मार्ज्जन

तिचित्करणादन्यथोपोतिघ : । आगमशास्त्रस्यानित्यत्वान्नुम । सच्छविधानस्यावर्तते ॥

सरजम् । न॰ नवनीते ॥

सरजा : । स्त्री॰ मञ्जिष्ठायाम् । रज स्वलायाम् । इ॰ वि॰ शेष : ॥

सरट् । पुं॰ वायौ ॥ वारिदे ॥ सर घायाम् ॥ सरति । स्र॰ । सर्त्तेरटि : ॥

सरट : । पुं॰ कृकलासे । सरति । स्र॰ । शकादिभ्योऽटन् ॥

सरटि : । पुं॰ वायौ ॥ मेघे ॥

सरटु : । पुं॰ सरटे ॥

सरणम् । न॰ गमने । लौहमले ॥ सरतिरस्त्रीच : । स्र॰ । शुचक्रम्येत्यादिना युच् ॥ धावने ॥ भावे ल्युट् वा ॥

सरणा । स्त्री॰ गन्धालिकायाम् । प्रसारण्याम् ॥ चिह्नतायाम् ॥ सरति । स्र॰ । बाहुलकात्॰ युच् । टाप् ॥

सरणि : । स्त्री॰ पङ्क्तौ ॥ मार्गे । पद्धतौ । श्रयणे ॥ सरन्त्यनया । सृगतौ । अर्त्तिसृधृधमीत्यनि : ॥

सरणी । स्त्री॰ कण्ठरोगायाम् ॥ पथि । पङ्क्तौ ॥ ङीष् ॥ सरणाई॰ इतिहिमगिरिप्रसिद्धे निष्पद यानविशेषे ॥

सरण्ड : । पुं॰ धूर्त्ते ॥ सरटे ॥ भूषणविशेषे ॥ सरति । स्र॰ । आण्डन्कृसभृवृञ्जडन् ॥ कामुके ॥ खगे ॥

सरण्यु : । पुं॰ वारिवाहे ॥ मातरिश्वनि ॥ सरति । ससर्ति वा । स्र॰ । यजुवचिभ्योऽन्युजागमश्च इत्यन्युच् ॥ सरण्यु : शीघ्रगामीतिवेदभाष्यम् ॥ जले ॥

सरत् । पुं॰ तन्तौ ॥ सूत्रे ॥

सरथ : । त्रि॰ रथिनसहवर्त्तमाने ॥

सरद्वान् । पुं॰ गौतममुनौ ॥

सरपत्रिका । स्त्री॰ पद्मपत्रे ॥

सरभसम् । त्रि॰ ससत्वरे ॥

सरमा । स्त्री॰ कुक्कुर्याम् ॥ देवशुन्याम् ॥ राक्षसीभेदे । विभीषणस्त्रियाम् ॥ सरति स्र॰ । बाहुलकादम : ॥ कश्यपस्त्रीविशेषे । ममराद्यीनांमातरि ॥ त्रि॰ श्रीयुते ॥

सरयु : । पुं॰ पवने । वाते ॥

सरयु : । स्त्री॰ नदीविशेषे ॥ सरति । स्र॰ । सर्त्तेरयु : ।

सरयू : । स्त्री॰ नदीभेदे । सरति । स्र॰ । सर्त्तेरयूरित्येके ॥ सरयूसलिलंस्वादुबलपुष्टिप्रदायकं ॥

सरल : । पुं॰ पीतद्रौ । पूतिकाष्ठे ॥ अस्यगुणा : । सरलोमधुरस्तिक्त : कटुपाकरसोलघु : । स्निग्धोष्ण : कर्णकण्ठाक्षिरोगरक्षोहर :

सरितांवरा । स्त्री० गङ्गायाम् ॥ यथा । त्वं देवसरितांनाथः त्वं देवि सरितांवरे । उभयोः सङ्गमेत्वाम् स्नात्वामिदुर्ल्लभानिमे ॥ इति गङ्गासागरसङ्गमस्नानमन्त्रः ॥

सरित्पतिः । पुं० समुद्रे । पारावारे । सरितांपतिः ॥

सरिद्वरा । स्त्री० गङ्गायाम् । विष्णुपद्याम् ॥ सरित्सुवरा ॥

सरिन्नाथः । पुं० समुद्रे ॥

सरिमा । पुं० अनिले । वायौ ॥ सरति । सृ० । हृभृधृसृस्तृशृभ्य इमनिच् ॥

सरिलम् । न० सलिले । जले ॥ रलयोरैक्यत्वम् ॥

सरिसृपः । पुं० सर्पे । पटुपर्ण्ये ।

सरी । स्त्री० निर्झरे ॥

सरीसृपः । पुं० सर्पे । पृदाक्वौ । आशीविषे ॥ कुटिलं सर्पति । सृप्लृ० । नित्यंकौटिल्येगताविति यङ् । यपाचष् । यङोचिविति यङोलुक् ॥ इतिकराणौ ॥

सरीसृपम् । त्रि० अतिशयेनसर्पति ॥

सरूप । त्रि० सदृशे ॥ समानं रूपमस्य । ज्योतिर्जनपदेतिसमानस्यसः ॥

सरोजम् । न० पङ्के । पद्मे ॥ सरसिजातम् । जनी० सप्तम्यांजनेर्डः । तत्पुरुषेकृतिबहुलमितिर्ङेर्लुक् ॥

सरोजखण्डः । पुं० पद्मवने ॥ सरोजानांसमूहः । कमलादिभ्यः खण्डः ॥

सरोजन्म । न० पद्मे ॥

सरोजी । पुं० ब्रह्मणि । सुरज्येष्ठे ॥ लोकनाथे । बुद्धभेदे ॥

सरोजिनी । स्त्री० कमलाकरे । पद्मखण्डे ॥ पद्मे ॥ कासारे । सरोजानिसन्त्यस्याम् । पुष्करादिभ्योदेशे इनिः ॥

सरोत्सवः । पुं० सारसखगे ॥

सरोधः । त्रि० रुद्धे । रोधेनसहवर्त्तमानः ॥

सरोरुट् ।) पुं०
सरोरुहम् ।) न० अम्बुजे ॥

सरोरुहासनः । पुं० ब्रह्मणि । कमलासने ॥

सरोवरः । पुं० पद्माकरे । तडागे ॥

सर्गः । पुं० स्वभावे । निर्मोक्षे ॥ निर्मोक्षस्त्यागेमोक्षाभाधीशा । मोक्षाभावैथा । कृत्स्नेवर्त्तितः ॥ गौणैवासान्त्येभिसंसर्गः । निश्चये ॥ यथा । यत्राणमस्ययदिसर्गएव तै० श्रुति ॥ अध्याये । मोहे । उत्साहे ॥ अनुमतौ ॥ सृज्यते । सृज विसर्गे । कर्मणिघञ् ॥ सृष्टौ ॥ यथा । सर्गश्चप्रतिसर्गश्चेति ॥ श्रीमारभाषं : प्राणाण्वीमानभङ्ग्या दिभेदैः पुराणेपुविस्तरेणोक्तः । देवसर्गाः । स्थूलदेहोत्पत्तौ । अवि

सर्गः सृष्टौ । सत्त्वमेवैपुरुषत्वात् : प्राणिनामुत्पत्त्या० पृथिव्यादि लोकाः सर्गपदवाच्याः । अव्य क्तगुणयोगान्महदहङ्कारतो महत् । भूतसूक्ष्मेन्द्रियार्थानामसर्ग सर्ग उच्यते ॥ इति श्रीविष्णुभागवतम् ॥

सर्गक्रमः । पुं० प्रकृतेर्महदाद्युत्पत्ति क्रमे ॥ यथा ॥ प्रकृतेर्महांस्ततोऽह ङ्कारस्तस्मात्तन्मात्राण्यन्यकः । तस्मा दपि षोडशकात्पञ्चभ्यः पञ्चभूता नीति ॥ सर्गोत्पत्तेः क्रमः ॥

सर्गबन्धः । पुं० महाकाव्ये ॥ सर्गा णां बन्धोऽत्र ॥

सर्जः । पुं सालवृक्षे । सर्ज्जा० धूलिकाशाले ॥ सृजति । सृजेरिगुप धेति कः ॥

सर्जकः । पुं० पीतसाले । असने । बन्धूकपुष्पे । विजयसार० इ० भा० प्र० इति ॥ सृजति । सृजवि सर्गे । ण्वुल् । यद्वा । सर्जते । सर्ज अर्जने क्वुन् । वि० सृष्टिक र्त्तरि ॥

सर्जगन्धा । स्त्री० रास्नायाम् ॥

सर्जतैलम् । न० सर्जतैले । रालतैल इ० भा० ॥ तैलंसर्जरसोद्भूतंवि स्फोटव्रणनाशनम् । कुष्ठपामाक्रिमि हरंवातश्लेष्मामयापहम् ॥

सर्जनम् । न० विसर्जने ॥ सृ- ष्टौ ॥

सर्जनिर्यासः । सर्जमणिः । पुं० राले । धूनके

सर्जरसः । पुं० धूनके । यक्षधूपे । सर्जस्यासालस्यरसः ॥ धाराभाण्ड विशेषे ॥

सर्जिः । सर्जिका । स्त्री० सर्जिकाक्षारे । सज्जी० इ० भा प्र० सर्जिकाल्पगुणास्याद्विशेषा ङ्गल्मशूलहृत्० । यवक्षारात्० यवक्षा रात् ॥

सर्जिकाक्षारः । पुं० कापोते । सुवर्चिके । सौवर्चले । रुचके । सज्जी० साजी० इ० भा० प्र० सर्जिकायाः क्षारः । शाकपा र्थिवादिः । सर्जिकोद्गम्यानिय नाणः क्षारस्तथा ॥

सर्जिक्षारः । पुं० सर्जी । स्त्री० सर्जिकाक्षारे ॥

सर्जूः । स्त्री० वणिजि । विद्युति । सर्जति । अर्जअर्जने । संपिचमि तनिधनिसर्जिखर्जिभ्य ऊः ॥ अभिसारे ॥ हारे ॥

सर्ज्यः । पुं० सर्जरसे ॥

सर्पः । पुं० अहौ । नागेभ्योपकृष्टे । अस्य पर्याया यथा । सर्पः पृदा कुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः । आशीविषो विषधरश्चक्री व्यालः स रीसृपः ॥ कुण्डली गूढपाच्चक्षुःश्र वाः काकोदरः फणी । दर्वीकरो दी

वंपृष्ठोदन्दशूकोविलेशय: ॥ उरगः पन्नगेभोगीजिह्मग: पवनाशनद्रति ॥ सर्पति । सृप्लृगतौ । पचाद्यच् ॥ नागकेशरे स्मात्युपादिर्विश्वे च्छ जातिविशेषे ॥ पद्यमापक्षदितीय भेदे। ९० ॥ वयसाक्षयघहप्रभेदे। ॥ ९९० ॥ सर्पणं । गमने ॥

सर्पकङ्कालिका । स्त्री० लतभेदे ॥ सर्पकङ्कालिका० तीक्ष्णा० विषदंष्ट्रा ० विषापहेतिपर्याया: ॥

सर्पकङ्काली । स्त्री० सहायाम् । सर्पकङ्कालिकायाम् ॥

सर्पगन्धा । स्त्री० अहिभुजि । रासम्भिकायाम् ॥ लताविशेषे, कल्पाको ० सर्पगन्धाचरसनाचपलदर्पीति पर्याया: ॥

सर्पच्छ: । पुं० सर्पवष्टपुष्पे ॥

सर्पघातिनी । स्त्री० सर्पकङ्काली भेदे । सर्पसहायाम् । सर्पाङ्ग्यां ॥

सर्पन् । त्रि० गच्छति ॥

सर्पक्ष: । पुं० नकुले ॥ दु० हे० न्द्र: ॥

सर्पदंष्ट्र: । पुं० दन्तीवृक्षे ॥

सर्पदंष्ट्रा । स्त्री० वृश्चिकाल्याम् ॥

सर्पदंष्ट्रिका । स्त्री० अजशृङ्ग्याम् ॥

सर्पदण्डा । स्त्री० सैंहल्याम् ॥

सर्पदण्डी । स्त्री० गोरक्षां ॥

सर्पदन्ती । स्त्री० नागदन्त्यां ॥

सर्पदमनी । स्त्री० बन्ध्याकर्कोटक्याम् ॥

सर्पनामा । स्त्री० सर्पघातिन्याम् ॥

सर्पनिर्मोचन: । पुं० धूपविशेषे ॥ यथा। कार्पासास्थिमयूरपिच्छशलयानिर्मोकमंभवेत् । सर्पनिर्मोचनोधूप: प्रशस्त: सततंग्रहे ॥

सर्पपुष्पी । स्त्री० नागदन्त्याम् ॥

सर्पफण: । पुं० सर्पफणजात मणौ ॥

सर्पभुक् । पुं० मयूरे ॥ सर्पान् भुङ्क्ते । भुज० । क्विप् ॥ हिमुखाङ्गी ॥ त्रि० सर्पभक्षके ॥

सर्पराज: । पुं० अहिराजे । वासुकौ ॥ सर्पाणांराजा । राजाहः सखिभ्यष्टच् ॥

सर्पलता । स्त्री० नागवल्ल्याम् ॥

सर्पविद्या । स्त्री० गारुडे ॥ सर्पाधिविद्या ॥

सर्पसत्रम् । न० जनमेजयारब्धे सर्पनाशकयज्ञविशेषे ॥

सर्पसखी । पुं० जनमेजये ॥

सर्पसहा । स्त्री० सर्पघातिन्याम् ॥

सर्पसुगन्धा । स्त्री० रास्नायाम् ॥

सर्पहा । पुं० नकुले । दु० हे० न्द्र: ॥

सर्पाक्षम् । न० रुद्राक्षे ॥

सर्पांघी । स्त्री० कन्दविशेषे । गन्ध

सर्व्वदमन : । पुं॰ शकुन्तलासुते॰ भरते ॥ कात्तवीर्य्ये ॥

सर्वदर्शन: । पुं॰ विष्णौ ॥ सर्वाणिदर्शनात्मकान्यक्षीणियस्यसर्वात्मकत्वात् ॥

सर्व्वदर्शी । पुं॰ विष्णौ ॥ सर्वेषां प्राणिनांकृताकृतंसर्वंपश्यतिस्वाभाविकेनबोधेनेतितथा ॥ बुद्धे ॥ त्रि॰ सर्व्वज्ञे ॥ सर्व्वद्रष्टुशीलमस्य । सुप्यजातौणिनिस्ताच्छील्ये ॥

सर्व्वदा । अ॰ सर्वस्मिन्काले । सर्वैकान्यकिंयत्तद : कालेदा ॥

सर्व्वदु:खक्षय : । पुं॰ मोक्षे ॥ सर्वदु : खानांक्षयोविनाशोऽस्मिन्॰ इतितथा ॥ सर्व्वपीडानाशे ।

सर्व्वदृक् । त्रि॰ सर्वज्ञे अखिलपदार्थस्यावलोकयितरि । सर्वंपश्यति । दृशिर्॰ क्विप् ॥ ईश्वरे ॥ सर्वमतीतानागतादि॰ पश्यतिस्वरूपबोधेनेतितथा । किन्तुमतमत्रत्यमशुद्धोच्चारणात्कुत्सम् ॥

सर्व्वदेवमुख. । पुं॰ अनले । अग्नौ ।

सर्व्वधातम : । त्रि॰ सर्व्वसाधारणेतमे ।

सर्व्वधारी । पुं॰ वत्सरविशेषे ॥ तत्फलंयथा । कोद्रवा : शालिमुद्गाश्चकङ्गुमाषास्तथैव च । सुलभंधान्येन,श्यंजगत्सर्वधारिणि ॥ त्रि॰ सर्व्वधारणशीले ॥

सर्व्वधुरावह : । पुं॰ सर्व्वधुरीणे ॥ सर्वाचासौधूश्च॰ सर्वधुरा । पूर्वकालैकसर्वेतिसमास : । अक् पूरित्य: । वहतीति॰ वह : । अच् । सर्वधुराया : वह : ॥

सर्व्वधुरीण : । पुं॰ रथशकटादिसर्वभारायांवाहकेगवादौ । सर्वधुरावहे ॥ सर्वधुरांवहति । ख : सर्व्वधुरात्खित्यख : ॥

सर्व्वनाम । न॰ सर्वादिपञ्चत्रिंशत् ॥ तानियथा । सर्व॰ विश्व॰ उभ॰ उभय॰ डतर॰ डतम॰ अन्य॰ अन्यतर॰ इतर॰ त्वत्॰ त्व॰ नेम॰ सम॰ सिम॰ पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरंबहिर्योगोपसंव्यानयो : । त्यद्॰ तद्॰ यद्॰ एतद्॰ इदम्॰ अदस्॰ एक॰ द्वि॰ युष्मद्॰ अस्मद्॰ भवतु॰ किम्॰ इति ॥

सर्व्वनियन्ता । त्रि॰ परमेश्वरे । चिदात्मनि ॥ परमार्थतोऽसङ्गस्याऽपिचेतन्यस्य॰ आध्यासिकसम्बन्धसम्बन्धाध्यानद्वारासर्वजीवप्रवर्त्तकत्वेन॰ सर्वनियन्तृत्वमितिज्ञेयम् ॥

सर्व्वन्दम : । पुं॰ शकुन्तलेये॰ भ

रथे ॥

सर्व्वपथीणः । पुं॰ सारथौ । सर्वं पन्थानं व्याप्नोति । तत्सर्वादि पथ्य ङ्गकर्मपात्रपात्रं व्याप्नोतीतिख : ॥

सर्व्वपथीनः । पुं॰ रथे । सर्वपथा न्व्याप्नोति । तत्सर्वादेरितिखः ॥

सर्व्वपात्रीणः । पुं॰ ओदने । सर्वपा त्रं व्याप्नोति । तत्सर्वादेरितिखः ॥

सर्व्वपूर्णत्वम् । न॰ सम्भारे ३

सर्व्वभक्षः । त्रि॰ सर्व्वभक्षणकर्त्तरि ॥

सर्व्वभक्षा । ) स्त्री॰ गुडूच्याम् ।
सर्व्वभक्ष्या । ) छागयाम् । अजा याम् । ग्र॰ र॰ न्द्र : ॥

सर्व्वभूतगुहाशयः । पुं॰ चिदात्मनि॰ परमेश्वरे । सर्वभूतानांख्यातरजगू मामां॰ गुहासुबुद्धिषुशेते । श्रीटो धिकरणेशेतेरित्यच् ॥

सर्व्वभूतप्रणेता । पुं॰ लोकात्मनिपर मेश्वरे ॥ यथाहुः । द्यामूर्द्धानंयस्य विप्रावदन्ति॰ खंवैनाभिंचन्द्रसूर्यौ चनेत्रे । दिशः श्रोत्रे विद्धिपादौ क्षितिञ्चसोचिन्त्यात्मासर्वभूतप्रणे ता । इति ॥

सर्व्वभूतात्मकः । त्रि॰ प्रत्यगभिन्ने पर मात्मनि ॥

सर्व्वभूतात्मभूतात्मा । पुं॰ आत्म ज्ञानिनि । यथा । जडाजडात्मकं सर्वमात्मभावं प्रपश्यति । सएवस र्वभूतात्मभूतात्माप्रोच्यतेबुधैरिति

सर्वभूतपञ्चकम्॰ आत्मास्य पत्युखस्थ ॥

सर्वभूताशयस्थितः । त्रि॰ आत्मनि॰ चैतन्याकन्दघनेचिन्मात्रे । सर्व भूतानामाशयेहृद्येमस्थाभिव्युमि स॰ प्रत्यगात्मरूपेणवस्थितोय : सएवसः ॥

सर्वंसहम् । त्रि॰ आस्मरूपात्मनाजगतो धारके॰ पोषकेच॰ चिदात्मनि॰ ॥ मायया॰ सद्रात्मना॰ सर्वंव्याप्य तं॰ धारयति॰ पोषयतिच॰ निर विकारमभावेनात् । कुभृञ्धारण पोषणयोः । क्विप् । तुक् ॥

सर्वमङ्गला । स्त्री॰ दुर्गायाम् । सर्वे भ्यः सर्वेषांवामङ्गला । सर्वाणिम ङ्गलानियस्याइतिवा । सर्वाणिहृद यस्थानिमङ्गलानिशुभानिच । ददा तिचिप्सितांलोकेतेनसासर्वमङ्गले तिदेवीपुराणम् । अपिच । मङ्गलं शोभनंगमनमाख्यातंदानवाचकः । स र्वांस्ताञ्चान्याददातितेनसासर्वमंग ला । हर्षेसम्पद्विकल्याणेमङ्गलंपरि कीर्त्तितम् । तान्ददातियादेवी साएवसर्वमङ्गला । ब्र॰ वै॰ पु॰ । अन्यच्च । सर्वमङ्गलशब्दश्च सम्पूर्णार्थवाचकः । आकारो दातृवचनसासर्वमङ्गला ॥ । ब्र॰ वै॰ पु॰ श्रीकृष्णजन्म खण्डे २० अध्याय : ॥

सर्व्ववेशी । पुं॰ नर्त्तके । नटे । सर्व्वे वेशाः सन्त्यस्य । इनिः । समस्तवेशधारिणि । शब्दरत्ना॰ द्वि॰ भा॰ ॥

सर्व्वव्यापी । त्रि॰ आकाशवत्सकलपदार्थव्यापनशीले ॥ यथा । सर्व्वव्यापिनमात्मानं ज्ञात्वा धीरो न शोचतीति ॥

सर्व्वशः । अ॰ सर्व्वप्रकारेणेत्यर्थे ॥

सर्व्वशास्त्रमतम् । न॰ सकलविशेषेषु ॥ यथा । भरणीकृत्तिकापित्र्यविशाखाश्लेषभानि च । सर्व्वशास्त्रमतं प्रोक्तं व्रतं तत्र विवर्ज्जयेत् ॥

सर्व्वशास्त्रवित् । त्रि॰ सकलशास्त्राभिज्ञे ॥

सर्व्वशान्तिकृत् । पुं॰ दौःषन्तौ । शाकुन्तलेये ॥ त्रि॰ सर्व्वशान्तिविधायिनि ॥

सर्व्वसंसर्गदूषणम् । न॰ चौर्य्ये ॥

सर्व्वसङ्गतः । पुं॰ षष्टिकाधान्ये ॥ त्रि॰ सर्व्वप्रिये । सकलसङ्गतियुक्ते ॥

सर्व्वसत्त्वसमुद्भवा । स्त्री॰ प्रावृषि । सर्व्वेषां प्राणिनां समुद्भवत्वमितीयो धनतयस्याम् ॥

सर्व्वसन्नहनार्थकः । पुं॰ सर्व्वसैन्यसन्नहने । सर्व्वाभिसारे ॥ सर्व्वेषां सन्नहनम् । सर्व्वसन्नहनम् । सर्व्वसन्नहनमर्थो यस्य सः ॥

सर्व्वसम्राट् । पुं॰ सर्व्वात्मनि ॥

सर्व्वसहः । पुं॰ गुग्गुलौ ॥ त्रि॰ सकलसहिष्णौ ॥

सर्व्वसाक्षी । पुं॰ परमात्मनि ॥ सर्व्वेषां शुभाशुभकर्म्मणां साक्षी साक्षाद्द्रष्टा ॥ त्रि॰ सर्व्वविषयद्रष्टरि ॥

सर्व्वसिद्धिः । पुं॰ श्रीफलवृक्षे ॥ त्रि॰ सिद्धियुक्ते ॥

सर्व्वसुखप्रदः । पुं॰ परमात्मनि ॥ भगवति ॥

सर्व्वस्वम् । न॰ समस्तधने ॥

सर्व्वस्वी । पुं॰ नीचकन्यायां नापिताज्जातसङ्करजातौ ॥ त्रि॰ सर्व्वस्वविशिष्टे ॥

सर्व्वहरः । त्रि॰ सर्व्वसंहारकारिणि ॥

सर्व्वाहितम् । न॰ अहिते ॥ त्रि॰ सर्व्वापकारिणि ॥

सर्व्वाकारः । त्रि॰ समस्तदेहाद्याकारविशिष्टे । भगवति ॥ यथाह्वराचार्य्यः । सर्व्वाकारो भगवानुपाध्यतिशयेन गर्भभावेन । तत्त्वावभा स्वाभिव्यक्तावधत्समभ्येतीति ॥ सर्व्वोपादानकारणत्वात् सर्व्वाकारत्वम् ॥

सर्व्वाङ्गम् । न॰ सकलावयवे ॥

सर्व्वाङ्गसुन्दरः । पुं॰ औषधविशेषे ॥ यथा । रसगन्धकतुत्थांशोदीभा

गिरीवहासहदेव्याजटाघुबम् ॥ ज्वरं विषमज्वरम् ॥ सर्वांप्याम् ॥ पीतदण्डोत्पलायाम् ॥ सहदे वभ्रभार्यायाम् ॥

सहदेवीगण:। पुं॰ प्रतिष्ठायामदेव स्नानार्थमोषधीसमूहे । यथा । मध्वगर्ध्व :स्नापयेत्सहदेव्यादिभि स्तत :। सहदेवीवलाचैवशतम् लोमतावरी ॥ कुमारीचगुडूचीच सिंहीव्याघ्रीतथैव च । याचोषधी तिमन्त्रे पञ्चाननोऽधिमन्त्रणं : ॥

सहधर्मिणी । स्त्री॰ वेदविधाने गोढायाम् । पत्न्याम् । द्वितीया याम् । भार्यायाम् ॥ सहधर्मो स्यस्या : ॰ मध्यासहकर्मणधिका रात् । धर्मप्रीत्यसमर्थान्तात्सोनिः । वीपसर्जनस्य ॥

सहनम् । न॰ क्षमायाम् । प्रतीका रानिच्छायाम् ॥ यथा । सहन सर्वदु :खानामप्रतिकारपूर्वकम् चिन्ताविलापरहितंसातितिक्षानिगद्यते ॥ त्रि॰ क्षमान्विते । स हिष्णौ । क्षमिणि ॥ सहतेतच्छी ल :। पढ॰ अनुदात्तेतश्चहलादेः युच् । नन्द्यादित्वाल्ल्युर्वा ॥

सहनर्त्तनम् । न॰ एकत्रमण्डलाका रनृत्यकरणे ॥

सहनशील :। त्रि॰ सहिष्णौ ॥

सहपांशुक्रिल :। त्रि॰ वयस्ये ॥

सहपानम् । न॰ सपीती ॥

सहभावी । त्रि॰ सहाये ॥

सहभोजनम् । न॰ बहुभि :सम्मि लित्वैकपात्रेभोजने । सग्धौ ॥ सह॰ भोजनम् । सुपसुपेतिसमास :॥

सहमरणम् । न॰ मृतस्वामिनासह ज्वलच्चितारोहणे मरणभागे ॥

सहमान :। त्रि॰ सहिष्णौ ॥

सहमाना । स्त्री॰ चैत्रीक्यासमन्त्रात्मास ऊर्ध्वस्थदिग्भागे ॥ सहन्तेऽर्घ्यं पापकर्मफलानियमपुर्यांप्रापिन्य तिसया ॥

सहयज्ञ :। त्रि॰ कर्माधिकारी ॥ य ज्ञं नविहितकर्मकत्वादिना सह यज्ञं सं तद्धति ॥

सहयायी । त्रि॰ मिलितगामिनि । सायी॰ द्रु॰ भा॰ ॥

सहयुक्त । त्रि॰ कारितयुते ॥ सहयो थितवान् । युध॰सहेचेतिक्वनिप् ॥

सहरसा । स्त्री॰ मुद्गपर्ण्यां ॥

सहर्ष :। त्रि॰ हर्षयुक्ते ॥

सहवास :। पुं॰ सहावस्थाने ॥ यथा । नसंवसेत्पतितैर्नचाण्डालै र्नपुक्कसै :। नमूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिरितिमनुः ॥

सहवासी । त्रि॰ एकस्थानेयोगप द्येनावस्थानकर्त्तरि ॥ यथा । सहवासोविजानातिचरितंसहवा सिनामिति ॥

सहा:। पुं॰ मार्गशीर्षे । मार्गे ॥

हिमस्पर्शी । सहते । षह॰ । असुन् ॥

सह : । न॰ बले ॥ मार्गसपाटवे ॥ ज्योतिषि ॥ सहते॰ सह्यतेऽनेना वा । षह॰ । असुन् ॥

सहस : । त्रि॰ सहासे ॥ हसेन सह वर्त्तते ॥

सहसा । अ॰ हठादर्थे ॥ अविमर्शे ॥ यथा । सहसा विदधीत न क्रियामविवेक : परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धा : स्वयमेव सम्पद : ॥ अतर्किते । आकस्मिके । अकस्मादर्थे ॥ सहसाभिसृतो भावीर्याक्षनिर्व्यहृदिस्थित : । नाकारैर्गूहितुं शक्योऽतिहस्य तिसमैरपि ॥ तत्क्षणादर्थे ॥ द्विव : प्रसूनं सहसापतीति यथा ॥ सहते । षह॰ । असाप्रत्यय : ॥

सहसान : । पुं॰ मयूरे ॥ यज्ञे ॥ त्रि॰ क्षमायुक्ते ॥ सहते । षह॰ । कर्त्तरि बधिमन्त्वसहिभ्य : किद्वित्सानच् ॥

सहस्य : । पुं॰ पौषमासे ॥ सहसि बले साधु : । तत्र साधुरिति यत् ॥

सहस्रम् । न॰ दशशती॰ १००० ॥ अनन्ते ॥ विश्वंभरं सहस्रस्य मन्वयशाधकमिति महाभारतम् ॥

सहस्रकाण्डा । स्त्री॰ श्वेतदूर्वायाम् ॥

सहस्रकिरण : । पुं॰ सूर्ये ॥ सहस्रं



किरणा यस्य ॥

सहस्रगु : । पुं॰ आदित्ये । भानौ ॥ सहस्रं गवां रश्मीनां यस्य स : ॥ अत्र यादव : । तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने ॥ शतत्रयं हिमोत्सर्गे तावद्धर्मस्य सर्जने । आमन्त्राश्चन्द्रिमेध्याय नूतना पूतना इति । अतः शताहृदिवाद्या : सर्वे अमृतास्सार्थवृत्ति ॥

सहस्रजित् । पुं॰ हरौ ॥ सहस्राण्यसुराणां जयति । जि॰ । क्विप् ॥

सहस्रणी : । पुं॰ भीष्मे । गाङ्गेये ॥ सहस्रं रथिनो नयति॰ पालयति । णीञ्॰ । सत्सूद्विषेति क्विप् ॥

सहस्रतम : । त्रि॰ सहस्रस्य पूरणे ॥ नित्यं शतादीति डट् तमडागम : ॥

सहस्रदंष्ट्र : । पुं॰ पाठीनमत्स्ये ॥ सहस्रं दंष्ट्रा यस्य स : ॥

सहस्रदंष्ट्री । स्त्री॰ पाठीने । बोदालमत्स्ये ॥

सहस्रद : । त्रि॰ बहुप्रदे ॥ सहस्रं ददाति । डुदाञ्॰ । क : ॥

सहस्रदो : । पुं॰ कार्त्तवीर्य्यार्जुने ॥ सहस्रं दोषो बाहवो यस्य स : । पत्वस्यासिद्धत्वाद्रुत्वविसर्गौ ॥

सहस्रधार : । पुं॰ विष्णुचक्रे ॥

सहस्रधारा । स्त्री॰ देवतास्नानार्थं सहस्रच्छिद्रयुक्तपात्रगलितजलधारायाम् ॥ यथा । सहस्रधारयादेवी॰

शिरोवहासहदेव्याजटाभुवम् ॥ ज्वरं विषमज्वरम् । सर्पाख्याम् । पीतदण्डोत्पलायाम् ॥ सहदेवस्त्रभार्यायाम् ॥

सहदेवीगण: । पुं० प्रतिष्ठायाम् देवस्नानार्थमोषधीसमूहे ॥ यथा । पञ्चगव्यै:स्नापयेत्सहदेव्यादिभिस्तत: । सहदेवीवचाचैवशतम् मौषलावरी ॥ कुमारीचगुडूचीच सिंहीव्याघ्रीतथैवच । याचौषधीतिमन्त्रेणस्नानेओषधिमङ्गलै: ॥

सहधर्मिणी । स्त्री० वेदविधानेनोढायाम् । पत्न्याम् । द्वितीयायाम् । भार्यायाम् ॥ सहधर्मीव्यवस्था: । पत्न्यासहकामंसुधिकारात् । धर्मशीलवर्णान्ताद्वीनि: । विपसत्स्वंनस्य ॥

सहनम् । न० क्षमायाम् । प्रतीकारानिच्छायाम् ॥ यथा । सहनंसर्वदु:खानांतितिक्षासाशुभामतेति ॥ त्रि० क्षमयान्विते । सहिष्णौ । क्षमिणि ॥ सहतेतच्छील: । षह० अनुदात्तेतश्चेतियुच् । नन्द्यादित्वाल्ल्युर्वा ॥

सहनृत्तनम् । न० एकत्रमण्डलाकारन्त्यकरणे ॥

सहनशील: । त्रि० सहिष्णौ ॥

सहपांशुक्रिल: । त्रि० वयस्ये ॥

सहपानम् । न० सपीतौ ॥

सहभावी । त्रि० सहाये ॥

सहभोजनम् । न० बहुभि: सम्मिल्यैकपात्रभोजने । सग्धौ ॥ सहभोजनम् । सुप्सुपेतिसमास: ॥

सहमरणम् । न० मृतस्वामिनासह अवस्थितारोहणेनप्राणत्यागे ॥

सहमान: । त्रि० सहिष्णौ ॥

सहमाना । स्त्री० चैत्रियात्मन: चौ अस्वरद्विपर्णादिग्भागे ॥ सहमानेस्त्रीं पापकर्मफलानियमपुर्याप्रायिमङ्गतितय: ॥

सहयज्ञ: । त्रि० कर्माधिकारी ॥ यज्ञेनविहितकर्मकलापेन० सहवर्त्ततइति ॥

सहयायी । त्रि० मिलितगामिनि । सा:यी० इ० भा० ॥

सहयुद्धा । त्रि० कारितयुद्धे ॥ सहयोधितवान् । युध० सहेचेतिक्वनिप् ॥

सहरसा । स्त्री० मुद्गपर्ण्याम् ॥

सहर्ष: । त्रि० हर्षयुक्ते ॥

सहवास: । पुं० सहावस्थाने ॥ यथा । नसंवसेत्पतितैर्नचाण्डालैर्नपुक्कसै: । नमूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिरितिमनु: ॥

सहवासी । त्रि० एकस्थानेयौगपद्येनावस्थानकर्त्तरि ॥ यथा । सहवासीविजानातिचरितंसहवासिनामिति ॥

सहा: । पुं० मार्गशीर्षे । मार्गे ॥

हिमस्पर्शी । सहर्षे । पच० । अ
सुन् ॥
सहः । न० बले ॥ मानसपाटवे ॥
ज्योतिषि ॥ सहते० सह्यतेऽनेना
नेन वा । पच० । असुन् ॥
सहसः । वि० सहासे ॥ हसीनसहस
तीतइति ॥
सहसा । अ० हठादर्थे ॥ अविमर्शे ॥
॰यथा । सहसाविदधीतनक्रियामवि
वेकः परमापदांपदम् । वृणतेहि
विमृश्यकारिणं गुणलुब्धाः स्वय-
मेवसम्पदः ॥ अतर्किते । आक
स्मिके । अकस्मादर्थे । सहसाभि
सृतोभावोपिास्मनिच्छ हृदिस्थि-
तः । नाकारिणूहितुं शक्योऽहस्य
तिसमैरपि ॥ तत्क्षणादर्थे ॥ दि
व : प्रसूनंसहसापपातेतियथा ॥
सहते । पच० । असाप्रत्ययः ॥
सहसान : । ० पुं० मयूरे ॥ यज्ञे ॥
वि०क्षमायुक्ते ॥ सहते । पच० ।
कृञ्जिवृधिमन्दिसहिभ्यः किदित्य
सानच् ॥
सहस्यः । पुं० पौषमासे । सहसिब
लेसाधुः । तत्रसाधुरितियत् ।
सहस्रम् । न० दशशते० १००० ॥ अ
नन्ते ॥ क्षित्रं शतं सहस्रमुत्सव म
धवनाधवमितिमहाभारतम् ॥
सहस्रकाण्डा । स्त्री० श्वेतदूर्वायाम् ॥
सहस्रकिरणः । पुं० सूर्ये ॥ सहस्रं

किरणायस्य ॥
सहस्रगुः । पुं० आदित्ये । भानौ ॥ स
हस्रं गवांरश्मीनांयस्य ॥ अत्र
यादवः । तासांशतानिचत्वारिरश्मी
नांवृष्टिसर्जने । शतत्रयं हिमो-
त्सर्गेतावद्घर्मस्यसर्जने । आनन्दा
यहिमैत्यायनूतनापूतनाइति । च
तुःशतंहृष्टिवाहास्ताः सर्वास्मृ
तास्त्रियइति ॥
सहस्रजित् । पुं० हरौ । सहस्रा
ण्यसुराणांजयति । जि० । क्विप् ॥
सहस्रणी : । पुं० भीष्मे । गाङ्गेये ॥
सहस्रंरथिनोनयति० नायति ।
णीञ्० । सत्सूद्विषेतिक्विप् ॥
सहस्रतमः । वि० सहस्रस्यपूरणे ॥
नित्यंशतादीतिडटस्तमडागमः ॥
सहस्रदंष्ट्रः । पुं० पाठीनमत्स्ये ॥ स
हस्रदंष्ट्रायस्य ॥
सहस्रदंष्ट्री । स्त्री० पाठीने । पाठा
नमत्स्ये ॥
सहस्रदः । वि० बहुप्रदे । सहस्रं
ददाति । डुदाञ्० । कः ।
सहस्रदो : । पुं० कार्त्तवीर्ये ।
॥ सहस्रंदोषो [illegible]
[illegible]
सहस्रधार : । पुं० विष्णु [illegible]
सहस्रस्पर्शि । स्त्री० [illegible]
[illegible]
याम् । [illegible]

॥ कार्य्यप्रतियोगत्वे । तद्यथा सिद्ध ओदनः सिद्धः सूपः सिद्धा यवागूरिति ॥ मुक्तौ ॥ निष्पन्ने । पक्के ॥ सिध्यतस्म । षिधु संराद्धौ । क्तः । सिद्धे साधनाप्रयोगः ॥ सर्वभूताद्यौ विष्णाधिष्ठाने परमेश्वरे ॥ तस्यत्वात्मायाः कार्य्यघटादि सिद्धमित्युच्यते । परमात्मा तु सर्वदा लब्धसत्ताकत्वात् सहोत्थकामप्रमाणाभावादिति नित्यनिष्पन्नरूपत्वान्नित्यसिद्ध उच्यते ॥ सिद्धिर्योगिनां सामर्थ्यात् तद्भवमीश्वरत्वात सिद्धस्यानन्याधीनसिद्धत्वात् सिद्धो वा ॥ सिद्धिविशिष्टे ॥

सिद्धकः । पुं॰ शालवृक्षे ॥ सिन्धुवारे ॥

सिद्धकामेश्वरी । स्त्री॰ कामाख्यायाः पञ्चमूर्त्यन्तर्गत प्रथममूर्तौ ॥

सिद्धक्षेत्रः । पुं॰ क्षेत्रदेशान्तर्गत नदीपविशेषे ॥

सिद्धगङ्गा । स्त्री॰ मन्दाकिन्याम् ॥

सिद्धजलम् । न॰ काञ्जिके । पक्वतोये ॥

सिद्धदेवः । पुं॰ शिवे ॥

सिद्धधातुः । पुं॰ पारदे ॥

सिद्धपीठः । पुं॰ सिद्धस्थाने ॥ यथा । कामाख्यन्त्रिपुरेत्यादि योग्याकोटिसंख्यकं । महाविद्याजप

कोटिः सिद्धपीठः प्रकीर्त्तितः ॥

सिद्धपुरम् । न॰ भूगोलख्यातदेशविशेषे । मण्डलीयरविकुन्तलद्व्यनिरक्षदेशस्थिते । यथा । लङ्काकुमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोमकपत्तनञ्च । अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथयाम्ये वडवानलश्च ॥ कुवृत्तपादान्तरितानि तानि स्थानानि षट् गोलविदो वदन्ति ॥

सिद्धपुरी । स्त्री॰ सिद्धपुरे ॥

सिद्धपुष्पः । पुं॰ करवीरवृक्षे ॥

सिद्धप्रयोजनः । पुं॰ गौरसर्षपे ॥ त्रि॰ लब्धकार्य्ये ॥ सिद्धं प्रयोजनं येन । यस्मात् ॥

सिद्धमन्त्रः । पुं॰ सिद्धिप्राप्तमन्त्रे ॥

सिद्धमोदकः । पुं॰ शर्करायां । इक्षुखण्डे ॥

सिद्धयोगिनी । स्त्री॰ योगिनीविशेषे ॥

सिद्धरसः । पुं॰ पारदे । रसे । त्रि॰ व्याडिप्रभृतिषु । सिद्धशास्त्रेषु । सिद्धो रसो येषाम् ॥

सिद्धविद्या । स्त्री॰ दुर्गायाम् ॥ महाविद्यायां ॥

सिद्धसङ्घः । पुं॰ ऋषिशादिसिद्धानां समूहे ॥

सिद्धसलिलम् । न॰ काञ्जिके ॥

सिद्धसाधनः । पुं॰ गौरसर्षपे ॥ न॰ सिद्धस्य वस्तुनः साधने । सा

॥ कार्य्यं व्यभिचरति । तथाचासिद्धश्चोदनः सिद्धः स्वप्नः सिद्धायशायुरिति ॥ मुक्ते ॥ निष्पन्ने । पक्के ॥ सिध्यतिस्म । षिधु संराद्धौ । क्तः । सिद्धे साधनाप्रयोगः ॥ सर्वं शास्त्रीयाधिष्ठानेप्रसिद्धे ॥ तत्पश्यात्मर्थ्यांदयटादिसिद्धमित्युच्यते । परमात्मा तु सर्वदा लब्धस्वरूपः सङ्कोचकप्रमाणाभावात् नित्यनिष्पन्नरूपत्वान्नित्यसिद्ध इत्युच्यते ॥ सिद्धिर्योगोत्थाने यासदुभयमीश्वरकालः सिद्धः स्वानन्याधीनसिद्धत्वात् सिद्धोगाः ॥ सिद्धिविशिष्टे ॥

सिद्धकः । पुं॰ शालवृक्षे ॥ सिन्धुवारे ॥

सिद्धकामेश्वरी । स्त्री॰ कामाख्यायाः पञ्चमूर्त्यन्तर्गतपञ्चममूर्त्तौ ॥

सिद्धक्षेत्रः । पुं॰ कीरसदेशान्तर्गततदेशविशेषे ॥

सिद्धगङ्गा । स्त्री॰ मन्दाकिन्याम् ॥

सिद्धजलम् । न॰ काञ्जिके । पक्वतोये ॥

सिद्धदेवः । पुं॰ शिवे ।

सिद्धधातुः । पुं॰ पारदे ॥

सिद्धपीठः । पुं॰ सिद्धस्थाने ॥ यथा । कामोलयपर्वतेऽस्मिन् तत्रैषा कोटिसहस्रम् । महाविद्याख्यकोटिः सिद्धपीठः प्रकीर्त्तितः ॥

सिद्धपुरम् । न॰ भूगोलख्याधिदेशविशेषे । तच्चोत्तरकुरुवर्षस्यान्तर्वर्त्तिदेशेऽस्ति । यथा । लङ्काकुमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोमकपत्तनञ्च । अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथ याम्ये वडवानलश्च ॥ कुवृत्तपादान्तरितानि तानि स्थानानि षड्गोलविदो वदन्ति ॥

सिद्धपुरी । स्त्री॰ सिद्धपुरे ॥

सिद्धपुष्पः । पुं॰ करवीरवृक्षे ॥

सिद्धप्रयोजनः । पुं॰ गौरसर्षपे ॥ त्रि॰ लब्धकार्य्ये । सिद्धं प्रयोजनं येन॰ यस्य वा ॥

सिद्धमन्त्रः । पुं॰ सिद्धिप्राप्तमन्त्रे ।

सिद्धमोदकः । पुं॰ शर्कराखण्डवस्तुद्रव्ये ॥

सिद्धयोगिनी । स्त्री॰ योगिनीविशेषे ।

सिद्धरसः । पुं॰ पारदे । रसे । त्रि॰ व्याडिप्रभृतिषु । सिद्धचामीरसस्य । सिद्धो रसो येषाम् ॥

सिद्धविद्या । स्त्री॰ दुर्गायाम् ॥ महाविद्यायां ॥

सिद्धसङ्घः । पुं॰ कपिलादिसिद्धानां समूहे ॥

सिद्धसलिलम् । न॰ काञ्जिके ॥

सिद्धसाधनः । पुं॰ गौरसर्षपे । न॰ सिद्धस्य वस्तुनः साधने । सा

सिन्दूररस : । पुं॰ रससिन्दूराभिधौषधे ।

सिन्दूरित : । त्रि॰ सिन्दूरवत्कृते ॥ सिन्दूरवच्छब्दात् तत्करोतीत्यस्मात् कर्म्मणि क्त : । णाविष्ठवद्भावा त्॰ विन्मतोर्लुक् ॥

सिन्दूरी । स्त्री॰ रोचन्याम् ॥ रक्तचित्रकायाम् ॥ धातक्याम् ॥ सिन्दूरीविषपित्तास्रकृष्णाकान्तिवृद्धि मा ॥

सिन्धु : । पुं॰ अब्धौ । समुद्रे ॥ अन्त्यकं । पारिऽव ॥ शब्द॰ ॥ अन्त्य: इत्यसारघ धवेलु : ॥ वमथौ ॥ रागिनीभरतायीवितदेशविशेषे ॥ काश्मीरदेशप्रसिद्धनदविशेषे ॥ गजमदे ॥ सिन्धुवारवृक्षे ॥ रागविशेषे ॥ श्वेतटङ्कने ॥

सिन्धु : । स्त्री॰ नद्यां । सरिति ॥ नदीविशेषे ॥ तज्जलगुणायथा । सत द्रौविंशायुन : सिन्धुनद्या : सुशीतं लघुस्वादुसर्वामयघ्नम् । जलं निर्मलं दीपनं पाचनस्वप्रदत्ते बलं बुद्धिमेधायुरायु ॥

सिन्धुक : । पुं॰ सिन्दुके । निर्गुण्डाम् ॥ सिन्धुशब्दात् स्वार्थे संज्ञायांशकन् । गुणायथा । सिन्धुक : स्मृतिदस्तिक्त : कषाय : कटुकोलघु : । केश्योनेत्रहितोहन्तिशूलशोथाममारुतान् ॥ क्रमिकुष्ठा

चिरुचिप्रावयाशिलापित्तहिधा ॥ सिन्धुवारकलं जन्तुघ्नमशं घहरं मधु ॥ त्रि॰ सिन्धुजाते ॥ सिन्धुपक्ता राख्यांकन् ॥

सिन्धुकफ : । पुं॰ समुद्रफेने ॥

सिन्धुप्रभव : । पुं॰ तीर्थविशेषे ॥

सिन्धुरम् । न॰ श्वेतटङ्कने ॥

सिन्धुखेल : । पुं॰ सिन्धुदेशे ॥

सिन्धुजम् । न॰ सैन्धवलवणे ॥ सिन्धुजातम् ॥ सप्तम्यांजनेड : ॥ त्रि॰ समुद्रजाते ॥

सिन्धुजन्मा । पुं॰ चन्द्रे ॥ न॰ सैन्धवलवणे ॥

सिंधुजा । स्त्री॰ लक्ष्म्याम् ॥

सिंधुडा । स्त्री॰ मालवरागभार्यायाम् ॥

सिंधुनन्दन : । चन्द्रे ॥

सिंधुपुत्र : । पुं॰ चन्द्रे ॥ मर्कटेन्दौ ।

सिंधुपुष्प : । पुं॰ बकुले ॥

सिंधुमन्थजम् । न॰ सैन्धवलवणे ॥

सिंधुर : । पुं॰ हस्तिनि ॥

सिंधुरद्वेषी । पुं॰ सिंहे ।

सिंधुरवदन : । पु॰ गणेशे ॥

सिंधुराज : । पुं॰ समुद्रे ॥

सिंधुलवणम् । न॰ सैंधवे ॥

सिंधुवार : । पुं॰ उत्तमाश्वे ॥ सिंधुवारे । निर्गुण्डाम् ॥ सिंधुवारोविषघ्न : पाययकुष्ठघ्नयापह : ॥ सिंधुंवारयति॰ वारयतिवा । कर्

सिह्लःध्मानकफगुल्मोदरानिलान् उन्मादमोहकुष्ठार्शःशोथमेदोऽश्म पाण्डुताः। व्रणशोथज्वरप्लीहविष दूषीविषं हरेत्। तथानीयं तु पीतो ऽस्रमधुरकटुकं लघु। शुक्लना डकुष्ठिनाम्नापित्थं वीर्यरोगिणाम्। हितमेतद्विरेकार्थं येषाञ्चदो षरोगिणः॥

सिह्लुण्डदलम्। न०। सुहीपत्रे॥ तस्यागुणा यथा। सिह्लुण्डस्य दलमोच्चं दीपनं रोचनं हरेत्। ध्मानाष्ठीलिकागुल्मशूलशोथोदरा णि च॥

सिह्लः। पुं०। तुरुष्के। पिण्डके। यावने। शीधाम० इ० आ० प्र०॥ सिह्लति। सिह्लीति। अ स्माद्विवत्यर्थः। पाकृपालक्। पृषोदरादि०॥

सिह्लकः। पुं०। सिह्ले। कामीरी ग०ं द० इ० भा० सीताम्० इ० य वनभाषाप्रसिद्धे॥ सिह्लकः कटुः स्वादुः स्निग्धोष्णः शुक्रकान्ति कृत्। वृष्यः कण्ठ्यःस्वेदकुष्ठज्वर दाहग्रहापहः॥

सिह्लकी। स्त्री०। सल्लक्याम्॥ सि ह्ले।

सिह्लभूमिका। स्त्री०। शल्लक्याम्॥

सिह्लसारः। पुं०। तुरुष्के। धूम वर्णे। धौतसारे॥

सीकरः। पुं०। शीकरे॥ धनपाला दिमतेदन्त्यादिः॥

सीता। स्त्री०। लाङ्गलपद्धतौ। हल रेखायाम्॥ जनकनन्दिन्याम्। मैथिल्याम्। वैदेह्याम्॥ सीता लाङ्गलपद्धतिः। तदुत्पन्नत्वात्सी तेति निर्दिष्टा॥ यथा। अथमे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः। क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुतेति रामायणे ६६ सर्गः॥ स्वर्गगङ्गायाम्॥ यथा। पूर्वेण सीतानुष्ठं संयात्यम्बरविगा। ततश्च पूर्ववर्षं भद्राश्वं गत्वार्णवम्॥ तथालकनन्दा दक्षिणम्॥ इति श्रीभागवते। सीता तु ब्रह्मसदनात्केसराचलादिगिरिशिखरेभ्यो ऽधोऽधः प्रस्रवन्ती गन्धमादनमूर्द्धसु पतित्वान्तरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशतीति॥ श्रिये॥ दुर्गायाम्। सत्याधिदेव तायाम्॥ मदिरायाम्। 'गङ्गा'स्रोत सि। आकाशगङ्गायाम्॥ सीयते। षिञ्०। क्तः। पृषोदरादिः॥

सीताद्रव्यम्। न०। कोषकुद्दालादौ॥

सीतापतिः। सीतायाः पतिः। पुं०। रामचन्द्रे। दाशरथौ॥

सीत्कारः। पुं०। मनुष्याणां सुरतानुरागशब्दे॥ यथा। गण्डीग्रामानु

मनडूतिनङीप् । डाबुभाभ्यामिति पक्षे डाप् । सीमे॰ सीमा : ॰ द्व्यादिवीप्सम् ॥ वेलायाम् ॥

सीमाविवाद : । पुं॰ ग्रामादीनांसीमाविषयकेकलहे ॥ सीमाविषयकोविवाद : सीमाविवाद : । सीमा चतुर्विधा । जनपदसीमा॰ ग्रामसीमा॰ क्षेत्रसीमा॰ गृहसीमेति भेदात् ॥

सीमिक : । पुं॰ वृक्षविशेषे ॥ वल्मीके ॥ सूक्ष्मकीटजातौ । तच्च पक्षविभागकृतिकीटे । स्यमति । स्यमुशब्दे । स्यमेः सम्प्रसारणञ्चेति विधानात् ॥

सीर : । पुं॰ अर्के । सूर्ये ॥ हले । लाङ्गले ॥ सिनोति॰ सीयतेवा । षिञ् ॰ । शुसिचिमीनांदीर्घश्चेति॰ क्रन्॰ दीर्घत्वञ्च ॥

सीरक : । पुं॰ शिशुमारे ॥ अर्के ॥ हले ॥

सीरध्वज : । पुं॰ चन्द्रवंशीयनृपविशेषे ॥

सीरपाणि : । पुं॰, बलभद्रे । कालिन्दीभेदने ॥ सीरोलाङ्गलंपाणावस्य ॥

सीराङ्गम् । न॰ कालागारे ॥

सीरी । पुं॰ बलदेवे ॥

सीलन्ध : । पुं॰ मत्स्यविशेषे । सिलिन्द॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ तद्गुणायथा । सीलन्ध : श्लेष्मलोवृष्योविपाकेमधुरोगुरु : । वातपित्तहरोहृद्य आमवातकरस्तथा ॥

सीवनम् । न॰ सेवने । स्यूतौ । सुश्रुतायकर्मणि । सीवना॰ इ॰ भा॰ ॥ षिवुतन्तुसन्ताने । ल्युट् पृषोदरादित्वाद्दीर्घ : ॥ षिवुसिव्योल्युटिवाद्दीर्घइतिस्वामी ॥

सीवनी । स्त्री॰ लिङ्गमध्यस्थ : सूत्रे लिङ्गाधोगुह्यपर्यन्तसीवने ॥

सीसम् । न॰ सीसके । योगेष्टे । नागे । सीसा॰ इ॰ भा॰ प्र॰ धातौ ॥ सिनोति । षिञ्॰ । क्विप् । अनित्यत्वात्तुक् । ईषति । षि॰ । बाहुलकादिक : । सिच॰ तत्॰ ईसञ्च॰ सीसम् ॥ अस्यगुणा यथा । सीसंरङ्गगुणंज्ञेयंविशेषान्मेहनाशनम् ॥ नागस्तुनागशततुल्यबलंददातिव्याधिंविनाशयतिजीवनमातनोति । वह्निंप्रदीपयतिकाममवलंकरोतिमृत्युंचनाशयतिसन्ततसेवित : स : ॥ पार्श्वनष्टोनोविवर्णनागोक्तुष्ठानिगुल्मांस्तथातिकष्टान् । पाण्डुप्रमेहानिलमन्दशोथभगन्दरादीन्कुरुत : प्रभुक्तौ ॥ अस्यशोधनमारणविधिर्यथा । तस्यसाहजिकादोषाथंगस्यैवनिदर्शिता : । शोधनंचापितस्यैव॰ भिषग्भिर्दितंपुरा : ताम्रवत्तरस

याम् ॥

सुगन्धभूतृणम् । न० गन्धतृणे ॥

सुगन्धमूला । स्त्री० रास्नायाम् ॥ स्थलपद्मिन्याम् ॥ सुगन्धीमूलेयस्याः ॥

सुगन्धा । स्त्री० रास्नायाम् ॥ शोभनो गन्धः । सुगतोतिसमासः । सुगन्धोऽस्त्यस्याः । अर्शआद्यच् । अव्याम् ॥ गन्धपत्न्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ नवमालिकायाम् ॥ तुलस्याम् ॥ सहकार्टिकायाम् ॥ शतपुष्पायाम् ॥ स्वर्णयूथ्याम् ॥ रुद्रजटायाम् ॥ नागनासिके ॥ सल्लक्याम् ॥ माधव्याम् ॥ तीर्थविशेषे ॥

सुगन्धामलकम् । न० सर्वौषधिभिः शुष्कामलकसंयोगे । यथा । सर्वौषधिसमायुक्ताः शुष्कास्त्वामलकस्तवः । यत्रातदायोगः स्यात् सुगन्धामलकाभिधः ॥ दुविरास निर्दिष्टः ॥

सुगन्धिः । पुं० शोभनगन्धे । सुरभौ । घ्राणतर्पणे । दुष्टगन्धे ॥ तुम्बुरुवृक्षे । तीक्ष्णगन्धे ॥ परमात्मनि ॥ प्रतिमोक्षधर्मटीकायां नीलकण्ठः ॥ सहकारे ॥ न० एलवालुके । हीवेरे ॥ कुसुम्बुरौ ॥ धान्याके ॥ सूक्ष्मैले ॥ कशेरुके ॥ गन्धतृणे ॥ पिप्पलीमूले ॥ त्रि० सुगन्धयुक्ते ॥ शोभनोगन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्य इतीत्त्वम् ॥ गन्धस्येत्त्वे तदेकान्तग्रहणं नाद्रियन्ते कवयः । यथा । काण्डूयमानः कटभृङ्गकरिणीमदेनस्पृष्टं सुगन्धिमनुलोमयतां गवेति माघे० सुगन्धिं शोभनगन्धमित्यर्थात् ॥

सुगन्धिकः । पुं० सिह्लके । तुरुष्के । महाशालौ ॥ गन्धके ॥ न० कह्लारे ॥ पुष्करमूले ॥ गौरसुवर्णे । वारिजे । धान्यविशेषे ॥ सुगन्धे ॥ उशीरे ॥

सुगन्धिकुसुमम् । न० सुगन्धिपुष्पे ॥ पुं० पीतकरवीरे ॥ शोभनगन्धयुक्तानि पुष्पाण्यस्य ॥

सुगन्धिकुसुमा । स्त्री० पृक्कायाम् ॥

सुगन्धिता । स्त्री० सौरभ्ये ॥ शोभनो गन्धोऽस्य० तस्य भावः । तल् । टाप् ॥

सुगन्धितैलम् । न० । सुगन्धिवति । तैलकादिपानीये ॥

सुगन्धिफला । स्त्री० जातीफले न० पूगफलेन सह युक्ते शब्दद्वयाभिधाफले ॥

सुगन्धिनी । स्त्री० आरामशीतलायाम् ॥

सुगन्धिमूलम् । न० उशीरे ॥

सुगन्धिमूषिका । स्त्री० छुछुन्दर्याम् ॥

सुत्या । स्त्री॰ अभिषवे । सोमलताकण्डने ॥ अभिषवदिने ॥ सवनम्॰ सूयतेऽस्मिन्॰ अस्यां वा । षुञ् अभिषवे । संज्ञायां समजेति क्यप् ॥

सुत्रामा । पुं॰ गोत्रभिदि । इन्द्रे ॥ सुष्ठु त्रायते॰ पालयति । त्रैङ् पालने । आतोमनिन्॰ सर्वधातुभ्योमनिन् वा ॥

सुत्वा । पुं॰ अभिषवकारिणि । यज्ञान्तस्नानकर्त्तरि ॥ सुतवान् । षुञ्॰ । सुयजोर्ङ्वनिप् । तुक् ॥

सुत्वरी । स्त्री॰ मातरि ॥ ष्टुनिप्नात्॰ वनोरचेतिङीपौ ॥

सुदुग्धा । स्त्री॰ दुग्धाख्यायाम् । सुदग्धिकायां ॥ सिरुकल्पद्रुमे ॥

सुदग्धिका । स्त्री॰ क्षुद्र॰ ह॰ गौ॰ दे॰ भा॰ प॰ दुग्धे । दग्धरुहायाम् । भक्तरोहायाम् ॥

सुदण्डः । पुं॰ वेत्रे ॥

सुदाण्डिका । स्त्री॰ गोरख्याम् ॥

सुदन् । त्रि॰ शोभनदन्तविशिष्टे ॥ शोभनादन्तायस्य सः । वयसिदन्तस्य दतृ । नुम् ॥

सुदर्भा । स्त्री॰ तृणविशेषे । इक्षुदर्भायाम् ॥

सुदर्शनः । पुं॰ । हरेश्चक्रे ॥ अस्य लक्षणं यथा । द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । चक्रं स्यात्तद्विपार्श्वे : शंखश्रीहरिःस्मृ॰ तद्गति ॥ जिनानांवलदेवे ॥ इ चाहर्त्सु पितरि ॥ शोभनं दर्शनमस्य । अक्षौ : सुखिनदृश्यशिवा । भाषायांशासियुधिदृशिधृषिमृषिभ्यो युच् ॥ गन्धर्वे ॥ जम्बूद्वीपे ॥ सुदर्शनाकारत्वात् ॥ मेरौ ॥ वंशे ॥ राजभेदे ॥ न॰ शक्रनगरे । शक्रगमने ॥ त्रि॰ सुदृश्ये ॥

सुदर्शनचूर्णम् । न॰ भावप्रकाशोक्तज्वररोगघ्नौषधविशेषे ॥

सुदर्शनद्वीपः । पुं॰ न॰ जम्बूद्वीपे ॥

सुदर्शना । स्त्री॰ आज्ञायाम् ॥ ओषधिप्रभेदे । सोमवल्ल्याम् । क्षपर्ण्याम् । सुदर्शनागुणास्तु॰ पञ्चगुणत्व॰ भू॰ गौ॰ दे॰ भा॰ प॰ ॥ सुदर्शनाख्याडुतव्यानफशोफाद्यवातजित् ॥ सेवकाम्ब्याम् ॥ सुराविशेषे ॥

सुदर्शनी । स्त्री॰ अमरावत्याम् ॥

सुदलः । पुं॰ क्षीरमोरटे ॥

सुदला । स्त्री॰ तरुण्याम् । गन्धाख्यायाम् । सेवन्त्याम् । शालपर्ण्याम् ॥

सुदान्तः । पुं॰ शाक्यमुनिशिष्यविशेषे । त्रि॰ तपःसहे ॥

सुदामा । पुं॰ वारिधरे । मेघे ॥ पर्वतविशेषे । गोपविशेषे समुद्रे । श्वेतद्वीपे । ऐरावते । श्रीकृष्ण

मित्रे व्राह्मणविशेषे । त्रि० सुदात रि ॥ सुष्ठुददाति । डुदाञ्० । भातीमनिन् ॥

सुदामा । स्त्री० नदीविशेषे । टाप् ॥

सुदायः । पुं० हरणे । कन्यादान काले० श्वशुराद्दीयमानद्रव्ये । सुष्ठुदीयते । डुदाञ्० । घञ् । युगागमः ॥

सुदारुः । पुं० पारियात्रपर्वते ॥ सुदारुःपारियात्रपतिहेमचन्द्रः ॥ न० शोभनदारुणि ॥

सुदि । अ० शुक्लपक्षे ॥

सुदिनम् । न० शुभदिवसे ॥ त्रि० प्रशस्ते ॥ यथा । सुदिनासु समा सु चार्यमेतत्प्रविचिन्त्योत्तविशेषतः स्वयमितिप्रयोगः ॥

सुदीर्घः । त्रि० अतिविस्तारे ॥

सुदीर्घघर्मा । स्त्री० चक्तनपर्ण्याम् ॥

सुदीर्घफलिका । स्त्री० वार्त्ताकुविशेषे । सिंहाविंगन० इतिगौ० दे० भा० प्र० ॥

सुदीर्घा । स्त्री० चीनाकर्कट्याम् ।

सुदुर्दर्शः । त्रि० अत्यन्तंद्रष्टुमशक्ये ॥ सर्वथादर्शनायोग्ये परमात्मनि ॥ तस्याहष्टरूपत्वात् ॥

सुदुर्लभ । त्रि० अतिदुष्प्राप्ये । दुःखेनापिलब्धुमशक्ये ॥ यथा । बहूनांजन्मनामन्ते ज्ञानवान्मांप्रपद्यते । वासुदेवः सर्वमितिसमहात्मासुदुर्लभइति ॥ सुमतिमान्दुर्लभः ॥

सुदुश्चरः । त्रि० अतिशयदुःखेनाचरणीये ॥

सुदुष्करः । त्रि० सर्वथाकर्त्तुमशक्ये ॥ अत्यन्ताक्लेशकरे ॥

सुदुस्तरः । त्रि० अतिदुःखेनतरणीये ॥

सुदूरः । त्रि० दवीयसि । दूरिष्ठे । अतिदूरे ॥ यथा । सुदूरमपिगन्तव्यं यत्रमःशेश्वरोजनः ॥

सुदूरपराहतः । त्रि० अतिदूरनिराकृते ॥

सुदृढम् । न० अतिदृढे । गाढे ॥ त्रि० तद्वति ॥

सुदृढत्वक् । स्त्री० काश्मर्याम् ॥

सुदृश् । त्रि० शोभननेत्रयुक्ते ॥

सुदृश्यः । त्रि० सुन्दराकृतौ ॥

सुदेवी । स्त्री० नाभेर्भार्यायाम् । मेरु संज्ञायाम् ॥

सुदेशः । पुं० मत्स्यदेशे । उत्तमदेशे ॥

सुद्युम्नः । पुं० वैवस्वतमनोः पुत्रे ॥ त्रि० बहुधने । अतिवलयशस्विनि ॥

सुधन्वा । पुं० विश्वकर्मणि । त्वष्टरि । नरविशेषे ॥ त्रि० धन्वनि । प्रौढधानुष्के ॥ शोभनंधनुर्यस्य । धनुषश्चानङ् ॥

सुधन्वाचार्यः । पुं० व्रात्याद्वैश्यात्सवर्णायांजाते० जातिविशेषे ।

कारये । यथाऽमरुः । वेश्मान्तु जायतेब्रात्यात्सुधन्वाचार्य एव च । कारुषश्च विजन्मा च मैत्रः सात्वत एव चेति ॥

सुधर्म्मः । पुं० जिनगणाधिपविशेषे ॥

सुधर्म्मा । त्रि० धर्म्मशालिनि ॥ कुटुम्बिनि ॥

सुधर्म्मा । स्त्री० देवसभायाम् । शोभनोधर्म्मोऽस्याः । धर्म्मादनिच् केवलात् । डाबुभाभ्यामितिपक्षे टाप् । अनोबहुव्रीहेरितिङीप्न । सुधर्म्मे० सुधर्म्मा इत्यादि । डाबभावे । सुधर्म्माणौ० सुधर्म्माणइत्यादि ॥

सुधा । स्त्री० पीयूषे । अमृते । गङ्गे । सुरायाम् ॥ सुखेनधीयते । पिट्पाने । आतश्चोपसर्गे इत्यङ् । टिपनि । सुरायाम् । मूर्व्वायाम् ॥ स्नुह्याम् ॥ गृहेष्टकायाम् ॥ गङ्गायाम् ॥ शालपर्ण्याम् ॥ विद्युति ॥ गुडूच्याम् ॥ जले ॥ तीर्थे ॥ रसे ॥ धात्र्याम् ॥ आमलक्याम् ॥ पुष्परसे ॥ मधुनि ॥ धवलितवास्तु ॥ सुष्ठुदधातिपुष्णाति । डुधाञ् । क्विप् ॥

सुधांशुः । पुं० इन्दौ । चन्द्रे ॥ सुधायुक्ताअंशवोयस्य ॥

सुधांशुतैलम् । न० कर्पूरतैले ।

सुधांशुरत्नम् । न० मौक्तिके ॥ चन्द्रकान्ते ॥

सुधाकरः । पुं० चन्द्रे ।

सुधाहारः । पुं० सौवमूपर्णे । चू ना० ष० भा० प्र० ॥ सुधाहारो ऽस्मज्जाय : पाक्षोर्द्दीविहारचः ॥

सुधांशुः । पुं० चन्द्रमसि ॥

सुधाजीवी । पुं० पलगण्डे । लेपके । राज० ब्र० भा० ॥ सुधयालेपनेनजीवति० तच्छीलः णिनिः ॥

सुधाधारः । पुं० चन्द्रे । इन्दौ । अमृतपात्रे ॥ सुधायाः आधारः ॥

सुधानिधिः । पुं० चन्द्रे ॥

सुधाभुक् । पुं० गीर्वाणे । देवे । सुधांभुङ्क्ते । भुज० । क्विप् ॥

सुधामय । पुं० सौधे । राजसद्मनि । त्रि० अमृतात्मके ॥

सुधामोदकः । पुं० यवासशर्करायाम् ॥

सुधामोदकजः । पुं० तवराजाख्य खण्डे ॥

सुधावर्षी । पुं० विधातरि । विश्वसृजि । बुद्धभेदे ।

सुधासवः । पुं० चन्द्रे । न० अमृते ॥

सुधारसा । स्त्री० मधुरप्याम् ॥

सुधासञ्जयोगः । पुं० अमृतसिद्धियोगे । यथा । हस्तावत्स्ये०

सुरेन्द्राधिपः। पुं॰ यगर्षे । ऽऽ ॥

सुनाकृतः। पुं॰ कर्पूरके ॥ इ॰ म॰ चन्द्रिका ॥

सुनाभः। पुं॰ मैनाकाचले ॥

सुनामद्वादशी। स्त्री॰ द्वादशमासी यद्द्वादशीकर्त्तव्यव्रतविशेषे ॥

सुनारः। पुं॰ शुनीस्तन्ये ॥ सर्पाण्डे ॥ चटके। कलविङ्के ॥

सुनालः। पुं॰ उशीरे ॥ लामज्जके ॥

सुनालकः। पुं॰ बकद्रुमे ॥ त्रि॰ सुन्दरनालयुक्ते ॥

सुनासिका। स्त्री॰ काकनासायाम् ॥ शोभननासायाम् ॥ त्रि॰ तद्युक्ते ॥

सुनासीरः। पुं॰ इन्द्रे ॥ नासते। पाकशब्दे। वाकुनयावादीरन्। सुष्ठु नासीरसैनामुखम्॰ नासीराः प्रसरावायस्य ॥

सुनिर्यासा। स्त्री॰ जिङ्गिन्याम् ॥

सुनिश्चितः। पुं॰ बुद्धविशेषे ॥

सुनिषण्णम्। न॰ सुनिषण्णकशाके। अञ्जलोमिकासदृशे॰ चौपति या॰ इ॰ प्र॰ जलप्रभवशाके। चतुष्पत्र्याम् ॥ अस्यगुणायथा। चाङ्गेरीसदृशःपत्रैश्चतुर्दलइतीरितः। शाकोजलान्वितेदेशेचतुष्पत्रीतिचोच्यते ॥ सुनिषण्णोहिमोग्राही मोहदोषत्रयापहः। अविदाहील घुःस्वादु कषायोरुक्षदीपनः ॥ उष्योरुच्योज्वरश्वासमेहकुष्ठभ्रमप्रणुत् ॥ सितावरशाके। श्रीवारके ॥ त्रि॰ सूपविष्टे ॥

सुनिषण्णकम्। न॰ शाकविशेषे। वितुन्ने। सुनिषण्णे ॥

सुनीतिः। स्त्री॰ ध्रुवमातरि ॥ शोभननये ॥ त्रि॰ शोभननीतियुक्ते ॥

सुनीथः। त्रि॰ धर्मशीलके ॥ नीतिमति ॥ पुं॰ षष्ठी ॥ ब्राह्मणे ॥ सुष्ठु नयति। थीक्। ॥ पनिक्पुवि नीत्वादिनाक्थन् ॥

सुनीला। स्त्री॰ शची॰ कन्यायाम्। विष्वक्सेनमातरि ॥

सुनीलः। पुं॰ नीलरत्ने ॥ दाडिमे ॥ सुन्दरनीलवर्णे ॥ न॰ लामज्जके ॥

सुनीलकः। पुं॰ नीलरत्ने ॥ नीलासने ॥ दाडिमे। नीलभृङ्गराजे ॥ न॰ वीरपाड्ग्रे ॥

सुनीला। स्त्री॰ क्षपविशेषे। चणिकायाम्। गौडुम्बायाम्। अतस्याम् ॥ विष्णुक्रान्तायाम्। अपराजितायाम् ॥

सुनीलिका। स्त्री॰ सुनीलायाम् ॥

सुनेपाली। स्त्री॰ पिण्डखर्जूरिकाप्रभेदे ॥ तद्गुणायथा। सुनेपाली सुस्वादुवल्लिवीनफलाचसा। सुनेपालीप्रभान्तिदाहमूर्च्छापित्तहृत्। सुखेमानीतिलोके ॥

सुन्द : । पुं० रामायणप्रसिद्धवानरविशेषे । राक्षसविशेषे ॥ चक्रधारिणि परमेश्वरे । सुष्ठु उनत्ति । आर्द्रीकरोति । उन्दी० । पचाद्यच् । शकन्ध्वादि : ॥

सुन्दर : । पुं० कामदेवे । सुन्दरी० वृति० गौ० दे० भा० प्र० वृक्षे ॥ त्रि० रुचिरे । चारुणि । शोभने । मञ्जुनि ॥ सुद्रियते । दृङ् आदरे । अपह्रित्यप् । पृषोदरादि : ॥ यद्वा सुउनत्ति० चित्तद्रवीकरोति । उन्दी क्लेदने । बाहुलकाद र : । शकन्ध्वादि : ॥

सुन्दरिका । स्त्री० तीर्थविशेषे ॥

सुन्दर । स्त्री० रूपलावण्यसम्पन्नायां नार्याम् ॥ द्रुमान्तरे । त्रिपुरसुन्दर्यां देव्याम् ॥ योगिनीविशेषे ॥ हरिद्रायाम् ॥ त्वाष्टमाष्य म् ॥ छन्दोविशेषे । अयुजीयदि सगणौ युजौ: सभराल्गौयदिसुन्दरीतदा । यथा । यदवोचदवेक्ष्यमानिनीपरित : स्नेहमयेनचक्षुषा । अपि वागधिपस्यदुर्वचंवचनंतद्विदधीत विस्मयम् । वर्णसमाचारेऽपि । कुसुमगन्धरसैरभिभूषिताचरणसङ्गतनूपुरमण्डिता । करसुवर्णलसद्वलयान्विताधुरिविलग्नचेतसि सुन्दरि । यथा । नसुखभाचरदिन्दुमुखीप्रियामनसिकामिनि चेष्टितमीहितम् । मलयमारुतचालितमालतीपरिमलप्रसरोद्गतभासर: ॥ सुन्दरशब्दद्गौरादित्वात् ङीष् । पार्वत्याम् ॥

सुन्वन् । त्रि० सोमयाजिनि । सोमाभिषवङ्कुर्वति ॥ सुनोतेर्लट: शत्रादेश : ॥

सुपक्व : । पुं० सुगन्धाम्रे । त्रि० शोभनपरिणते । परिपक्वे ।

सुपक्षक : । पुं० सशकारान्ते ॥

सुपत्र : । पुं० पक्षिआवहपर्णे ॥ आदित्यपत्रे । ग०वीजपर्णे । पवके ॥

सुपत्रक : । पुं० शिग्रौ ॥

सुपत्रा । स्त्री० पालङ्क्याम् ॥ शतावर्याम् । शम्याम् ॥ रुद्रजटायाम् । शालपर्ण्याम् ॥

सुपत्रिका । स्त्री० जतुकायाम् ॥

सुपथ : । पुं० । शोभनवर्त्मनि । सत्पथे ॥ यथा । सत्पथस्त्वितरथ्या च सुपन्थाः सुपथोऽपि चेतिशब्दरत्नावली ॥

सुपन्था : । पुं० अर्चितेऽध्वनि । सत्पथे । अतिपथि । सु : पूजायाम् । कुगतीतिसमास : । नपूजनादितिसमासान्तनिषेध : । हासमासान्तनिर्देशात् पथ : सङ्ख्याव्ययादेरितिनक्लीबत्वम् ॥

सुपथ्य : । त्रि० अपीडाकरभोजनादौ ॥

स्वापसमित्युक्तिः सार्वलौकिकीति । शिष्टप्रयोगे । किञ्च सुप्तःसुप्तिं नजानातिनासुप्तः स्वप्नजागरौ ॥

सुप्तोत्थितः । त्रि० सुप्तात्पश्चादुत्थिते । पादौसुप्तः पश्चादुत्थितः ॥

सुप्रजाः । पुं० सत्सन्तानवति । नित्यमसिच्प्रजामेधयोः ॥

सुप्रतिभा । स्त्री० मदिरायाम् । प्रगल्भतायाम् । वाग्मित्वे ॥

सुप्रतिष्ठा । स्त्री० शोभनप्रतिष्ठायाम् । पञ्चाक्षरायांछन्दसि । साविधा । पङ्क्तिप्रियाच ॥

सुप्रतिष्ठितः । पुं० उदुम्बरे । त्रि० शोभनप्रतिष्ठायुक्ते । सुस्थिरे । यथास्थिते ॥

सुप्रतीकः । पुं० ईशानदिग्गजे । शिवे । कामदेवे । शोभनाङ्गे । त्रि० साधौ । शोभनाङ्गविशिष्टे शोभनाः प्रतीकाः अवयवायस्य । यद्वा । सुप्रपूर्वादिणोऽलीकादित्वात्कीकन् । ह्रस्वस्तुट् च ॥

सुप्रभः । पुं० जिनविशेषे । [illegible] । त्रि० सुन्दरप्रभायुक्ते ॥

सुप्रभा । स्त्री० वाकुच्याम् । अग्निजिह्वाविशेषे । सुप्रभापद्मरागाभासरुष्यादिषिसंस्थितेतितन्त्रसारः । शोभनदीप्तौ ।

सुप्रभातम् । न० शुभसूचकप्रातःकाले ॥

सुप्रभाता । स्त्री० शोभनप्रभातयुक्तायांरात्रौ । प्लक्षद्वीपस्थसरिति ॥

सुप्रयुक्तः । त्रि० शोभनप्रयोगविशिष्टे ॥

सुप्रयुक्तशरः । पुं० कृतहस्ते ॥

सुप्रयोगविशिखः । पुं० कृतहस्ते । सुशिक्षितबाणमोक्षके । सम्यक्कृतशराभ्यासे ॥ शोभनप्रयोगोऽस्य सुप्रयोगः । सुप्रयोगोविशिखोऽस्य ।

सुप्रलम्भः । त्रि० सुखलभ्ये ॥

सुप्रलापः । पुं० सुवचने । सुष्ठूक्तौ । सुष्ठुप्रलापः० लपनम् । घञ् ॥

सुप्रसन्नः । पुं० कुबेरे । कृष्णार्जके ॥ त्रि० सुप्रसादयुक्ते ।

सुप्रसन्नकः । पुं० कृष्णार्जके ॥

सुप्रसरा । स्त्री० प्रसारण्याम् । गन्धालिकाख्यामलतायाम् ।

सुप्रसादः । पुं० शिवे । विष्णौ ॥ शोभनप्रसादोऽस्य ॥ अपचारवतां शिशुपालादीनामपिमोक्षप्रदातृत्वात् ॥ सुप्रसन्नतायाम् । त्रि० प्रसन्नमुखे ।

सुप्रातः । पुं० सुप्रभाते । शोभनंप्रातरस्य । सुप्रातसुश्वेत्यादिना० बहुव्रीहावच्प्रत्ययान्तोनिपातितः ॥

सुप्रिया । स्त्री० सुभगायाम् । भर्तुःप्रियायाम् । सुहृद्यायाम् ॥ मघास्त्वम्परित्यज्ययदा सिंहेगुरु

भवेत् । तथाद्यैरन्यकाचोढासुभगा सुप्रिया भवेत् इति मत्स्यः ॥

सुफलः । पुं॰ दाडिमे । बदरे । मुद्गे । कर्णिकारे । राजतरौ । आरग्वधविशेषे । छोटासोनालु॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ कपित्थे ॥ सतृणकि । त्रि॰ शोभनफलवति । सुष्ठु शोभनानि फलान्यस्य ॥

सुफला । स्त्री॰ कुष्माण्डाभेषधौ ॥ इन्द्रवारुण्याम् ॥ काश्मर्याम् । कदल्याम् । कपिलद्राक्षायाम् ॥

सुफेनम् । न॰ समुद्रफेने ॥

सुबन्धुः । पुं॰ तिले ॥

सुबलपुत्री । स्त्री॰ गान्धार्याम् ॥

सुबहरी । स्त्री॰ पुत्रदात्याम् ॥

सुबाहुः । स्त्री॰ नाकुल्याम् । सोमराज्याम् ॥ शोभनावच्छिरसा : ॥ कदल्याम् ॥

सुब्रह्मण्यः । पुं॰ कार्त्तिकेये । ऋत्विग्विशेषे ॥ गुहे ॥ वीरभद्रादिदेशप्रसिद्धसर्पाधिष्ठातृदेवे॰ सब्रह्म सर्परा जेव ॥

सुब्रह्मण्या । स्त्री॰ निगदविशेषे ॥

सुब्रह्मवासुदेवः । पुं॰ ब्रह्मरूपवासुदेवस्तुति ॥

सुभगः । पुं॰ चम्पके ॥ अशोके ॥ रक्ताम्लाने ॥ टङ्कणे ॥ त्रि॰ हृष्टे ॥ सुन्दरोचक्षुष्ये । शोभनम्॰ भगं श्रीयस्य ॥

सुभगा । स्त्री॰ दुर्गायाम् ॥ पतिप्रियायाम् । सुप्रियायाम् ॥ शालिपर्ण्याम् ॥ वनमल्लयाम् ॥ हरिद्रायाम् ॥ सुवर्णकदल्याम् । चम्पककदल्याम् । चम्पाकेला॰ इ॰ भा॰ प्र॰ ॥ नीलदूर्वायाम् ॥ प्रियङ्गौ ॥ कस्तूर्याम् ॥ तुलस्याम् ॥ कैवर्तिकायाम् ॥ शोभनम्॰ भगं श्रीयस्याः ॥

सुभगासुतः । पुं॰ सौभागिनेये ॥ सुभगायाः सुतः ॥

सुभटः । पुं॰ मारिषशाके ॥

सुभद्रः । पुं॰ विष्णौ । राजनेदे ॥ त्रि॰ सुमङ्गलयुक्ते ॥

सभद्रकः । पुं॰ विमाने । बिल्ववृक्षे ॥

सुभद्रा । स्त्री॰ श्रीकृष्णभगिन्याम् ॥ दूरमभद्रायाम् ॥ श्यामालतायाम् ॥ काश्मर्याम् । गम्भार्याम् ॥

सुभद्राणी । स्त्री॰ त्रायन्त्याम् । वहुला इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

सुभद्रिका । स्त्री॰ दुर्गायाम् ॥

सुभद्रेशः । पुं॰ अर्जुने ॥

सुभानुः । पुं॰ वत्सरविशेषे ॥ तत्फलं यथा । सुभिक्षं च समारोग्यं विश्वस्मिन्निरुपद्रवम् । व्यवहारोभवेद्दृष्ट सुभानौ देवपूजिते ॥ १० ॥

सुभाषितः । पुं॰ बुधे ॥ न॰ सुवचने ॥ हितोपदेशवचने ॥ यथा स्वर्गापवर्गसिद्ध्यर्थं भाषितं यत् सु

शोभनम् । वाक्यंसुभिक्षरे : शांते स्वहितश्चेयं सुभाषितमिति ।

सुभिक्षः । त्रि० सुलभभैक्षद्रव्ये । सुलभभैक्ष्ययुक्तकालादौ ।

सुभिक्षा । स्त्री० धातकीपुष्पायाम् । शोभनायाम् । भिक्षायाम् । त्रि० धान्याढ्ये । सुष्ठु भिक्ष्यते० । भिक्ष याञ्चादौ । कर्म ।

सुभीरवः । पुं० पलाशवृक्षे ।

सुभूः । त्रि० सुजन्मनि ।

सुभूता । स्त्री० औत्तराख्यात्मनः कौ गजोदग्भागे । भूतिमद्भिर्यक्षरक्षकुवेरादिभिरधिष्ठितत्वात् ।

सुभूतिकः । पुं० बिल्ववृक्षे ।

सुभूमः । पुं० कार्त्तवीर्ये ।

सुभृगम् । अ० बाढमित्यर्थे ।

सुभ्राता । त्रि० स्निग्धे भ्रातरि । शोभनः स्निग्धो भ्राता यस्य सः । नद्यृतश्चेति कप्तु न भवति । वन्दिते भ्रातुरिति निषेधात् ।

सुभ्रूः । स्त्री० योषिति । त्रि० शोभनभ्रूविशिष्टे ।

सुमम् । न० पुष्पे ।

सुमङ्गलम् । न० पुष्पादिद्रव्ये । त्रि० सदाचारे । अतिशयमङ्गलि ।

सुमङ्गला । स्त्री० वायसोल्याम् । अप्सरोन्तरे ।

सुमतः । त्रि० अनुमते । सुन्दरज्ञानविषये ।

सुमतिः । पुं० भरतात्मजे । दैत्यविशेषे । भूतविशेषे । स्त्री० शोभनमतौ । विष्णुयशसः पत्न्याम् । कल्किमातरि । त्रि० सुबुद्धौ । निपुणे ।

सुमदनः । पुं० आम्रवृक्षे ।

सुमदात्मजा । स्त्री० स्वर्गिवन्द्यायाम् । अप्सरसि ।

सुमधुरः । पुं० जीवशाके । न० अत्यर्थमधुरवाक्ये । साम्ने । त्रि० अतिशयमधुररसयुक्ते ।

सुमनः । पुं० गोधूमे । सुष्ठु मन्यते । मनज्ञाने । अच् । धत्तूरे । त्रि० मनोहरे ।

सुमनःपत्रिका । स्त्री० जातीपत्र्याम् जावित्री० इ० भा० प्र० ।

सुमनःफलम् । न० जातीफले । पुं० कपित्थवृक्षे ।

सुमनाः । पुं० देवे । सुरे । धीरे । पण्डिते । शोभनं मनो यस्य सः । पूतीकरञ्जे । महाकरञ्जे । निम्बे । गोधूमे । देवप्रायोपायभूमि । त्रि० प्रसन्नमनसि ।

सुमनाः । स्त्री० सुमनसः स्त्री० भूम्नि० पुष्पे । सुमनाः पुष्पमालत्योः स्त्रियां त्रिदशमेदिन्यादेरेकत्वम् । वैद्याश्चयानसुमनाभ्रमरस्य नीयेतिश्रुकोक्तेश्च । स्त्रियः सुमनसः ।

यासुरास्तथैवार्यं रामायणं चादि काण्डे समस्तोध्यासिनामनिषट् चत्वारिंशदध्यायेश्लोकाः ॥ शोभनं राजते । राजृ दीप्तौ । अन्येभ्योपि तिष्ठ : । यद्वा । सुनोति । षुञ् । सुसूधाञ्भिभ्यः क्रन् ॥

सुरकः । पुं॰ पक्षिविशेषे । सुरावकोऽपि : । सुरायाःपःकावतिकम ।

सुरकरीन्द्रदर्पापहा । स्त्री॰ गङ्गायाम् । यथा । भगीरथपथानुगासुरकरीन्द्रदर्पापहामहेशमुकुटप्रभागिरिशिरः पताकासिता । सुरासुरनरोरगैरजभवाच्युतैः संस्तुतादिमुक्तिफलदायिनीभगवतिस्वयंराजते ॥ वृत्तिकल्किपुराणे २४ अध्यायः ॥

सुरकारुः । पुं॰ विश्वकर्मणि ॥

सुरकृता । स्त्री॰ गुडूच्याम् ॥

सुरक्तः । पुं॰ रक्तचन्दने । त्रि॰ मधुरकण्ठे । अत्यन्तानुरक्ते । शोभनरागयुक्ते ॥

सुरताक : । पुं॰ मीनाक्षे । स्वर्गैरिके ।

सुरगणः । पुं॰ इन्द्रादिदेवगणे ॥

सुरगण्डः । पुं॰ रोगविशेषे । वरण्डे ॥

सुरगुरुः । पुं॰ बृहस्पतौ ॥

सुरग्रामणीः । पुं॰ इन्द्रे ॥

सुरङ्गः । पुं॰ नागरङ्गे । भूमौगुप्त



मार्गात्मकगर्तविशेषे । न॰ पत्तङ्गे । वक्रम्॰ दू॰ भाषा॰ प्र॰ । हिङ्गुले ॥

सुरङ्गकृत् । पुं॰ खनकइतिद्रविडासप्रसिद्धे भूमौगुप्तमार्गकर्त्तरि ॥

सुरङ्गदम् । न॰ पतङ्गे ॥

सुरङ्गधातुः । पुं॰ गैरिके ॥

सुरङ्गयुक् । पुं॰ सुरङ्गायाःकर्त्तरि । कुम्भिले ॥

सुरङ्गा । स्त्री॰ गर्ताविशेषे । कैवर्त्तिकायाम् । दशारुहायाम् ॥ शिवर्गभूखाते । सन्धौ । यौध॰ इ॰ सुरङ्ग॰ इतिभाषाप्रसिद्धे ॥ सुष्ठुरज्यतेऽस्याम्रक्तसा । रञ्जरागे । घञर्थे तिवज् । पक्षीरितिकुत्वं ॥

सुरङ्गिका । स्त्री॰ मूर्वायाम् ॥

सुरङ्गी । स्त्री॰ काकनासायाम् । रक्तशोभाञ्जने॰ इतिरत्नमाला ॥

सुरजःफलः । पुं॰ पनसवृक्षे ॥

सुरजनी । स्त्री॰ रात्रौ ॥

सुरज्येष्ठः । पुं॰ ब्रह्मणि ॥ सुराणांसुरेषुवाज्येष्ठः ॥

सुरञ्जनः । पुं॰ गोपद्रवे । गुवाकवृक्षे ॥

सुरतम् । न॰ निधुवने । मैथुने ॥ सुरतंद्विविधम्॰ बाह्यमाभ्यन्तरञ्च । तत्रबाह्यमेकपञ्चाशदपि चुम्बनाद्यनेकविधम् । आभ्यन्तरञ्चासनादिभेदेनापि ॥ त्रि॰ दृष्टे

हट्टविलासिनी । स्त्री० गन्धद्रव्यविशेषे । नख्याम् । अम्बुनखीयाम् । हरिद्रायाम् । हट्टे विलसति० स्त्रीला । लम्बकौड़ायाम् । सुखी लिपिनि : ॥

हट्टाध्यक्ष : । पुं० अधिकर्मिके ॥

हट्टी । स्त्री० क्षुद्रहट्टे । पुरतल्याम् ॥

हठ : । पुं० प्रसभे । बलात्कारे ॥ अम्बुपर्ण्याम् । प्रधान्याम् । हठम् । हठमुखिहठत्वयोः । पुंसि० खलीचमेलिनाव : ॥

हठनिग्रह : । पुं० मूढानुरूपोतनिग्रहविशेषे ॥ तथाहि । चक्षु : श्रोत्रादीनि ज्ञानेन्द्रियाणि० वाक्पाण्यादीनि कर्मेन्द्रियाणि० तथैते लयमाधौ परोधेन हठाभिरुद्धानि । तद्वृत्तान्तनमोविषठेननिग्रहोभ्यासीतिमूढमूर्खाभिभवति । नयत मयानिग्रहेतु प्रस्थते० तद्वोन्मत्त मद्दन्तमत्त गजेरिव मयकस्मात् । अत : क्रमनिग्रहप्रयुक्त : ॥

हठपर्णी । स्त्री० अम्बुतालि । शैवाले ॥

हठयोग : । पुं० पातञ्जलोक्तप्रसिद्धेऽष्टाङ्गयोगे । योगतरोत्योक्तयोगे । यथा । इदानीं हठयोगस्तु कथ्यते हठसिद्धिद : । आसनं पावनांश शरीरे रोगापरक्षकम् । पूरकं कुम्भकञ्चैव रेचकं वायुनाभ्यसेत्



। इत्थं कर्मे क्रमं चाभ्यासं साधयेत्सदा । धौत्यादिकं षट्कर्मं स्यात् हठसाधक : । एतन्नाड्यन्तर्देवैर्विवायुपूर्ण प्रतिष्ठितम् ॥ ततो मनोनिश्चलं भूत्वा तत्त्वानन्दमेव हि । हठयोगप्रकाश : प्राप्नुयाच्छुद्धे भवेद्यदि । इदानीं हठयोगस्य द्वितीयभेदमुच्यते । काशीनासिकायां तु संयोजितमं स्मरेत् । प्रतं रक्तं तथा पीतं कृष्णमिश्यादिरूपत : । एवं ध्यात्वा चिरायु : व्याह्रुतमन्त्रपद्धितः । विश्वतुल्यो महात्मासौ हठयोगप्रसादत : । हठान्ज्योतिर्मयो भूत्वा ह्यमरैवाभिवीयवेत् । वतीयं हठयोग : ख्यातः सिद्धिद : सिद्धसेवितः इति ॥

हठालु : । }<br>हठालुका । } स्त्री० कुम्भिकायाम् ॥

हठी । त्रि० हठविशिष्टे ॥

हठी । स्त्री० वारिपर्ण्याम् ॥

हडि : । पुं० नगरसाधनकाष्ठयन्त्रविशेषे । यथा । निगडोलो हडवधि : स्यात् : काष्ठयन्त्र पे इति शब्दमाला ॥

हण्डक : । पुं० महाष्टपिथि० नीचजातिविशेषे । हाडि० इ० गौ० भा० ॥

हडम् । न० अस्थनि ॥

हड्डक : । पुं० हडिके ॥

हड्डजम् । न० मज्जनि ॥

हडि : ।
हडिक : । पुं० हडिकैमलेयष्टौ ॥
हडिप : ।

हण्डा । अ० कुत्सिताह्वाने । नीचस म्बोधने ॥ यथा हञ्जे तिष्ठेत्यादा नसख्य ह्वानश्चैव च । हण्डे तिष्ठ त्वितःश्रुतस्मार्यौभारिमाश्वाच्यमिति भागुरिः ॥ हण्डाहञ्जाहलाह्वाना क्षप : सम्बोधनार्थकाः ॥ पाथ विशेषे ॥

हण्डिका । स्त्री० भाण्डी-इति भा०-ख्याते । उखायाम् ॥

हण्डिकासुत : । पुं० क्षपणे । कौटो शाखी-इ०भा० ॥ इति त्रिकाण्डशेषः ॥

हण्डी । स्त्री० पण्डिकायाम् ॥

हण्डे । अ० नाट्योक्तौनीचांशग्याह्वाने ॥ हिण्डते । हिण्डिगत्यना-दरयोः । बाहुलकादिप्रत्ययः डेऽप्रत्ययः ॥

हत । त्रि० हननक्रियाकर्मभूते । नष्टे प्रमापिते ॥ आघातादिते । भग्नमनसि । मनोहते । प्रतिह-ते । प्रतिबुद्धे ॥ च हते । गुणिते । ताडिते ॥ हन्-क्तः । कर्म० । क्तः ।

हतक । पुं० नीचजने ॥

हताश : । त्रि० निर्दये ॥ आशारहिते ॥ पिशुने ॥ हताआशायस्मात्-हृष्टादिविग्रहः । वन्ध्ये ॥

हति : । स्त्री० अपघाते ॥

हतौजा : । त्रि० निस्तेजस्के ॥

हद् : । पुं० व्याधौ ॥ अस्त्रे ॥ इति-आहारमन्यांसः । हन० क्तह निर्व्याज्ञानु । अनुनासिकोपदेशिस्या दिनाऽनुनासिकलोपः ॥ हन्ति ॥

हत्या । स्त्री० हनने । वधे ॥

हथ : । त्रि० विमर्षे ॥ हन्ति । हन० । हनिकुषिनीरमिकाशिभ्यः क्थन् ॥ ० ॥

हन : । त्रि० हननकर्त्तरि ।

हननम् । न० प्राणवियोगफलकव्यापारे । वधे ॥ मारणे ॥

हनु । स्त्री० हट्टविलासिन्याम् ॥ अस्त्रौ ॥ मघे । गदे ॥ अलगदे । रक्तरोगे । हरिद्रायाम् ॥ नखौष धौ । नृत्यारम्भे ॥ आयुधे ॥ पुं०स्त्री०कपोलावयवे । कपोला धोभागे ॥ इत्यम । हन० उण् किच्च ।

हनुग्रह : । पुं० हनुस्तम्भाख्ये वात-व्याधौ ॥

हनुमान् । पुं० वायुजे । हनुमति । आञ्जनेये । योगचरे । रामदूते । महावीरे ॥ अतिशयितौ हनू विद्येतेऽस्य । अतिशायने मतुप् ॥

हनुस्तम्भ : । पुं० हनुग्रहे ।

हनू : । स्त्री० हनुशब्दार्थे ॥ ऊङ्प्र

हस्तिचारिणी । स्त्री० महाकरञ्जे ॥

हस्तिचेष्टितम् । न० गजेङ्गिते ॥ तद्यथा । तत्रादौ दन्तकल्पनविधानम् । दन्तस्य मूलपरिधिं द्विरायतं प्रोज्झ्य कल्पयेच्छेषम् । अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् ॥ कल्पितदन्तलक्षणन्तु । श्रीवत्सवर्द्धमानच्छत्रध्वजचामरानुरूपेषु । छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रनष्टदेशाप्तिः । लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः ॥ स्त्रीरूपेऽस्वविनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः । कुम्भेन निधिप्राप्तिर्यात्राविघ्नञ्च दण्डेन ॥
४ ॥ कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम् । गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः ॥
५ ॥ पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत्सुते रक्ते । कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ शुभच्छेदलक्षणन्तु । शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः । गमनस्नानफलानि च दन्तस्य समानि भङ्गेन । अथ शुभाशुभमाह । मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात्ततः । स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम् ॥ अथ विशेषफलमाह । दन्तभङ्गफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम् । वामतः सुतपुरोहितेभयान् हन्ति साटविकदारनायकान् ॥ पुनरपि । आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम् । सौम्यलग्नतिथिभादिभिः शुभं वर्द्धते शुभमतोऽन्यथा भवेत् ॥ दन्तभङ्गविशेषफलमाह । क्षीरमिष्टफलपुष्पपादपेष्वापगातटविघट्टनेन वा । वाममध्यरदभङ्गखण्डने भवत्यनायकाद्(?) नान्यथापरम् ॥ ११ ॥ अथ गजेङ्गितमाह । स्खलितगतिरकस्मात्त्रस्तकर्णोऽतिदीनः श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् । द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो भयकृदहितभक्षी नैकशोऽसृक्शकृत्कृत् ॥ १२ ॥ शुभचेष्टितमाह । वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टिर्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नाम्य चोच्चैः । कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा तत्कालं वा मदाप्तिर्जयकृदथ रदं वेष्टयन् दक्षिणञ्च ॥ प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन्नृपस्य । ग्राहं गृहीत्वोत्तरणं द्विपस्य तोयात् स्थलं वृद्धिकरं नृपस्य ॥ १४ ॥ इति वाराह्यां ९२ऽध्यायः ॥

हस्तिच्छाया । स्त्री० गजच्छायायाम् ॥ कुञ्जरच्छायायाम् ॥

हिन्दोलः । पुं॰ श्रावणशुक्लपक्षविहितभगवद्यात्राविशेषे । दोलयात्रेति प्रसिद्धे । षड्रागान्तर्गतरागविशेषे । यथा । भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः स्मृताः ॥

हिन्दोलकः । पुं॰ यानविशेषे । दोलायाम् । प्रेङ्खायाम् ॥

हिन्दोलनम् । न॰ दोलने ॥

हिन्दोला । स्त्री॰ दोलिकायाम् ॥

हिभुवनम् । न॰ गगनचतुर्भवने ॥

हिम : । पुं॰ चन्दनतरौ ॥ कर्पूरे ॥ चन्द्रे । हेमन्तर्तौ ॥ हिमालयपर्वते । न॰ तुषारे । रजनीजले ॥ तत्पर्यायाः यथा । प्रालेयस्त्वीहा रस्तुषारस्तुहिनं हिमम् । प्रालेयं स्यादिति ॥ चन्दने । नवनीते । मौक्तिके ॥ पद्मकाष्ठे ॥ रङ्गे ॥ शीते ॥ त्रि॰ शीतले ॥ हन्ति । हन॰ । हन्तेर्हिचेति मक् ॥

हिमकः । पुं॰ विकङ्कततरौ ॥

हिमकरः । ) हिमकिरणः । ) पुं॰ चन्द्रे । कर्पूरे

हिमाः करा किरणा यस्य सः ॥

हिमकूटः । पुं॰ शिशिरर्तौ ॥ हिमकदम्बे ॥

हिमगिरिः । पुं॰ हिमालयपर्वते ॥

हिमजः । पुं॰ मैनाकाचले । मेनकापुत्रे । हिमात् जातः । जनी॰ । ड: । टाप् ॥ हिमोद्भवे ॥

हिमजा । स्त्री॰ गौर्याम् । पार्वत्याम् । हिमात् हिमालयात् जाता । जनी॰ । ड: । टाप् ॥ शच्याम् । इन्द्राण्याम् । क्षीरिण्याम् ॥

हिमझटिः । पुं॰ भूमिकायाम् । कुहेलिकायाम् ॥

हिमतैलम् । न॰ कर्पूरतैले ॥

हिमदुग्धा । ) हिमदुग्धिका । ) स्त्री॰ क्षीरिण्याम् ॥

हिमदुर्दिनम् । न॰ पक्षिणि । हिमनिपातेनैव दुर्दिनकारके दिने ॥

हिमद्युतिः । पुं॰ इन्दौ । चन्द्रे ॥ हिमा द्युतिर्यस्य सः ॥

हिमद्रुमः । पुं॰ महानिम्बे ॥

हिमनामा । पुं॰ कर्पूरे ॥ हिमस्य नामान्येव नामान्यस्य ॥

हिमप्रस्थः । पुं॰ हिमगिरौ ॥

हिमवान् । पुं॰ उमागुरौ । नगाधिराजे । हिमालये । यतद्वचन्द्रभागायाः हिमवत्पादनिःसृताः । सतां निषेव्यो हिमवान् योगिनां मनसा यथा ॥ हिममस्त्यस्मिन् । मतुप् । वत्वम् ॥

हिमवत्सुतः । पुं॰ हिरण्यनाभे । मैनाकाचले ॥

हिमवत्सुता । स्त्री॰ उमायाम् ।

हिन्दोल: । पुं॰ श्रावणशुक्लपक्षविहितभगवद्यात्राविशेषे । दोलयात्रेति प्रसिद्धे । षड्रागान्तर्गतरागविशेषे । यथा । भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मेघरागश्च षडेते पुरुषाह्वया इति ॥

हिन्दोलक : । पुं॰ रागविशेषे । दोलायाम् । प्रेङ्खायाम् ॥

हिन्दोलनम् । न॰ दोलने ॥

हिन्दोला । स्त्री॰ दोलिकायाम् ॥

हिबुकम् । न॰ लग्नाच्चतुर्थभवने ॥

हिम : । पुं॰ चन्दनवृक्षे ॥ कर्पूरे ॥ चन्द्रे । हेमन्तर्तौ ॥ हिमालयपर्वते ॥ न॰ तुषारे । रजनीजले ॥ तत्पर्यायो यथा । अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं मिहिकेति ॥ चन्दने । नवनीते ॥ मौक्तिके ॥ पद्मकाष्ठे ॥ रात्रौ ॥ शीते ॥ त्रि॰ शीतले ॥ हमि । घम॰ । हन्तेर्हिचेतिमक् ।

हिमज : । पुं॰ विकङ्कतवृक्षे ॥

हिमकर : । ) हिमकिरण : । ) पुं॰ चन्द्रे । कर्पूरे । हिमाः शीताः किरणा यस्य सः ॥

हिमकूट : । पुं॰ शिशिरर्त्तौ ॥ हिमकदम्बे ॥

हिमगिरि : । पुं॰ हिमालयपर्वते ॥

हिमज : । पुं॰ मैनाकाचले । मेनकापुत्रे । हिमात् जातः । जनी॰ । पञ्चम्यामिति ड : ॥ न॰ ॥ हिमोद्भवे ॥

हिमजा । स्त्री॰ गौर्याम् । पार्वत्याम् । हिमात् हिमालयात् जाता । जनी॰ । ड: । टाप् । शट्याम् । क्षुद्राख्याम् । क्षीरिण्याम् ॥

हिमझटि : । पुं॰ धूमिकायाम् । कुज्झटिकायाम् ॥

हिमतैलम् । न॰ कर्पूरतैले ॥

हिमदुग्धा । ) हिमदुग्धिका । ) स्त्री॰ क्षीरिण्याम् ॥

हिमदुर्दिनम् । न॰ पक्षहिमे । हिमनिपातविनष्टसूर्यकादिने ॥

हिमद्युति : । पुं॰ इन्दौ । चन्द्रे ॥ हिमा द्युतिर्यस्य सः ॥

हिमद्रुम : । पुं॰ महानिम्बे ॥

हिमवाला । पुं॰ कर्पूरे ॥ हिमवालनामान्येवनामान्यस्य ॥

हिमप्रस्थ : । पुं॰ हिमगिरौ ॥

हिमवान् । पुं॰ उमागुरौ । नगाधिराजे । हिमालये । यतद्चन्द्रभागाद्याः हिमवत्पादभिः सृताः । सप्तानिधिर्व्यो हिमवान् भोगिनामालयोऽचल: ॥ हिममस्यास्ति । मतुप् । वत्वम् ॥

हिमवत्सुत : । पुं॰ हिरण्यनाभे । मैनाकाचले ।

हिमवत्सुता । स्त्री॰ उमायाम् ।

हिमावती । स्त्री० स्वर्णक्षीर्याम् ॥ हिममत्त्यस्याः । मतुप् । शरादीनाञ्चेति दीर्घः ॥

हिमाश्रया । स्त्री० स्वर्णजीवन्त्याम् ॥

हिमाह्वयः । पुं० कर्पूरे ॥

हिमिका । स्त्री० दूर्वोपरिपतितहिमे । तुषारशिर ॥

हिमेलुः । त्रि० हिमार्ते । हिमक्लिष्टे ॥ हिमं असहते । हिमाच्चेलुः ॥

हिमोत्तरः । त्रि० शीतले ।

हिमोत्तरा । स्त्री० कपिलद्राक्षायाम् ॥

हिमोत्पन्ना । स्त्री० यावनाल्याम् ॥

हिमोद्भवा । स्त्री० शट्याम् ॥ क्षीरिण्याम् ॥

हिम्याः । पुं० भूमि हिमवतिपर्वते ॥ प्रथमं हिममस्मिन्नस्ति । यन्वे स्वोपिद्धमत्वद्वृतियप् ॥

हिरण्म् । न० रेतसि ॥ स्वर्णे ॥ वराटे ॥ हिरण्मिव वराटे द्रु० हेमचन्द्रः ॥

हिरण्मयः । पुं० सुरज्येष्ठे । ब्रह्मणि । विष्णुरूपि । न० भरतवर्षादिनवखण्डान्तर्गतवर्षविशेषे ॥ त्रि० तैजसीमये ॥ सुवर्णमये ॥ हिरण्यस्य विकारः । मयट् । दाण्डिनायनेति टिलोपो निपात्यते । हिरण्ये० छन्दसि मलोपो निपात्यते । हिरण्यये नस विर्नेतिदर्शनात् ॥

हिरण्यम् । न० रेतसि । द्रव्ये ॥ श्रीरकुम्भे । स्वर्णे ॥ वराटे ॥ अक्षये ॥ मानभेदे । धत्तूरे ॥ रूप्ये ॥ श्वेत पर्वतादुदीच्यांदिशिवर्तमानेवर्षविशेषे ॥ ह्रयति । हर्यपतिकाम्यो : । हर्यतेः कन्यन् हिरस्य ।

हिरण्यकः । पुं० देवदत्तादेर्हिरण्यस्थायाम् ॥ हिरण्येकामः । धन हिरण्य तत्कामयतिकन् ॥

हिरण्यकशिपुः । पुं० कश्यपाद्दित्यांजातदैत्यविशेषे । हिरण्यकशिपुरस्य ॥

हिरण्यकशिपुहा । पुं० विष्णौ ॥

हिरण्यकामधेनुः । स्त्री० षोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरण्यकोषः । पुं० घटिताघटितहेमरूप्ययोः ॥ यथा । हिरण्यकोषाः । कुप्यादि हेमरूप्येकृताकृते० इतिहेमचन्द्रः । अमरस्तु० स्यात्कोषश्च हिरण्यञ्च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यमित्याह ॥

हिरण्यगर्भः । पुं० ब्रह्मणि । लोके शे । चतुराननि ॥ हिरण्यं हिरण्मयमण्डम्० तद्गर्भ इवतद्गर्भं इतिस्यात् । यथाहमनुः । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन्जज्ञे स्वयंब्रह्मा सर्वलोकपितामहइति ॥ यद्वा हिरण्यं हिरण्मयमण्डगर्भोऽस्य ॥ अथवा० हिरण्यं हिरण्मयंसुवर्णं प्रचुरम्० तद्वत्प्रकाशवद्गर्भं ब्रह्मा

